LXXII-LXXIII (1-4)
Joint Edition

JANUARY-DECEMBER 2016
JANUARY-DECEMBER 2017

ISSN 0377-0575



# JOURNAL OF THE GANGANATHA JHA CAMPUS

## Diamond Jubilee Volume

General Editor
**Dr. N. R. Kannan**

Editors
**Prof. Shail Kumari Mishra**
**Prof. Ramkrishna Pandey 'Paramhans'**




Rastriya Sanskrit Sansthan
Ganganath Jha Campus
Allahabad
2018

ISSN 0377-0575

# JOURNAL OF THE GANGANATHA JHA CAMPUS


| | |
|---|---|
| LXXII (1-4) | JANUARY-DECEMBER 2016 |
| & LXXIII (1-4)(Diamond Jubilee Volume) | JANUARY-DECEMBER 2017 |


## हीरक जयन्ती वर्ष विशेषाङ्क


General Editor

**N. R. Kannan**

Editors

**Prof. Shail Kumari Mishra**

**Prof. Ramkrishna Pandey 'Paramhans'**






**Rashtriya Sanskrit Sansthan**

(Deemed University)

Ganganatha Jha Campus

Chandrashekhar Azad Park

Allahabad -211 002

**2018**

डॉ. एन्. आर. कण्णन्
प्राचार्यः
राष्ट्रिय-संस्कृत-संस्थानम्
(मानितविश्वविद्यालयः)
गङ्गानाथझा-परिसरः, इलाहाबाद
भारतशासनस्य-मानव-संसाधन-
विकासमन्त्रालयाधीनः

Dr. N. R. Kannan
Principal
Rashtriya Sanskrit Sansthan
Ganga Nath Jha Campus
Allahabad
Under the Ministry of Human
Resource
Development, Govt. of India.

---

## प्रधानसम्पादकीयम्

विदितमेवेदं सर्वैरपि विद्वद्भिः या च सर्वतो विलक्षणैव शक्तिर्वर्तते संस्कृतभाषायाः। इयं भाषा यथा चिरपुरातनी सनातनी तथैव नवविच्छित्तिं अपूर्वां च कान्तिमाविष्कृत्य वरीवर्तते, इदानीमपि स्वे महिम्नि प्रतिष्ठिता चास्त इति जानन्त्येव सर्वे सुरभारतीसमुपासकाः। साम्प्रतिकेऽस्मिन् समये अस्याः भाषायाः नवोन्मेषः कामपि अभिख्यां तनोति। अनेके तरुणाः तेजस्विनः पण्डिताः प्रकटयन्ति शास्त्रवैभवमस्याः। तथा च कवयन्ति परश्शतं सुकवयः निबन्ध्नन्ति च विविधान् ग्रन्थान् अगणिताः साहित्यरचनानदीष्णाः सरस्वत्याः सुपुत्राः अस्यामेव भाषायाम् । नवनवोन्मेषशालिविरचिते संस्कृतसाहित्ये परिलक्ष्यन्ते नवीनाः प्रवृत्तयः युगबोधः अभिनवा काऽपि चारुता च।

अत्र च राष्ट्रियसंस्कृतसंस्थानस्य वर्तते किमपि विशिष्टमवदानम् । इदं राष्ट्रियसंस्कृतसंस्थानं समग्रे भारतदेशे संस्कृतभाषाप्रचारसाहित्यव्याकरणन्यायशास्त्रादिज्ञानपरम्पराभिवृद्धौ नितान्तं श्रद्धानिष्ठादिपूर्वकं अहर्निशं प्रयतमानं चकास्ति।

अस्य च संस्थानस्य अङ्गभूतेषु द्वादशसु परिसरेषु पवित्रक्षेत्रे तीर्थराजप्रयागक्षेत्रे विद्यमानः गङ्गानाथझापरिसरः विविधसंस्कृतसाहित्यशास्त्रीयग्रन्थप्रकाशनादिपुरस्सरं विविधदुर्लभ-मातृकाग्रन्थपोषणादिव्यवस्थापूर्वकं च संस्कृतप्रचारं कुर्वन् अनुसन्धानैकप्रधानोऽद्वितीयतया विराजते।

अस्मिन् परिसरे प्रतिसंवत्सरमिव अस्मिन्नपि संवत्सरे अस्याः संस्थायाः 'हीरकजयन्ती'-समारोहावसरे भगवतो वेणीमाधवस्याऽनुग्रहेण गङ्गायमुनासरस्वत्यात्मकत्रिवेण्याः कृपापरीवाहेण च (जर्नल्) (Journal) इत्याख्या शोधपत्रिका प्रकाशं नीयमाना सती समेषां विपश्चितां करकमलयोः समुपायनीक्रियते।

अस्यां पत्रिकायां अनेकविद्वद्भिः विविधभाषासु सरसशैल्या गम्भीरतया च तत्तद्विषयविमर्शपूर्वकं विलिख्य दत्ताः निबन्धाः लघुग्रन्थाश्च मुद्रितास्सन्ति। "बहुभ्यः श्रोतव्यम्"

"बहुधा च वक्तव्यम्" "लेखनान्तं पाण्डित्यम्" इत्यादिवचनानुसारं विविधविषयशोधपूर्णेयं पत्रिका अनुसन्धानशीलानां विदुषां हृदयङ्गमा सती शोधच्छात्राणां व्युत्पित्सूनां सामान्यछात्राणां च मार्गदर्शकत्वेन च महान्तमुपकारमादध्यात्।

एतत्पत्रिकाप्रकाशनाय ये च विद्वांसः छात्राश्च निबन्धलेखनद्वारा उपकृतवन्तः तेषां सर्वेषां साधुवादाः वितीर्यन्ते।

एतत्पत्रिकासंपादनार्थमत्यन्तं श्रद्धया संपादन-प्रूफसंशोधन मुद्रणादिव्यवस्थाकार्यं सुष्ठु निर्व्यूढवतीभ्यः संपादिकाभ्यः आचार्यशैलकुमारीमिश्रमहोदयाभ्यः तथा आचार्यरामकृष्णपाण्डेय-'परमहंस'महोदयेभ्यः सम्पादकेभ्यश्च अकपटेन मनसा धन्यवादान् प्रयुञ्जे।

विदुषामाश्रवः
डॉ. एन्. आर. कण्णन्
प्राचार्यः



ISSN 0377-0575

*Journal of the*

.......................................................................................................

# GANGANATH JHA CAMPUS

*(Formerly : Ganganatha Jha Kendriya sanskrit Vidyapeetha and Ganganatha Jha Reserch Institute)*

.......................................................................................................

**A Reserch Journal devoted to Oriental Studies in general and Indological Studies in particular**

.......................................................................................................

**Published by :**

.......................................................................................................

Principal
Rashtriya Sanskrit Sansthan
(Deemed Universitu)
Ganganatha Jha Campus
Chandrashekhar Azad Park
Allahabad-211002 (U.P.)
INDIA

गङ्गानाथप्रसृमरयशश्चन्द्रिकाधौतहर्म्य-
कूजद्विद्वद्विहगनिवहानेकगीताभिरामम्।
काले काले कुसुमितनवान्वेषणाऽऽमोदिताशं
विद्यापीठं जयतु जगतां भूयसे मङ्गलाय।।

# Contents

## [ Volume LXXII & LXXIII (1-4) ]

### I - Sanskrit papers


| | | | |
|---|---|---|---|
| 1. | विशिष्टाद्वैतसिद्धान्तस्वरूपविमर्शः | –डॉ० एन्० आर्० कण्णन् | 01 |
| 2. | अलङ्कारविवेचनायां व्याकरणशास्त्रस्य भूमिका | –प्रो० हरिदत्त शर्मा | 05 |
| 3. | मनुस्मृतौ प्राणिविज्ञानम् | –प्रो० वाचस्पति शर्मा त्रिपाठी | 11 |
| 4. | संस्कृतनीतिसाहित्यं वेदतत्त्वोपबृंहितम् | –डॉ० प्रभुनाथ द्विवेदी | 21 |
| 5. | अश्वमेधयागः – उद्भवो विकासश्च | –प्रो० उमाशङ्कर शर्मा 'ऋषिः' | 35 |
| 6. | दत्तपुत्रविचारः | –प्रो० किशोरचन्द्रमहापात्रः | 41 |
| 7. | शिशुपालवधे ज्यौतिषतत्त्वविमर्शः | –प्रो० बृजेशकुमारशुक्लः | 47 |
| 8. | अभिनवरसविमर्शः | –आचार्यः जि.यस्.आर्. कृष्णमूर्तिः | 61 |
| 9. | संस्कृतजैनपुराणसाहित्यस्य वैशिष्ट्यम् | –प्रो० गङ्गाधरपण्डा | 71 |
| 10. | धर्मशास्त्रं जातीयसंहतिश्च | –प्रो० ललितकुमारसाहुः | 81 |
| 11. | धर्मशास्त्रनिरूपितानि लोककल्याणकराणि मानवमूल्यानि | –प्रो० रामकृष्णपाण्डेयः 'परमहंसः' | 87 |
| 12. | ब्रह्म–पद्म–स्कन्द– नारदीयपुराणेषु जगन्नाथस्वरूपविमर्शः | –प्रो० मिनति रथः | 93 |
| 13. | स्वातन्त्र्योत्तरोत्तरप्रदेशीयसंस्कृतमहाकाव्येषु ध्वनितत्त्वम् | –प्रो० प्रभुनाथद्विवेदी | 103 |
| 14. | द्वादशविधपुत्रास्तेषां दायाधिकारश्च | –डॉ० हिमांशुशेखर त्रिपाठी | 111 |
| 15. | मनुस्मृतिप्रतिपादितार्थागमोपायानां प्रासङ्गिकता | –डॉ० सुधांशुशेखरमहापात्रः | 117 |
| 16. | वैदिकवाङ्मये परिवेशभावना | –डॉ० शिप्रा राय | 121 |
| 17. | आशौचसन्निपातविचारः | –दामोदरमहान्तः | 129 |
| 18. | मनुस्मृतावुद्धिदां विनियोगः | –सौरभमण्डलः | 133 |
| 19. | श्रीमदादिवेङ्कटयोगिविरचिते 'ब्रह्मविन्निधिः' इत्याख्ये ग्रन्थे प्रतिपादिताः मोक्षसाधनविचाराः | – विश्वनाथ हेगड़े | 139 |
| 20. | धर्मशास्त्रस्योपाङ्गत्वविचारः | –डॉ० प्रमोदिनी पण्डा | 145 |

21. कोऽयं प्रतीयमानो नवीनः (ध्वनिविरोधदृष्ट्या विचारः) –अशोकापराख्यः झोपाह्वोदयनाथोपाध्यायशर्म्मा 153

22. नामार्थविवेचनम् –डॉ० सुरेश पाण्डेयः 163

23. विद्युद्भावना –श्रीलालविहारिमिश्रः 169

24. गोव्यक्तिर्वदतोऽब्रवीत् –प्रो० रामकुमार शर्मा 177

## II - Hindi papers

25. काव्य की पूर्णता : अलंकार अथवा व्यङ्ग्यार्थ? –प्रो० अभिराज राजेन्द्र मिश्र 179

26. प्रमाणों से अर्थ का परीक्षण ही न्याय है –डॉ० किशोरनाथ झा 191

27. वाराणसी के जल तीर्थों के अन्तर्गत पुष्कर एवं कुरुक्षेत्र तीर्थ –प्रो० शैलकुमारी मिश्र 209

28. संस्कृत साहित्य में रस निरूपण –प्रो० गिरिजाशङ्कर शास्त्री 217

29. शृङ्गारप्रकाश में उद्धृत 'अभिज्ञानशाकुन्तलम्' के श्लोक एवं उनके सूचितार्थ –प्रो० वसन्तकुमार म० भट्ट 231

30. भारतीय दर्शन में मुक्ति की अवधारणा –डॉ० श्रीरंजनसूरिदेव 241

31. भक्ति का दार्शनिक विवेचन –प्रो० रमाकान्तपाण्डेय 245

32. स्मृतियों में निरूपित 'सामान्य धर्म ' की वर्तमान युग में प्रासङ्गिकता –प्रो० रामकृष्ण पाण्डेय 'परमहंस' 273

33. सौन्दरनन्द महाकाव्य में प्रकरी : एक समीक्षा –प्रो० विभारानी दुबे 281

34. द्वन्द्व से द्वन्द्वातीत के रचनाकार – डॉ० प्रवीण पण्डया –डॉ० मञ्जुलता शर्मा 295

35. उपनिषद् वाङ्मय एवं भक्तिदर्शन –डॉ० अपराजिता मिश्रा 307

36. अयोध्या नगरी का वास्तुशास्त्रीय एवं सांस्कृतिक अध्ययन –डॉ० शैलजा पाण्डेय 317

37. काव्यशास्त्र में शब्दार्थ 'साहित्य' की अवधारणा –डॉ० अपराजिता मिश्रा 323

38. प्रभाव एवं आधुनिक उपादेयता के परिप्रेक्ष्य में पौराणिक दाम्पत्यादर्श –डॉ० विष्णुकान्त त्रिपाठी 333

39. प्राचीन भारतीय राजशास्त्र के पर्याय एवं स्वरूप –डॉ० हिमांशु शेखर त्रिपाठी 345

40. संस्कृत–नाटकों की अभिनेयता का समीक्षात्मक विश्लेषण –डॉ० रश्मि यादव 357

41. रामायणं काव्यबीजं सनातनम् –पूजा मिश्रा 365

42. वैशेषिकदर्शन का अनुबन्धचतुष्टय एवं आद्य वैशेषिकसूत्रचतुष्टय – विविध व्याख्यानपरम्पराओं के आलोक में –प्रो. ललित कुमार त्रिपाठी 373

43. सामान्यविशेषविषयक वैशेषिकसूत्रों एवं तदाश्रित पदार्थमीमांसा का पुनर्विश्लेषण –प्रो. ललित कुमार त्रिपाठी 387

44. अनुसंधान पुस्तकालय : कार्य एवं सेवाएँ –रामरूप 429

45. 'अभिनवकाव्यालङ्कारसूत्रम्' में काव्यस्वरूपनिरूपण –डॉ. अरुण कुमार त्रिपाठी 437

46. पाणिनीय व्याकरणशास्त्र में ह्रस्व अकार के आभ्यन्तर प्रयत्न पर एक विमर्श तथा अवर्ण के विवृत एवं संवृत के आधार पर भेद –प्रो० ललित कुमार त्रिपाठी 447


## III - English papers


47. Whales In Ancient Indian Literature and Culture -K.G. Sheshadri 457

48. Genesis of Vedic education system: Its relevance in modern era -Dr. Shalini Shukla 477

49. Self Learning Materials for Sanskrit Students through Bhattikavya -Dr. Monali Das, -Dr. Aparajita Mishra, -Prof. Lalit Kumar Tripathi 485

50. Commentary Writing Tradition in India -Dr. Monali Das 493

51. Sentential Analysis: Techniques in Ancient Indian Traditions Preeti Shukla, Devanand Shukl 501

## IV - Book Review


1. श्रीशिवमहिम्नःस्तोत्रम्– 'रहस्यप्रकाश' व्याख्यया समलङ्कृतम् –प्रो॰ हरिदत्त शर्मा 519

2. जयदेव–प्रणीतम् श्रीगीतगोविन्दमहाकाव्यम्, महाकविकृष्णदत्तविरचित–हरिहरोभयनिष्ठ– 'गङ्गा'–'शशिलेखा'–व्याख्याद्वयसमलङ्कृतम् –प्रो॰ हरिदत्त शर्मा 521

3. प्रातिशाख्यपारिभाषिक शब्दकोष –डॉ॰ चिरञ्जीवी शर्मा 523

4. सम्बन्धविवेक –प्रो॰ वाचस्पतिशर्मा त्रिपाठी 527

5. डॉ॰ रामकिशोरझा–सम्पादिता श्रीगीतगोविन्दस्य हरिहरोभयपरा टीका –प्रो॰ रहसबिहारी द्विवेदी 529

**V - Our Contributors** 535

**VI - Apendix** (Gairvāṇi-Gaurava-Granthamālā Series 39-40-41)

1. आर्याभेदप्रकाशिका –डॉ॰ अपराजिता मिश्रा 01

2. तुलसीदूतम् –डॉ॰ रामकिशोर झा 01

3. आख्यातविवेकः –प्रो॰ ललित कुमार त्रिपाठी 01




# विशिष्टाद्वैतसिद्धान्तस्वरूपविमर्शः

- डॉ. एन्. आर्. कण्णन्

*(अस्मिन् निबन्धे श्री भगवद्रामानुजाचार्यप्रवर्तितस्य वेदान्तदर्शनस्य (वेदान्तशास्त्रस्य) विशिष्टाद्वैतवेदान्तशब्देन व्यपदेशः (व्यवहारः) कथं क्रियत इति सप्रमाणं न्यरूपि।*

*प्राचीनकालादारभ्य विशिष्टाद्वैतसिद्धान्तस्थापकैः आचार्यैः कस्मिन्-कस्मिन् ग्रन्थे विशिष्टाद्वैतशब्दस्य प्रयोगोऽकारीति च तत्तद्न्थसंदर्भोद्धारपुरस्सरं स विमर्शं प्रादर्शि।*

*अपि च अधुना प्राचीनकालादारभ्य अद्यावधि समाजे मुख्यतया 1 अद्वैतवेदान्तः 2 विशिष्टाद्वैतवेदान्तः 3 द्वैतवेदान्तश्चेति वेदान्तशास्त्रस्य विभागो व्यवहारश्च त्रेधा दरीदृश्यते। तत्र-चिदचिद्विशिष्टं ब्रह्म अद्वैतम् एकम्, स्वसजातीयद्वितीयरहितमिति विशिष्टाद्वैतमित्यस्यार्थ इति विशिष्टाद्वैतशब्दव्युत्पत्तिरपि प्रत्यपादि। तथा श्रीशाङ्करादिदर्शनापेक्षया भगवद्रामानुजाचार्य-दर्शनस्य वैलक्षण्यं स्फुटतया प्रतीयत इति सविमर्शं विवेचितम् वर्तते। अन्ते च चेतनाचेतनविशिष्टं ब्रह्म अद्वैतम्, अर्थात् एकमेवेति विविधश्रुतिप्रमाणप्रदर्शनपूर्वकम् विद्वद्धृदयंगमशैल्या विशिष्टाद्वैतसिद्धान्तस्य स्वरूपम् विमृष्टमिति सारांशो विद्वद्भिरवधेयः।)*

अशेषचिदचिद्वस्तुदेहिनं सद्गुणार्णवम्।
प्रपन्नार्तिहरं वन्दे वेंकटाचलनायकम्।।

इह तावल्लोके जन्मप्राप्तवद्भिः सर्वैरपि मानवैः जन्मसफलतायै तत्त्वहितपुरुषार्थविषयकं प्रमात्मकं ज्ञानमवश्यं सम्पादनीयम्। तत्र च वेदान्तपदवाच्या उपनिषद एवासाधारणसाधनतामधिगच्छन्ति। उपनिषदामर्थाश्च समुचितन्यायसाहाय्यं विना न निर्णेतुं शक्या इति तदर्थनिर्णयौपयिकन्याय-निबन्धनरूपाणि ब्रह्मसूत्राणि प्रणिनाय भगवान् बादरायणः। सत्यामप्यस्यां ब्रह्ममीमांसापरपर्यायायां ब्रह्मसूत्राख्यायामितिकर्तव्यतायां व्याख्यातॄणां मतिगतिभेदेन मतभेदा विविधाः प्रादुरभूवन्। तथा हि- केच्चिदचिदीश्वरात्मकतया स्थिते तत्त्वत्रये चिदाख्यस्य जीवस्येश्वरेणानन्यत्वमचितो जडप्रपञ्चस्य मिथ्यात्वं चातिष्ठमाना अद्वैतमेव शास्त्रप्रमेयमिति प्रतिपन्नाः शंकरादयः। अन्ये भास्करादय इदमद्वैतं बहुदोषमित्युदीरयन्तो भेदाभेदवादमातिष्ठन्ते। यादवप्रकाशादयस्तु परं ब्रह्मैव चिदचिदीश्वरात्मना परिणमतीति पक्षान्तरमुपक्षिपन्ति। अत्र सर्वत्र प्रमाणपदवीदविष्ठतां प्रतिष्ठितामवधारन्यतो रामानुजीयाः जीव-जडप्रपञ्च-परमात्मरूपाणि चिदचिदीश्वरापराभिधानानि त्रीणि तत्त्वानि, तेषां परस्परभेदं च पारमार्थिकमभ्युपगच्छन्तः, चिदचितोः नियमेनेश्वर-

धार्यत्वेश्वरनियाम्यत्वेश्वरशेषत्वैरीश्वरशरीरत्वं सप्रमाणं निरूपयन्तः। अत एव आभ्यां द्वाभ्यां चिदचिद्भ्यां सर्वास्वप्यवस्थासु स्वापृथक्सिद्धत्वरूपस्वविशेषणत्वेनैव वर्तमानाभ्यां विशिष्ट ईश्वर एकं तत्त्वमित्युपपादयन्तः, एवं सत्येवेकत्ववादिन्यः पृथक्त्ववादिन्य ईश्वरस्य सर्वात्मत्ववादिन्य इतीमाः सर्वाः श्रुतयः समञ्जसा भवन्तीति प्रदर्शयन्ति।

श्रुतिप्रतिपन्नमेकत्वं यथा न हातुं शक्यं तथैव तत्प्रतिपन्नं प्रत्यक्षादिप्रमाणान्तरप्रतिपन्नं पृथक्त्वमपि। न च विरुद्धमिदमुभयमेकत्र संभवति, तत्कथमिदं घटतामिति संदेहे भगवती श्रुतिरेवेश्वरस्यात्मत्वं तदतिरिक्तस्य चेतनाचेतनात्मकस्य सर्वस्य वस्तुनः तच्छरीरत्वं च बोधयन्ती निर्णयं संपादयति। चिदचिदीश्वराणां तत्त्वानां स्वरूपगतं पृथक्त्वम्, चिदचिद्विशिष्टेश्वरगतमेकत्वमिति क्व विरोधः। एकत्वमद्वैतमिति पर्यायशब्दौ। तेन विशिष्टैक्यमित्यर्थे विशिष्टाद्वैतमिति शब्दप्रयोगः। विशिष्टाद्वैतमित्यत्र विशिष्टस्य अद्वैतमिति षष्ठीतत्पुरुषः। अद्वैतमित्यस्य विशिष्टानन्तर्गत-वस्त्वन्तरराहित्यमित्यर्थः। तथा च चिदचिद्विशिष्टस्य ब्रह्मणः स्वाविशेषणीभूतवस्त्वन्तरराहित्यमिति विशिष्टाद्वैतशब्दार्थः। अथ वा विशिष्टं च तदद्वैतं च विशिष्टाद्वैतमिति कर्मधारयः। अद्वैतशब्दस्य 'न विद्यते द्विता = द्वैतं यस्य तत्' इति व्युत्पत्त्या एकमित्यर्थः। एकमित्यस्यापि सजातीयद्वितीय-रहितमित्यर्थः। साजात्यं च चिदचिद्विशिष्टत्वेन। तथा च-चिदचिद्विशिष्टं ब्रह्म स्वसजातीयद्वितीय-रहितमिति विशिष्टाद्वैतमित्यस्यार्थः। सर्वमिदं मनसीकृत्यैव श्रीमद्वेदान्तदेशिकैः न्यायसिद्धाञ्जने-**'अशेषचिदचित्प्रकारकं ब्रह्मैकमेव तत्त्वम्'** इत्यभाणि। तत्र ह्यशेषचिदचित्प्रकारकं ब्रह्मेत्यनेन विशिष्टशब्दार्थ उक्तः, एकमित्यनेनाद्वैतशब्दार्थ इति महान्तो व्याख्यातार उपपादयन्ति। एतेन विशिष्टं चेत् कथमेकम्? एकञ्चेत् कथं विशिष्टम्? इत्यादिकुचोद्यानां नावसरः। एकशब्दार्थाज्ञान-निबन्धनत्वात्तादृशचोद्यस्येति।

## विशिष्टाद्वैतनाम्न औचित्यम्

यद्यपि विशिष्टाद्वैतिनोऽपि द्वैतिन एव, वेदार्थसंग्रहव्याख्यायां सुदर्शनसूरिभिः भेद एव सिद्धान्तः। अभेदश्रुतीनां विशिष्टैक्यविषयकतया निर्वाह इति प्रतिपादितत्वात्। तथापि तार्किकादीनां बहूनां द्वैतवादिनां सद्भावात् तदपेक्षया रामानुजमते इतरद्वैतवाद्यनभ्युपगतं सिद्धान्तमादाय मतस्य नामकरणमुचितमिति मन्वानैः प्राक्तनैरेव रामानुजसिद्धान्तस्य विशिष्टाद्वैतमिति नाम कृतम्। तथाहि 'श्रीभाष्यकारसमकालिकश्रीवत्साङ्कमिश्रपुत्रैः पराशरभट्टार्यैः सहस्रनामभाष्ये 'सः' इति नाम्नो विवरणावसरे-

**''सिद्धान्तिते विशिष्टाद्वैते विभूतिभूतेष्वेषु आकुमारमखिलप्रसिद्धया स्वविषयं ज्ञानं स्यति = अन्तयति निश्चयीकरोतीति सः''**

इति कथितम्। तथा सर्वतन्त्रस्वतन्त्रैः वेदान्तदेशिकैः श्रीपाञ्चरात्ररक्षायाम् -

**'यत्पुनरिह योगदशायां तादात्म्यभावनमुपदिश्यते......... अत्र न स्वरूपैक्यादिकं विवक्षितम्। शरीरशरीरिणोः जीवात्मपरमात्मनोः शारीरकसमर्थितप्रकारेणा-**

**विरुद्धस्यानुकूलतर्कशालिनः ''तत्स्थत्वादनुपश्यन्ति ह्येक एवेति साधवः'' इत्युपबृंहणशतसुस्थितस्य 'अवस्थितेरिति काशकृत्स्नः' इति सूत्रितस्य विशिष्टाद्वैतस्य विवक्षितत्वात्'**

**श्रीभाष्यकारो रामानुजाचार्यः**

इत्यभिहितम्। एतेन। यतीन्द्रमतदीपिकाकर्तुः प्राचीनैराचार्यैः विशिष्टाद्वैतनाम न निर्दिष्टमिति शङ्काया नावसरः। अपि चाद्वैतमिति नामापि शांकरमतस्य न प्राचीनम् , इतरथा सर्वदर्शनसंग्रहे शांकरदर्शनमिति कुतो निरदिशन् इति प्रश्ने किं समाधानमित्यालोचनीयं विद्वद्भिः।

## ऐक्यवादस्य बहुप्रकारता

भेदाभेदवादः पापीयानिति मतान्तरं दूषयतां श्रीभाष्यकाराणां मते ययोर्वस्तुनोर्भेदः तयोरेवाभेदोऽपि न कथमपि घटत इति जगत्पदेन जगन्मात्रग्रहणे ब्रह्मपदेन च परमात्ममात्रग्रहणे उभयोरैक्यमसंभावितमेव। अतः 'सर्वं खल्विदं ब्रह्म' इत्यादावैक्यव्यपदेशः कथमिति जिज्ञासायां भेदाविरोधेन बहुभिः प्रकारैरैक्यमुपपादयन्ति विशिष्टाद्वैतिनः। तथा हि श्रुतिष्वैक्यवादो बहुप्रकारोऽस्ति (1) ब्रह्मैकमेवेति (2) ब्रह्मैवास्ति नान्यदिति (3) जीवानामैक्यमिति (4) जगद्ब्रह्मैक्यमिति (5) जीवब्रह्मैक्यमिति च। तत्रादिमे अनेकब्रह्मव्यक्तिनिषेधमात्रम्। जन्माद्यधिकरणे ब्रह्मबहुत्वप्रसङ्गमुद्भाव्य तदैक्यं स्थापितमत्र स्मर्तव्यम्। द्वितीये सर्वस्यापि वस्तुनो ब्रह्मविशेषणतया ब्रह्मान्तर्गतत्वेन चैत्र एक एवात्रास्तीति वाक्ये चैत्रविशेषणीभूतवस्त्रयज्ञोपवीताद्यनिषेधेन चैत्रातिरिक्तमनुष्यनिषेधवत् ब्रह्मातिरिक्तस्वतन्त्रवस्तुनिषेधमात्रमिति न प्रामाणिकजगदपह्नवः संभवति। अन्यादिशब्दानां सदृशान्ययपरत्वं लोकव्याकरणमीमांसादिप्रसिद्धमत्र स्मर्तव्यम्। तृतीये ज्ञानत्वरूपप्रकारस्य सर्वेषु जीवेष्वेकत्वादैक्यव्यवहारः। चतुर्थपञ्चमयोर्ब्रह्मणः चेतनाचेतनैक्यप्रतिपादकेषु 'सर्वं खल्विदं ब्रह्म'। तत्त्वमसि' इत्यादिवाक्येषु जगद्वाचिनां जीववाचिनां च शब्दानां तद्विशिष्टब्रह्माभिधायकतया विशिष्टैक्यपरतया निर्वाहः।

## निर्णयः

अत्रेदं तत्त्वम्। 'भोक्ता योग्यं प्रेरितारं च मत्त्वा।' 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' इत्यादिकानि बहूनि श्रुतिवाक्यानि जीवप्रपञ्चेश्वराणां परस्परभेदं वदन्ति। 'सर्वं खल्विदं ब्रह्म' 'आकाशो ब्रह्म' 'अयमात्मा ब्रह्म' 'तत्त्वमसि' इत्यादीनि समानाधिकरणवाक्यानि जीवब्रह्मणोः प्रपञ्चः ब्रह्मणोश्चैक्यं प्रतिपादयन्ति। तत्र भेदश्रुतयः प्रत्यक्षादिसिद्धं भेदं निषेधार्थमनुवदति। ऐक्यश्रुतयः निर्विशेषब्रह्मतात्पर्यवत्य इत्यद्वैतिनो निर्वहन्ति। भेदश्रुतयः वास्तवभेदपराः, अभेदश्रुतयः राजा राष्ट्रमितिवदौपचारिक्य इति द्वैतिनः। विशिष्टाद्वैतिनस्तु भेदश्रुतयः वास्तवभेदपराः। अभेदश्रुतयस्तु विशिष्टैक्यपराः। तथा हि- 'यस्य पृथिवी शरीरम् ' 'यस्यात्मा शरीरम् ' इत्यादिश्रुतिवचनैः चेतनानामचेतनानां च परमात्मानं प्रति शरीरत्वाभिधानात् शरीरवाचिनां च शब्दानां देवदत्तो जानातीत्यादौ शरीर्यात्मपर्यन्तवाचकतायाः दर्शनात् 'सर्वं खल्विदं ब्रह्म' इत्यत्र सर्वपदस्य

सर्वशरीरकमित्यर्थः (सर्वविशिष्टम् ) 'तत्त्वमसि' इत्यत्र त्वं पदस्य जीवविशिष्टं = जीवशरीरकमित्यर्थः। तथा च ब्रह्म जीवशरीरकमथवा जीवविशिष्टमिति वाक्यार्थः। द्वैतिनां मते

(1)यतीन्द्रमतदीपिकायां तु प्रारम्भ एवं "श्रीमन्नारायण एवं चिदचिद्विशिष्टाद्वैतं तत्त्वम् इति प्रत्यपादि।

किन्तु जीवो ब्रह्माधीन इत्यर्थः, राजा राष्ट्रम् इत्यत्र राजाधीनं राष्ट्रमितिवत्। समानाधिकरणवाक्यस्थले विशिष्टैक्यपरतया निर्वाहस्येतरैरनभ्युपगतस्य रामानुजीयैरङ्गीकारादेव विशिष्टाद्वैतमिति नाम संजातम्। इदं नाम प्राचीनं वास्तु नवीनं वा तदर्थस्तु प्राक्तनग्रन्थारूढ इति का क्षतिः? स शब्द श्रुतिषु स्मृत्यादिषु चास्तु मा वा, तावता सिद्धान्तस्य का क्षतिः? विवर्तशब्दः श्रुतौ न दृश्यते, तावता विवर्तवादस्य न हि निर्मूलता। सर्वमेतदभिसन्धाय वेदान्तदेशिकैरुक्तं संकल्पसूर्योदये-

**मिथो भेदं तत्त्वेष्वभिलषति भेदश्रुतिरहो**
**विशिष्टैक्यादैक्यश्रुतिरपि च सार्था भगवती।**
**इमावर्थौ गोप्तुं सकलजगदन्तर्यमयिता**
**निरीशो लक्ष्मीशः श्रुतिभिरपराभिः प्रणिदधे।। इति।।**

इमावर्थौ- भेदाभेदरूपावर्थावविरोधेन रक्षितुमपराभिः श्रुतिभिः- 'यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति एष च आत्मान्तर्याम्यमृतः' इत्यादिभिः जगद् ब्रह्मणोः शरीरात्मभावप्रतिपादिकाभिः श्रुतिभिः सकलजगदन्तर्यन्ता नारायणः प्रणिदधे = सावधानमभिहित इत्यर्थः। विस्तरभयात् संग्रहेण सर्वमुपक्षिप्तम्। समयान्तरे सविस्तरं सर्वमुपपादयिष्याम इति शम्।



1. श्रीभाष्यकारो रामानुजाचार्यः।
2. यतीन्द्रमतदीपिकायान्तु प्रारम्भ एव "श्रीमन्नारायण एव चिदचिद्विशिष्टाद्वैतं तत्त्वम् इति प्रत्यपादि।

# अलङ्कारविवेचनायां व्याकरणशास्त्रस्य भूमिका

- प्रो. हरिदत्त शर्मा

*(व्याकरण शास्त्र सभी शास्त्रों का मूल कहा जाता है। व्याकरण के बिना किसी भी शास्त्रीय विषयों की सार्थक अभिव्यक्ति नहीं हो सकती। अन्य शास्त्रों की भाँति काव्यशास्त्रीय विषयों के विमर्श में भी व्याकरण की महती भूमिका होती है। प्रस्तुत लेख का विषय है- 'अलंकारों की विवेचना में व्याकरण शास्त्र की भूमिका।' काव्य शास्त्र में जैसे- शब्दशक्ति विचार, रस निष्पति, ध्वनि लक्षण विर्मश, काव्यभेद विचार, काव्यगत गुण-दोष समीक्षा में व्याकरण शास्त्रीय विवेचन की अपेक्षा होती है उसी प्रकार शब्दालङ्कारों तथा अर्थालंकारों में भी शब्दशास्त्र की भूमिका अनिवार्यतया सिद्ध है। क्योंकि व्याकरण की सहायता के बिना अलंकारों का अस्तित्व ही नहीं स्थापित हो सकता। प्रस्तुत शोध पत्र में अलंकारों के लक्षणों एवं उदाहरणों में व्याकरण शास्त्र की भूमिका की विस्तृत चर्चा की गई है।)*

व्याकरणं नाम मूलं सर्वविद्यानाम्। शब्दशास्त्ररूपत्वेन व्याकरणं समेषामन्येषां शास्त्राणाम् आधारशिलारूपम्। यथा संस्कृतकाव्यशास्त्रे शब्दशक्तिविचारणासन्दर्भे, रसनिष्पत्तिप्रसङ्गे, ध्वनिलक्षणविमर्शे, काव्यभेदविचारावसरे, काव्यगुण-दोष-समीक्षणे बहुत्र व्याकरणशास्त्रस्य विषयविवेचनमपेक्ष्यते, तथैव विविधालङ्कार-विचारचर्चायामपि व्याकरणशास्त्रस्य भूमिका सुष्ठु सिध्यति। शब्दालङ्कारा भवन्तु अर्थालङ्कारा वा, यत्रापि व्याकरणस्य मूलत्वम्, तत्र तद्विना अलङ्कारस्य अस्तित्वमेव न स्थापयितुं शक्यते। क्वचिल्लक्षणेषु क्वचिच्चोदाहरणेषु शब्दशास्त्रस्य सत्ता स्फुटं लक्ष्यते।

यथा स्वयमलङ्कारशब्दः 'अलङ्करोति इत्यलङ्कारः' इति व्याकरणगतव्युत्पत्त्या सिद्धः, तथैव शब्दालङ्कारेषु प्रथमः 'अनुप्रासालङ्कारः' अनु-अनुगतः, प्र-प्रकृष्टरूपेण, आसः-न्यासः इति त्रयाणां शब्दानां संयोगेन निष्पद्यते, यथोक्तमाचार्येण मम्मटेन-

"रसाद्यनुगतः प्रकृष्टो न्यासोऽनुप्रासः"[1]

अर्थालाङ्कारेष्वप्यनेके सार्थकव्युत्पत्तिसिद्धा योगरूढशब्दाः, यथा तेषु प्रथमोऽलङ्कार 'उपमा' उपपूर्वकाद् 'माङ् माने' इति जोहोत्यादिकान् माधातोः ' आतश्चोपसर्गे इति पाणिनिसूत्रेण करणे अङ्प्रत्यये कृते निष्पद्यते, उप मीयते अनयेत्युपमा इति विग्रहेण, यथोक्तम् - **"उप समीपे मीयते परिच्छिद्यते ( उपमानेन कर्त्रा उपमेयं कर्म ) अनयेत्युपमा।"**[2] उपमावत् उत्प्रेक्षाशब्दोऽपि उत् प्र ईक्षाचेति त्रयाणां शब्दानां समवायेन सङ्घटते, यस्य व्युत्पत्तिलभ्योऽर्थः

व्याख्यातो यथा- "उत्कटा, प्रकृष्टस्योपमानस्य, ईक्षा ज्ञानमुत्प्रेक्षापदार्थः।"[3] अनेनैव विधिना अनन्वय-रूपक-तुल्ययोगिता -प्रतिवस्तूपमार्थान्तरन्यासादीनामलङ्काराणां सत्ता व्याकरणगतव्युत्पत्त्यपेक्षयैव सिध्यति।

संस्कृत -काव्यशास्त्रीयेषु ग्रन्थेषु शब्दालङ्काराणां यान्युदाहरणान्युदाह्रियन्ते, तत्र प्रायेण व्याकरणनियमानुपालनेनैव शब्दपरिवृत्त्यसहत्वम्, अत एव अलङ्कारविशेषस्यास्तित्वं सिध्यति। यथा वक्रोक्त्यालङ्कारस्य श्लेषरूपा द्व्यर्थकता व्याकरणनियमानुसारं विग्रहभेदेन सिध्यति- पद्यांशेऽत्र- 'वामानां प्रियमादधाति हितकृन्नैवाबलानां भवान्'[4] वस्तुतः प्रथमपक्षे वक्तुराशयो यद् भवान् अबलानां 'हितकृत्' - हितं करोतीति रूपेण, परन्तु श्रोता तस्य वाक्यमन्यथा योजयति अबलानां 'हितकृतः' -हितं कृन्ततीत्यर्थे। अत्र वक्रोक्तिचमत्कारस्य प्राणधारणं व्याकरणसिद्धधातुप्रयोगवैभिन्येनैव सम्भवति। तथैव 'सामर्थ्यकृदमित्राणां मित्राणाञ्च नृपात्मजः[5] इति प्रकृतिश्लेषोदाहरणे 'सामर्थ्यं करोतीति सामर्थ्यकृत्' मित्रपक्षे, पुनः 'सामर्थ्यं कृन्ततीति सामर्थ्यकृत्' अमित्रपक्षे सङ्गच्छते। अत्रापि 'डुकृञ् करणे' 'कृती छेदने' चेति धातुद्वयस्य प्रयोगभेदेनात्र श्लेषत्वं सम्पाद्यते। लाटानुप्रासालङ्कारेऽपि समासविषयकं यन्नियोजनं विधीयते तदपि व्याकरणगतमेव 'वृत्तावन्यत्र तत्र वा। नाम्नः स वृत्त्यवृत्त्योश्च'।[6]

**सितकरकररुचिरविभा विभाकराकार! धरणिधर! कीर्तिः।**
**पौरुषकमला कमला साऽपि तवैवास्ति नान्यस्य।।**[7]

इत्यस्मिन् उदाहरणे एकस्मिन् समासे, भिन्ने वा समासे, समासासमासयोर्वा प्रातिपदिकस्य यत् सारूप्यं भवति तल्लाटानुप्रासे कारकतत्त्वम्। यमकालङ्कारस्य सर्वेष्वेव भेदेषु यान्युदाहरणानि सम्भवन्ति, तेषां द्व्यर्थकता व्याकरणाश्रयेणैव चरितार्था भवति, यथाऽधोलिखिते पद्ये कठिनशब्दबन्धे -

**ससार साकं दर्पेण कन्दर्पेण ससारसा।**
**शरन्नवाना बिभ्राणा नाविभ्राणा शरन्नवा।।**[8]

अत्र प्रथमं 'ससार' इति सृधातोः परोक्षे लिटि रूपम्, परन्तु ससारसा' इति शब्दे 'सारसैः सह विद्यते या सा' इति बिग्रहः। 'दर्पेण', 'कन्दर्पेण' इति पदयोः भिन्नार्थकत्वं स्पष्टम्। पुनः 'नवाना' इति पदे 'नवम् अनं शकटं यस्याः सा' इति विग्रहः, शरं काशं बिभ्राणा धारयन्ती, नाविभ्राणा- 'वीनां पक्षिणां भ्राणं शब्दः यस्यां सा विभ्राणा, न विभ्राणा अविभ्राणा (नञ् समासः), पक्षिशब्दरहिता, न अविभ्राणा नाविभ्राणा-पक्षिकोलाहलयुक्ता, ईदृशी नवाशरत् दर्पेण कन्दर्पेण साकं ससार' इति शब्दानां बहुविधाभिर्जटिलाभिर्व्याकृतिभिः अर्थावगमानन्तरं यमकालङ्कार-सिद्धिर्भवतीति केवलं व्याकरणस्यैव बलम्।

श्लेषालङ्कास्य तु वर्णश्लेष-पदश्लेष-लिङ्गश्लेश-भाषाश्लेष-प्रकृतिश्लेष-प्रत्ययश्लेष-विभक्तिश्लेष-वचनश्लेषरूपाणि अष्टावेव प्रकाराणि व्याकरणमाधारीकृत्य एव प्रवर्तन्ते। यथा 'पृथुकार्तस्वरपात्रम्' इत्यादिपदश्लेषोदाहरणे एकतो राज्ञः पक्षे, अपरतश्च भिक्षुकस्य पक्षे समतास्थापकोऽर्थः श्लिष्टपदानां विग्रहभेदाद् भवति। लिङ्गश्लेषो वचनश्लेषो वा केवलं व्याकरणगतवैचित्र्यमेव दर्शयति, यथा युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः'[9] इत्यस्मिन्

पद्ये सर्वाणि विशेषणानि 'नेत्रे'-विशेष्येण सङ्गतानि नपुंसकलिङ्ग- द्विवचनान्तानि तथा 'तनुः' विशेष्येण सङ्गतानि स्त्रीलिङ्गैकवचनान्तानि मन्यन्ते इत्यहो संस्कृतभाषाव्याकरणवैशिष्ट्यम्। तथैव प्रत्ययश्लेषस्योदाहरणभूते **'दहमुचितरुचिः स्यान्नन्दिता सा तथा मे'**[10] इत्यादिपद्ये द्विविधः सन्धिच्छेदो भवति-'स्यात् नन्दिता' 'स्याम् नन्दिता' चेति। 'अहं नन्दिता स्याम्, 'सा मे नन्दिता स्यात्' इत्युत्तमपुरूष-प्रथमपुरूषयोः प्रत्ययभागमात्रभेदः। 'नन्दकः स्याम्' इत्यर्थस्य पक्षे कृत्संज्ञकः तृच्प्रत्ययः, पुनः 'नन्दिता स्यात्' इत्यर्थस्य पक्षे 'नन्दिनो भावः नन्दिता' इति विग्रहे तद्धितमतस्तल्प्रत्ययः। अतो वैयाकरणप्रयोगोऽयम्। विभक्तिश्लेषस्य उदाहरणमपि पूर्णतया व्याकरणेनानुप्राणितं वर्तते, यथा-

**सर्वस्वं हर सर्वस्य त्वं भवच्छेदतत्परः।**
**नयोपकारसांमुख्यमायासि तनुवर्तनम्।।**[11]

अस्मिन् पद्ये संस्कृत-व्याकरणचमत्कार-प्रभावात् शिवभक्तेन कृता शिववन्दनेयं सुप् -तिङ् - विभक्ति - विपरिवर्तनेन दस्युकर्मपरकोपदेशरूपेण परिणमते। शिवप्रार्थनापक्षे हर-भवशब्दौ सुब्विभक्तौ प्रयुक्तौ, परन्तु दस्युपरकोपदेशपक्षे तिङ् विभक्तिरूपेण प्रयुज्येते। तथैव शिवप्रार्थनापक्षे नय-तनु-शब्दौ सुविभक्तिरूपौ आयासि शब्दश्च तिङ् रूपः, किन्तु दस्यूपदेशपक्षे नय-तनुशब्दौ तिङ्विभक्तिरूपौ आयासि-शब्दश्च सुप्रूपः। अतोऽत्र विभक्तिभेदेन शब्दभेदः, शब्दभेदेन चार्थभेदः। अतः श्लेषस्य सिद्धिः केवलं व्याकरणगत-शब्दस्वरूप-परिवर्तनेन जायते। अनेनैव विधिना-

**स्वयं च पल्लवाताम्रभास्वत्करविराजिता।**
**प्रभातसन्ध्येवास्वापफललुब्धे हितप्रदा।।**[12]

इत्यस्मिन् श्लोके अभङ्गश्लेषः सभङ्गश्लेषश्चेति द्वावपि श्लेषभेदौ तदैव चरितार्थतां गच्छतो यदा पार्वती -प्रभातसन्ध्ययोरुभयोः पक्षे प्रयुक्ता द्व्यर्थकाः शब्दा भिन्न-भिन्न-समास-विग्रह-द्वारा प्रकटीक्रियन्ते। अतः शब्दालङ्कारप्रयोगेषु शब्दशास्त्रस्य व्याकरणस्य प्रभूतमपरिहार्यञ्च योगदानं परिलक्ष्यते।

वयमवलोकयामो यदर्थालङ्कारविवेचनेष्वपि बहुत्र व्याकरणशास्त्रस्यावलम्बनं गृहीत्वैव अग्रेसरणं भवति। समग्रोऽपि अलङ्कारविस्तारः, विशेषेण, उपमाप्रपञ्चः पूर्णतया व्याकरणमाश्रित्य तिष्ठति। काव्यप्रकाशे मम्मटाचार्यः पूर्णोपमायाः श्रौत्यार्थीरूपं भेदद्वयं व्याकरणमाधृत्य एव विधत्ते। यथादिसाम्यबोधकशब्दानां प्रयोगे श्रौती, तुल्यादिशब्दानां प्रयोगे चार्थी इत्यतीव सूक्ष्मभेदस्तेन प्रकल्पितः, यथा स प्रतिपादयति-

"यथेववादिशब्दा यत्परास्तस्यैवोपमानताप्रतीतिरिति यद्यप्युपमानविशेषणान्येते, तथापि शब्दशक्तिमहिम्ना श्रुत्यैव षष्ठीवत् सम्बन्धं प्रतिपादयन्तीति तत्सद्भावे श्रौती उपमा। ..........साम्यपर्यालोचनया तुल्यताप्रतीतिरिति साधर्म्यस्यार्थत्वात् तुल्यादिशब्दोपादाने आर्थी।"[13]

अत्र श्रौत्यार्थी -भेदावबोधनाय षष्ठीविभक्तिमाध्यमेन आचार्येण व्याकरणशास्त्रसाहाय्यमेव गृहीतम्। तस्य सुस्पष्टं व्याख्यानं कृतं वामनाचार्येण झलकीकरेण-"राज्ञो राज्यम्' इत्यादौ स्वप्रकृत्य-

नन्तरमुपात्ता षष्ठी विभक्तिः स्वप्रकृत्यर्थे राजनि स्वामित्वं प्रत्याययन्ती तद्विशेषणं भवन्त्यपि यथा राज-राज्ययोः स्वस्वामिभावसम्बन्धं प्रत्याययति तथा, उपमाने, उपमानतां प्रत्याययन्तोऽपि यथेववादिशब्दाः, उपमानोपमेययोः साधर्म्याख्यसम्बन्धं (साधारणधर्मसम्बन्धं) श्रवणमात्रेणोप-स्थापयन्त्येव शब्दशक्तिस्वाभाव्यात्। तथा च यथेववादिशब्दानां साधर्म्य-सम्बन्धवाचकत्वं तत्सद्भावे, उपमायाः श्रौतत्वं चोपपन्नमिति।"[14]

उपमायाः श्रौत्यार्थीरूपौ भेदौ पुनर्वाक्यगा-समासगा-तद्धितगा-भेदेन त्रिधा विभज्येते, तत्रापि व्याकरणमेव कारणम्। पुनः श्रौत्यार्थीरूपयोर्भेदयोः तद्धितगा-नामानौ भेदौ समग्ररूपेण अष्टाध्यायीसूत्रयोराधारमासाद्य प्रभवतः। प्रथमं तद्धितगा श्रौती 'तत्र तस्येव' इति सूत्रेण इवार्थे विहितस्य वतिप्रत्ययस्य उपादाने भवति। गुणद्रव्यादीनां साम्ये उपमा सप्तम्यन्तेन षष्ठ्यन्तेन वा शब्देन सह वतिप्रत्ययविधाने भवति, यथा 'मथुरावत् पाटलिपुत्रे प्राकारः' इत्यत्र 'मथुरायामिव' इति सप्तम्यतेव वतिप्रत्यये जाते द्रव्यसादृश्ये 'मथुरावत्' इति प्रयोगो निष्पन्नः। तथैव 'मथुरावत् पाटलिपुत्रस्य विस्तारः' इत्यत्र विस्ताररूप-गुणसादृश्ये 'मथुराया इव' षष्ठ्यन्तेन वतिप्रत्यये सति 'मथुरावत् इति प्रयोगो निष्पन्नः। व्याकरणज्ञान-सूक्ष्मेक्षिकयैव अलङ्कारप्रयोगवैशिष्ट्यमिदं निरीक्षितुं शक्यते। पुनस्तद्धितगा आर्थी चोपमा 'तेन तुल्यं क्रिया चेद्वतिः' इति सूत्रेण क्रियामात्रसाम्ये तृतीयान्तपदेन भवति। अयमेवानयोर्व्याकरणगतविशेषः। इवशब्दप्रयोगे नूनं व्याकरणगतवैशिष्ट्यम्। यतो हि 'इवेन नित्यसमासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' इति नियमेन नित्यसमासे इवशब्दयोगे समासगा उपमा भवति। अतः शब्दशक्तिवैचित्र्येण व्याकरणगत सूक्ष्मप्रभावेण चायं पूर्णोपमाविभागः प्रकल्प्यते। पाणिनिना उपमालङ्कार-प्रपञ्चविशदीकरणे अन्यान्यपि सूत्राणि रचितानि यथा 'चन्द्रेण तुल्यं सुन्दरं मुखम्' इत्यत्र साधारणधर्मप्रयोगे 'उपमानानि सामान्यवचनैः' इति सूत्रं प्रयुज्यते, परन्तु 'पुरुषव्याघ्रः' इति साधारणधर्मप्रयोगशून्ये स्थले 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति सूत्रेण उपमानोत्तरकर्मधारयसमासो जायते। यथोपमालङ्कारे सूत्राणीमानि विधेयकानि, तथैव अभेदारोपरूपे रूपकालङ्कारे आधारभूतं सूत्रं वर्तते 'मयूरव्यंसकादयश्च', येन तत्पुरूषसमासविघानं भवति।

यथा पूर्णोपमालङ्कारे तथैव लुप्तोपमालङ्कारेऽपि व्याकरणनियमप्रयोगोऽधिकतरं दरीदृश्यते। काव्यप्रकाशे प्रतिपादिता वाचकलुप्ताया उपमाया सर्वेऽपि षड्भेदा पाणिन्यष्टाध्यायी-सूत्राण्येव अनुवर्तन्ते। यथा-

**"वादेर्लोपे समासे सा कर्माधारक्यचि क्यङि कर्मकर्त्रोर्णमुलि।"**[15]

वाचकलुप्तायाः प्रथममुदाहरणं समासे सङ्घटते, यथा 'कामिनीगण्डपाण्डुना" इत्यत्र। 'कामिनीगण्ड इव पाण्डु' इति विग्रहे 'उपमानानि सामान्यवचनैः' इति सूत्रेण उपमान-साधारणधर्मवाचकपदयोः समासे सति 'समासगा वाचकलुप्ता' उपमा जायते। तथैव 'असित-भुजगभीषणासिपत्रौ' इत्यत्रापि वाचकलुप्ता। पुनः कर्मणि क्यच्प्रत्ययविधानेन, आधारे च क्यच्-प्रत्ययविधानेन द्वौ भेदौ भवतो, यौ 'उपमानादाचारे' 'अधिकरणाच्च' इति सूत्रवार्तिकाभ्यां सिध्यतः। पुनश्च चतुर्थो भेदः 'कर्तु : क्यङ् सलोपश्च' इति सूत्रविघानेन सिध्यति, यथाऽत्रोदाहरणम्-

पौरं सुतीयति जनं समरान्तरेऽसा-
वान्तः पुरीयति विचित्रचरित्रचुञ्चुः।
नारीयते समरसीम्नि कृपाणपाणे-
रालोक्य तस्य चरितानि सपत्नसेना।।[16]

अत्र 'सुतीयति' इति पदे 'सुतमिवाचरति' इति विग्रहे कृते उपमानवाचके सुतपदे 'उपमानादाचारे' इति सूत्रेण क्यच् प्रत्ययः, अन्तः पुरीयति इति पदे 'अन्तःपुर इवाचरति' इति विग्रहे कृते अधिकरणवाचके अन्तःपुरपदे 'अधिकरणाच्च' इति वार्तिकेन क्यच् प्रत्ययः। 'नारीयते' इति पदे 'अधिपदे 'नारी इव आचरति' इति विग्रहे उपमानवाचके नारीपदे 'कर्तु : क्यङ् सलोपश्च' इति सूत्रेण क्यङ् प्रत्ययः।

वाचकलुप्तायाः पञ्चमं रूपं कर्मणि णमुल् प्रत्ययप्रयोगेण तथा षष्ठं रूपं कर्तरि णमुल्प्रत्ययप्रयोगेण निष्पद्यते। तत्र 'उपमाने कर्मणि च' इति सूत्रेण णमुल् प्रत्ययः तथा 'कषादिषु यथाविध्यनुप्रयोगः' इति सूत्रेण धात्वनुप्रयोग-विधानं विधीयते यथा-

मृधे निदाघधर्मांशुदर्शं पश्यन्ति तं परे।
स पुनः पार्थसञ्चारं सञ्चरत्यवनीपतिः।।[17]

अत्र 'निदाघधर्माशुमिव पश्यन्ति' इति विग्रहे कर्मणि णमुल् प्रत्ययः, 'पार्थसञ्चारम्' इत्यत्र च कर्तरि णमुल् प्रत्ययः। अस्मिन्नेव लुप्तोपमाक्रमे धर्मवाचकलुप्ता उपमा क्विप्गता समासगता च द्विविधा भवति, धर्मोपमानलुप्ता समासे वाक्ये च भवति, वाचकोपमेयलुप्ता क्यच्गता भवति, वाचकधर्मोपमानानां लोपे च समासगा जायते। एषु सर्वेषु प्रकारेषु व्याकरणसूत्रविधानमेव कारकतत्त्वम्।

अतोऽत्र निष्कर्षरूपेण तथ्यमिदं स्फारीभवति यत् संस्कृत-साहित्यशास्त्रे विभिन्नानां शब्दार्थालङ्काराणां प्रतिपादने भूयस्त्वेन व्याकरणशास्त्रम् आधारीकृतम्। अलङ्काराणाम् अनेकान्युदाहरणानि व्याकरणशास्त्रस्य पृष्ठभूमौ प्रपञ्चितानि। अतोऽलङ्कारशास्त्रे भूतायाम् अलङ्कारविवेचनायां व्याकरणशास्त्रस्य महती भूमिका सिद्धा।

**सन्दर्भाः**


1. काव्यप्रकाशः, उल्लासः 9, विश्वेश्वर व्याख्या, पृ० 404
2. तदेव, उ० 10, बालबोधिनी टीका पृ० 544
3. तदेव, उ० 10. बालबोधिनी टीका पृ० 584
4. तदेव, उ० 9. पद्य-354
5. तदेव, उ० 9. प० 374
6. तदेव, उ० 9. प० 359
7. तदेव, उ० 9. प० 361

8. तदेव, उ० 9. प० 368
9. तदेव, उ० 9. प० 372
10. तदेव. उ० 9. प० 375
11. तदेव, उ० 9. प० 376
12. तदेव, उ० 9. प० 378
13. तदेव, उ० 10. प० 549
14. तदेव, उ० 10 बाल० पृ० 550
15. तदेव, उ० 10 सूत्र -89
16. तदेव, उ० 10 प० 403
17. तदेव, उ० 10 प० 404



# मनुस्मृतौ प्राणिविज्ञानम्

– प्रो. वाचस्पति शर्मा त्रिपाठी

*(आधुनिक जीवविज्ञान, जन्तुविज्ञान, वनस्पतिविज्ञान का मूल मनुस्मृति ग्रन्थ है, ऐसा लेखक ने विविध श्लोकों के उद्धरण सहित स्पष्ट प्रतिपादित किया है। प्रथम अध्याय में सृष्टिनिरूपण के प्रसङ्ग में भगवान् मनु ने लगभग-12 श्लोकों में (39 से 50 तक) विविध जीवों, जन्तुओं तथा वनस्पतियों का संक्षेप में सुस्पष्ट वर्णन किया है। यहाँ बानर, मत्स्य, पक्षि, मृग, व्याल, कृमि, कीट, पतङ्ग, यूक, मक्षिक, मत्कुण, दंश, मशक आदि जङ्गम क्षुद्र प्राणियों का तथा गुल्म, लता, वृक्ष, वनस्पति प्रभृति स्थावरों की उत्पत्ति एवं भेद आदि का विशद् वर्णन मिलता है। जैसा आधुनिक प्राणिविज्ञान में प्राणियों का वर्गीकरण प्राप्त होता है, वैसा ही मनु के द्वारा भी अण्डज, स्वेदज, जरायुज आदि भेदों से जङ्गमों का वर्गीकरण स्पष्ट रूप से करते हुए उनकी उत्पत्ति संरक्षण और विकाश के उपायों का वर्णन भी प्राप्त होता है।)*

चतुर्दशविद्यासु अन्यतममतिमहत्वपूर्णञ्च स्थानं विद्यते धर्मशास्त्रस्य। यथोक्तं याज्ञवल्क्येन[1]–

**पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।**
**वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश।।**

यद्यपि धर्मार्थकाममोक्षाः चत्वारोऽपि पुरुषार्थाः धर्मशास्त्रे साक्षात् परम्परया वा विवेचिताः, किन्तु धर्माख्यस्य प्रथमपुरुषार्थस्य प्राधान्येन प्रतिपादनादिदं शास्त्रं धर्मशास्त्रमिति नाम्नाऽभिधीयते। आचारव्यवहारप्रायश्चित्तकाण्डेषु विभक्तेऽस्मिन् शास्त्रे वर्णाश्रमधर्मादयः षड्विधाः स्मार्तधर्माः निपुणं निरूपिताः। अत्र धर्मशब्दस्य कर्तव्यं, धारणं, नियमानुष्ठानं, संस्कार इत्यादयोऽनेकेऽर्थाः विविधस्मृतिषु उपनिबद्धाः। तत्प्रतिपादकं हि शास्त्रं धर्मशास्त्रम्। अर्थात् येन शास्त्रेण धर्माऽधर्मयोः, कर्तव्याकर्तव्ययोः संस्कारादीनाञ्च ज्ञानं भवति, तदेव शास्त्रं धर्मशास्त्रम्। अत एव धर्मशब्दार्थं निरूपयन् मनु–भाष्यकारः मेधातिथिराह–"धर्मशब्दः कर्त्तव्याकर्त्तव्ययोः विधिप्रतिषेधयोर-दृष्टार्थयोस्तद्विषयाणाञ्च क्रियायां दृष्टप्रयोगः।" इत्थञ्च सकलमानवानां कर्तव्याकर्तव्यप्रतिपादकं शास्त्रं धर्मशास्त्रमिति सूत्ररूपेण वक्तुं शक्यते।

आधुनिककाले विविधविज्ञानविषयेषु जीवविज्ञानस्य (Biology) महत्वमतितरां दृश्यते। इदञ्च जीवविज्ञानं मुख्यतया शाखाद्वये विभक्तम् – (क) प्रथमं जन्तुविज्ञानं (प्राणिविज्ञानं) आङ्ग्लभाषायां (Zoology) इत्युच्यते (ख) द्वितीयञ्च वनस्पतिविज्ञानं यत् आङ्ग्लभाषायां (Botany) इत्यभिधीयते। अनयोर्मध्ये प्रथमं जन्तुविज्ञानं कृमिकीटमत्स्यदर्दुरादिजन्तूनामध्ययनेन

सम्बद्धमपरञ्च वनस्पतिविज्ञानं वृक्षलतातृणगुल्मादिविविधवनस्पतीनां वर्णनं विदधाति। तत्र जन्तु-विज्ञानमपि पुनःविविधविभागेषु विभक्तमवलोक्यते।

यथा – (अ) स्थूलशरीररचनाविज्ञानं (Gross Anatomy) (आ) शारीरिकी (Physiology) (इ) आनुवंशिकी (Genetics) (ई) जैवविकाशः (Organic Evolution) (उ) परिस्तिथिविज्ञानं (Ecology) (ऊ) जीवभूगोलः (Zoo Geography) (ए) जीवाश्मविज्ञानं (Palaheontology) (ऐ) वर्गीकरणविज्ञानम् (Taxonomy) इत्यादयः। एवमेव-वनस्पतिविज्ञानस्य च आकारविज्ञान- (Morphology) , शरीररचनाविज्ञान- (Anatomy), ऊत्तकविज्ञान- (Histology) कोशिकाविज्ञान- (Cytology) प्रभृतयः दशाधिकाः शाखाः विद्यन्ते।

अथ समुदेति जिज्ञासा यत् अतिप्राचीनेन धर्मशास्त्रेण साकं कोऽस्ति सम्बन्धः अत्याधुनिकस्य जन्तुविज्ञानस्य वनस्पतिविज्ञानस्य च ? धर्मप्रतिपादकं हि धर्मशास्त्रं, तत्र चतुर्णां वर्णानामा-श्रमाणामन्येषां मानवानां च धर्माः, ऋणादानादीनि अष्टादशविवादपदानि, विविधानि पापानि, प्रायश्चित्तानि च निरूपितानि। अतः धर्मप्रतिपादके धर्मशास्त्रे जन्तुविज्ञान-वनस्पतिविज्ञानात्मकस्य जीवविज्ञानस्य चर्चायाः कः अवसरः का च प्रासंगिकता इति जिज्ञासा प्रथमतः समुदेति मनसि।

एतस्याः जिज्ञासायाः समाधानं मनुस्मृतेः प्रथमाध्यायस्यारम्भे अन्वेषणीयमस्माभिः। एकाग्रमासीनं भगवन्तं मनुमभिगम्य तं प्रतिपूज्य च धर्मस्वरूपजिज्ञासया भृग्वादिऋषयः इत्थं पृच्छन्ति तम् –

''मनुमेकाग्रमासीनमभिगम्य महर्षयः।
प्रतिपूज्य यथान्यायमिदं वचनमब्रुवन्।।
भगवन्सर्ववर्णानां यथावदनुपूर्वशः।
अन्तरप्रभवाणां च धर्मान्नो वक्तुमर्हसि।।''[2]

ऋषिभिः वर्णाश्रमाणां धर्मविषयिणी जिज्ञासां समादधन् मनुः प्रथमं तावद् इत्थमारेभे-

आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः।।[3]

मनुटीकाकारः कुल्लूकभट्टः श्लोकस्यास्याभिप्रायं स्पष्टीकुर्वन् स्वयं शङ्कामित्थ-मुपस्थापयति-"ननु मुनीनां धर्मविषयप्रश्ने तत्रैवोत्तरं दातुमुचितम्, तत्कोऽयमप्रस्तुतः प्रलयदशायां कारणलीनस्य जगतः सृष्टिप्रकरणावतारः।।"[4] मनुभाष्यकारः मेधातिथिरपि अत्र शंकते-'शास्त्रोक्तधर्मान् पृष्टः तानेव वक्तव्यतया प्रतिज्ञाय जगतोऽव्याकृतावस्थावर्णनमप्रकृतमपुरुषार्थञ्च। सोऽयं सत्यो जन-प्रवादः 'आम्रान् पृष्ठः कोविदारान् आचष्टे ' इति "[5]एतस्याः शङ्कायाः सामाधानमपि पुनस्तत्रैव प्रदर्शयति मेधातिथिः- शास्त्रस्य महाप्रयोजनत्वमनेन प्रतिपाद्यते। ब्रह्माद्याः स्थावरपर्यन्ताः संसारगतयो धर्माधर्मनिमित्ताः अत्र प्रतिपाद्यन्ते।"[6] कुल्लूकभट्टस्तु इत्थं समाधत्ते इमां शङ्काम् – "मुनीनां धर्मविषये प्रश्ने जगत्कारणतया ब्रह्मप्रतिपादनं धर्मकथनमेवेति नाप्रस्तुताभिधानम्। आत्मज्ञानस्यापि धर्मरूपत्वात्।" अत एवोक्तं याज्ञवल्क्येन- "अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्।"[7] अतः आत्मज्ञानरूपपरमधर्मावगमाय प्रथमाध्यायं कृत्वा संस्कारादिरूपं

धर्मं तदङ्गतया द्वितीयाध्यायादिक्रमेण वक्ष्यतीति न कश्चिद् विरोधः[8]। वस्तुतस्तु न केवलं मानवधर्मशास्त्रे एव अपि तु निखिलेषु भारतीयदर्शनेषु ग्रीकदर्शनेष्वपि मानवीयकल्पना–सृष्टिविषयक–चिन्तनादेव प्रारब्धाऽवलोक्यते।

अतः धर्माधर्मनिरूपणप्रधाने धर्मशास्त्रे तदाधारमूलग्रन्थे मनुस्मृतौ च सर्वादौ स्थावरजङ्गमात्मकस्यास्य जगतः सृष्टिप्रलयप्रसंगे जीवधारिणां कृमिकीटवृक्षादीनां जीवरहितानाञ्च विविधपदार्थानां विस्तृतवर्णनमायाति नयनपथम्। तत्र कृमिकीटमक्षिकादिजन्तूनां, गुल्मलता–वृक्षौषधिप्रभृतीनां वनस्पतीनाञ्चोत्पत्तिः तेषां वैशिष्ट्यादिकञ्च विशदतया विवेचितम्। नैतावदेव, इमे क्षुद्रजन्तवः वनस्पतयश्च मानवा इव संज्ञायुक्ताः सुखदुःखमनुभवन्ति, भोजनं कुर्वन्ति, जलं पिबन्ति, श्वसन्ति, शेरते वंशवृद्धिं कुर्वन्ति, वातपित्तकफादिपीडिताः सन्तः रोगग्रस्ताः भवन्ति, नराणामिव धर्माधर्मफलभाजश्च भवन्ति इति धर्मशास्त्रेषु निपुणं निरूपितम्। मनुस्मृतेः प्रथमाध्याये एकोनचत्वारिंशत्तमश्लोकमारभ्य पञ्चाशत्तमश्लोकपर्यन्तं (39–50) द्वादशश्लोकेषु विविधजन्तूनां वनस्पतीनाञ्च विशदवर्णनं विहितम्।

प्रजाः सिसृक्षुणा स्वायंभुवेन मनुना सुदुश्चरं तपस्तप्त्वा प्रथमं मरीच्यादयः दशप्रजापतयः सृष्टाः। मनोः मानसपुत्रैः एभिः दशमहर्षिभिरेव क्रमशः सप्त मनवः, देवाः, ऋषयः, यक्षाः, रक्षांसि, सर्पाः, गरुडादयः सुपर्णाः पितृसमूहश्च सृष्टाः। तदनु दशप्रजापतय एव किन्नरान्, वानरान्, मत्स्यान्, पक्षिणः, पशून्, मृगान्, मनुष्यान्, सिंहादिव्यालान् कृमिकीटपतङ्गान्, यूकामक्षिकमत्कुणान्, दंशमशकादिजङ्गमान् क्षुद्रप्राणिनः सृष्टवन्तः। किञ्च एभिरेव गुल्मलतावृक्ष–वनस्पतिप्रभृतयः स्थावराः अपि सृष्टाः। यथोक्तम्–

"किन्नरान्वानरान्मत्स्यान्विविधांश्च विहङ्गमान्।
पशून्मृगान्मनुष्यांश्च व्यालांश्चोभयतोदतः।।
कृमिकीटपतङ्गांश्च यूकामक्षिकमत्कुणम्।
सर्वं च दंशमशकं स्थावरं च पृथग्विधम्।।"[9]

एषु कृमयः अत्यन्तसूक्ष्माः प्राणिनः, कीटाः कृमिभ्यः किञ्चित् स्थूलाः भूमिचराः, पतङ्गाः शलभादयः, अन्ये च यूकाः, मक्षिकाः, मत्कुणाः, दंशाः, मशकाः इत्येते जङ्गमाः क्षुद्रप्राणिनः, वृक्षपर्वतादयश्च स्थावराः प्राणिनः सन्ति। मनुना प्राणिनां (जीवानां) प्रथमं मुख्यरूपेण प्रकारद्वयं प्रतिपादितम्– (क) जङ्गमाः (ख) स्थावराश्च। तयोः प्रथमे जङ्गमाः प्राणिनः ते उच्यन्ते ये गतिशीलाः भवन्ति, यथोक्तम्– 'जङ्गम्यन्ते गच्छन्तीति जङ्गमाः।' स्थावराः जीवास्तु गतिहीनाः एकत्रैव तिष्ठन्ति।

जङ्गमानामपि त्रयः प्रकाराः प्रतिपादिताः मनुस्मृतौ। यथा–आधुनिकप्राणिविज्ञाने प्राणिनां विविधदृष्टिभिः वर्गीकरणं प्राप्यते तथैव मनुनापि जरायुज–अण्डज–स्वेदज–भेदैः जङ्गमानां वर्गीकरणं विहितम्। (क) जरायुजानां परिगणनमित्थं कृतं मनुना–

पशवश्च मृगाश्चैव व्यालाश्चोभयतोदतः।
रक्षांसि च पिशाचाश्च मनुष्याश्च जरायुजाः।।[10]

अर्थात् जरायुर्गर्भावरणचर्म, तत्र प्रादुर्भवन्ति पश्चाच्च तन्मुक्ताः जायन्ते जरायुजाः मनुष्यादयः। अर्थात् पशवः, मृगाः, सिंहादयः, व्यालाः, रक्षांसि, पिशाचाः, मनुष्याश्च प्रथमं मातृगर्भे गर्भशय्यायां सम्भवन्ति, ततश्च मुक्ताः जन्म लभन्ते, अत एव ते सर्वे 'जरायुज'– पदेनाभिधीयन्ते।

(ख) केचन प्राणिनः पूर्वम् अण्डे डिम्बे सम्भवन्ति ततश्च जायन्ते अतएव ते अण्डजाः इत्युच्यन्ते। एषु पक्षिणः, सर्पाः, नक्राः, मत्स्याः, कच्छपाः, सरीसृपादयः अन्तर्भवन्ति।

यथोक्तं मनुना–

**अण्डजाः पक्षिणः सर्पा नक्रा मत्स्याश्च कच्छपाः।**
**यानि चैवंप्रकाराणि स्थलजान्यौदकानि च।।**[11]

अण्डजानामपि भेदद्वयमत्र प्रतिपादितं मनुना–स्थलज–औदक–(जलज) भेदाम्याम्। तयोः स्थलजाः पक्षिसर्पादयः, जलजाश्च मत्स्य–नक्र–शंखादयः ज्ञेयाः। अण्डजानामुत्पत्तिप्रकारः पदार्थादर्शे इत्थं निरूपितः–

**अण्डतो वर्तुलीभूतात् शुक्रशोणितसंयुतात्।**
**कालेन भिन्नात् पूर्णात्मा निर्गच्छन् प्रक्रमिष्यति।।**

(ग) जङ्गमानां तृतीयप्रकारत्वेन स्वेदजाः निरूपिताः मनुना। यथोक्तं तेन–

**स्वेदजं दंशमशकं यूकामक्षिकमत्कुणम्।**
**ऊष्मणश्चोपजायन्ते यच्चान्यत्किञ्चिदीदृशम्।।**[12]

अर्थात् स्वेदात् पार्थिवद्रव्याणां तापेन समुत्पन्नात् क्लेदात् ये समुत्पद्यन्ते ते स्वेदजाः इत्युच्यन्ते। यथा–दंशाः, मशकाः, यूकाः, मक्षिकाः, मत्कुणादयश्च। एतदतिरिक्ताः अत्यन्त–सूक्ष्माः दंशादिसदृशाः अन्ये पुत्तिका–पिपीलिकादयोऽपि स्वेदादेव यतः समुत्पद्यन्ते अतः तेऽपि स्वेदजपदवाच्याःएव भवन्ति।

आधुनिकजीवविज्ञानाङ्गभूते प्राणिविज्ञाने यावता विस्तरेण एतेषां जङ्गमप्राणिनां वर्णनं प्राप्यते तथा विस्तृतं वर्णनं यद्यपि मनुस्मृतौ नायाति दृष्टिपथं, किन्तु समासेन तेषां वर्गीकरणमुत्पत्तिक्रमश्च सूत्ररूपेण निरूपित एव इति स्पष्टीभवति।

**धर्मशास्त्रे वनस्पतिविज्ञानम् –** आधुनिकजीवविज्ञानस्य प्रकारभेदे वनस्पतिविज्ञाने स्थावराणां लतावल्लीवृक्षप्रभृतिविविधवनस्पतीनां वर्गीकरणं, समुत्पत्तिः, संरक्षणं, विकासोपायाश्च समुपवर्णिताः। मनुस्मृतावपि प्रथमेऽध्याये सृष्टिनिरुपणक्रमे जङ्गमजीवानां विवेचनानन्तरं स्थावराणां वनस्पतीनां च विशदविवेचनं प्राप्यते। इमे स्थावराः वनस्पतयः उद्भिज्जपदेनाभिहिताः मनुना। यथाऽभिहितं तेन–

**उद्भिज्जाः स्थावराः सर्वे बीजकाण्डप्ररोहिणः**[13]

अर्थात् स्थावराः पादपादयः बीजं भूमिञ्च उद्भिद्य यतः जायन्ते अत एव ते उद्भिज्जेति पदेनोच्यन्ते। अत एवोक्तं मेधातिथिना–

**"ऊर्ध्वं बीजं भूमिं च भित्वा विदार्य जायन्ते उद्भिज्जाः वृक्षाः।"**[14] अत्रैव श्लोकार्द्धे स्थावराणामुद्भिज्जानां भेदद्वयं प्रतिपादितम्।

(क) केचिद् बीजाज्जायन्ते,

(ख) अन्ये केचन काण्डात् अर्थात् शाखात एव समुत्पद्यन्ते।

**भगवता मनुना स्थावराणां चत्वारः प्रकाराः प्रतिपादिता :-**

(क) ओषधयः

(ख) वनस्पतयः

(ग) वृक्षाः

(घ) वीरुधश्च।

**(क) ओषधयः-** ओषधेः लक्षणं प्रतिपादयन् आह- "ओषध्यः फलपाकान्ता बहुपुष्प-फलोपगाः[15]" पदस्यास्य व्याख्यां विदधानः मेधातिथिः कथयति-"फलपाकः अन्तो नाशः यासां ताः ओषधयः। पक्वे फले ब्रीहियवादयो विनश्यन्ति, इमे बहुपुष्पफलैः युक्ताश्च भवन्ति"।[16] अस्मिन् वर्गे यवतिलमुद्गशालिप्रभृतयः अन्तर्भवन्ति।

**(ख) वनस्पतय :-** स्थावराणां द्वितीयः प्रकारः वनस्पतिपदेनाभिहितः मनुना। तथा च "अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः[17]। अर्थात् पुष्पेण विनैव येषां फलं जायते ते वनस्पतयः उच्यन्ते। यथोक्तं कुल्लूकभट्टेन "ये वनस्पतयः तेषां पुष्पमन्तरेणैव फलजन्म" इति। वनस्पतीनामुदाहरणभूताः वटपिप्पलौदुम्बरादयः पादपाः भवन्ति। केषाञ्चन मते वनस्पतीनामपि पुष्पाणि भवन्त्येव किन्तु ते नायान्ति दृष्टिपथम्। अतएव 'अपुष्पा' इत्यस्य व्याख्यानं कैश्चित् व्याख्याकारैः "अदृश्यमानपुष्पाः वा" इति कृतम्। वनस्पतिशब्दस्यार्थं प्रतिपादयन् अमरसिंहः तदुदाहरणरूपेण प्रतिपादयति- "अश्वत्थादौ वृक्षे"।

**(ग) वृक्षाः-** तृतीयभेदस्य वृक्षस्य लक्षणं प्रतिपादयन् आह मनुः- "पुष्पिणः फलिनश्चैव वृक्षास्तूभयतः स्मृताः[18]" अर्थात् येषां पूर्वं पुष्पोद्भवः तदनन्तरञ्च फलोद्भवः जायते ते वृक्षपदेनोच्यन्ते। अर्थात् वनस्पतिषु पुष्पं विनैव फलोद्गमः, वृक्षेषु च पुष्पं फलं चोभयमपि उद्गच्छतीति एष एव वनस्पति- वृक्षयोर्भेदः। वृक्षाणामुदाहरणं पनसकदम्बाम्रादयो भवन्ति।

**(घ)** स्थावराणां चतुर्थः भेदः **वीरुध-पदेन**, तृणपदेन वाभिहितः मनुना। तथा च-

**"गुच्छगुल्मं तु विविधं तथैव तृणजातयः।**
**बीजकाण्डरुहाण्येव प्रताना वल्लय एव च।।"[19]**

अत्र गुच्छपदस्यार्थं विवेचयन् कुल्लूकभट्टः आह[20]- "मूलत एव यत्र लतासमूहो भवति, न च प्रकाण्डानि भवन्ति ते गुच्छाः मल्लिकादयः। गुल्मास्तु एकमूलाः संघातजाताः शरेक्षुप्रभृतयः। अत्र मेधातिथिस्तु[21] 'गुच्छगुल्म' इति एकमेव पदं स्वीकुर्वन् तस्य पदस्यार्थमेवमाह- "याः संहताः भूमेर्बद्धाः एकमूलाः अनेकमूलाश्च लताः उत्तिष्ठन्ति, न च वृद्धिं महतीं प्राप्नुवन्ति। तासां संघातो गुच्छगुल्मशब्दवाच्यः, यथा तृणमूलमादीनि"। प्रतानाः मेधातिथिना दीर्घाः भूमिगताः तृणप्ररोहा उक्ताः। कुल्लूकमते तु प्रतानपदेन तन्तुयुक्ता त्रपुष- अलाबु-प्रभृतय उच्यन्ते। वल्लयः ताः लताः उच्यन्ते याः भूमेः उत्पत्य वृक्षमन्यं वा कञ्चित् परिवेष्ट्य ऊर्ध्वमारोहन्ति गुडूच्यादयः।

सर्वाः अपि एताः वीरुधः तृणजातयः वृक्षवत् बीजकाण्डरूहाः भवन्ति।

इत्थञ्च जङ्गमानां विविधजन्तूनां स्थावराणामनेकविधवनस्पतीनाञ्च विशदवर्णनं मनुना विहितं मनुस्मृतौ। मनुकृताः जङ्गमानां स्थावराणाञ्च इमे प्रकाराः तत्परवर्तिभिः चरक–सुश्रुत प्रभृतिभिः आयुर्वेदज्ञैरपि समर्थिता विलोक्यन्ते। यथा– स्थावराणामुद्भिज्जानां चतुर्विधत्वं प्रतिपादितं महर्षिचरकेण[22] –

''.................... औद्भिदं तु चतुर्विधम्।
वनस्पतिस्तथावीरूद्वानस्पत्यस्तथौषधिः।।''

आचार्यः सुश्रुतोऽ[23]ऽपि द्रव्याणां प्रकारान् निरूपयन् समर्थयति मनुमतम् – ''द्रव्याणिपुनरोषधयस्ता द्विविधाः – स्थावराः, जङ्गमाश्च। तासां स्थावराश्चतुर्विधाः वनस्पतयो वृक्षा वीरुध ओषधय इति। तास्वपुष्पाः फलवन्तो वनस्पतयः। पुष्पफलवन्तो वृक्षाः। प्रतानवत्यः स्तम्बिन्यश्च वीरुधः। फलपाकनिष्ठा ओषधय इति। जङ्गमास्त्वपि चतुर्विधा जरायुजाण्डजस्वेदजोद्भिज्जाः। तत्र मनुष्यव्यालादयो जरायुजाः। खगसर्पसरीसृपप्रभृतयोऽण्डजाः। कृमिकीटपिपीलिकाप्रभृतयः स्वेदजाः। इन्द्रगोपमण्डूकप्रभृतयः उद्भिज्जाः। एवमेव पदार्थयोगार्णवेऽपि समर्थितं मनुमतम्–

''देहश्चतुर्विधो जन्तोर्ज्ञेयः उत्पत्तिभेदतः।
उद्भिज्जः स्वेदजोऽण्डोत्थः चतुर्थश्च जरायुजः।।''

वनस्पतीनां स्थावराणां वृक्षलतादीनां विभिन्नानि अङ्गानि निरूपितानि चरकसंहितायाम्[24]। तथाहि –

मूलत्वक्सारनिर्यासनालस्वरसपल्लवाः ।
क्षाराः क्षीरं फलं पुष्पं भस्मतैलानि कण्टकाः।।

उद्भिज्जानां क्रमिकः उत्पत्तिप्रकारोऽपि निपुणं निरूपितः पदार्थयोगार्णवे–

''उद्भिज्जाः स्थावराः ज्ञेयाः तृणगुल्मादिरूपिणः।
तत्र सिक्ताः जलैर्भूमिभिश्च विपाचिताः।।

वायुना व्यूहमानास्तु बीजत्वं प्रतियन्ति ते।
तथा चोक्तानि बीजानि संसिक्तान्यम्भसा पुनः।।

उच्छूनतां मृदुत्वं च मूलभावं प्रयान्ति च।
तन्मूलादङ्कुरोत्पत्तिः अंकुरात् पर्णसम्भवः।।
पर्णात्मकः ततः काण्डः काण्डाच्च प्रसरः पुनः।''

**वनस्पतीनां प्राणवत्त्वम्–** इमे स्थावराः उद्भिज्जाः वृक्षादयः प्राणवन्तः इति आधुनिककाले कदाचित् ऊनविंशशतके आचार्य–जगदीशचन्द्रबोस–महाभागेन–सर्वप्रथमं प्रतिपादितम्। तदनु च अन्यैः पाश्चात्यविद्वद्भिः मतमिदं समर्थितम्। ततः पूर्वं तु वृक्षादयः स्थावराः जीवरहिता एव

मन्यन्ते स्म पाश्चात्यैर्विद्वद्भिः। किन्तु प्रायः द्विहस्राधिकवर्षपूर्वमेवास्माकं धर्मशास्त्रेषु मनुष्यवदेव एतेषां वनस्पतीनां जीवितत्त्वं सुख–दुःखानुभवित्वं प्रजननशक्तिसम्पन्नत्वञ्च निरूपितम्। यथोक्तं मनुस्मृतौ भगवता मनुना–

"तमसा बहुरूपेण वेष्टिताः कर्महेतुना।
अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः।।"[25]

पादपाः जीवधारिणः अन्तःसंज्ञावन्तश्च भवन्तीति विषये मनुमतं समर्थयन् उदयनाचार्यः 'किरणावल्यां' पृथ्वीनिरूपणप्रसङ्गे पादपानां मनुष्यवदेव जीवधारित्वं निश्चिनोति, तद्यथा– "वृक्षादयः प्रतिनियत–भोक्त्र्यधिष्ठिताः जीवन–मरण–स्वप्न–जागरण–रोग–भेषज– प्रयोगबीजसजातीया–नुबन्धानुकूलोपगमप्रतिकूलोपगमादिभ्यःप्रसिद्धशरीरवत्।" एवमेव न्यायबिन्दुटीकाकारः धर्मोत्तरोऽपि प्रतिपादयति यत् रात्रौ पत्रसंकोचः पादपानां स्वापं सङ्केतयति। तथाहि–"स्वापः रात्रौ पत्रसङ्कोचः।" षड् दर्शनसमुच्चयभाष्यकृता गुणरत्नेन पादपेषु बाल्य–यौवन–वृद्धि–क्षयादीनां समुल्लेखः कृतः।

महाभारतस्य शान्तिपर्वणि तु पादपानां पञ्चेन्द्रियसमन्वितत्वमपि प्रतिपादितमस्ति तद्यथा–[26]

ऊष्मतो म्लायते पर्णं त्वक् फलं पुष्पमेव च।
म्लायते शीर्यते चापि स्पर्शस्तेनात्र विद्यते।।

वाय्वग्न्यशनिनिर्घोषैः फलं पुष्पं विशीर्यते।
श्रोत्रेण गृह्यते शब्दस्तस्माच्छृण्वन्ति पादपाः।।

वल्ली वेष्टयते वृक्षं सर्वतश्चैव गच्छति।
न ह्यदृष्टेश्च मार्गोऽस्ति तस्मात् पश्यन्ति पादपाः।।

पुण्यापुण्यैस्तथा गन्धैर्धूपैश्च विविधैरपि।
अरोगाः पुष्पिताः सन्ति तस्माज्जिघ्रन्ति पादपाः।।

पादैः सलिलपानाच्च व्याधीनां चापि दर्शनात्।
व्याधिप्रतिक्रियत्वाच्च विद्यते रसनं द्रुमे।।

वक्त्रेणोत्पलनालेन यथोर्ध्वं जलमाददेत्।
तथा पवनसंयुक्तः पादैः पिबति पादपः।।

सुखदुःखयोश्च ग्रहणाच्छिन्नस्य च विरोहणात्।
जीवं पश्यामि वृक्षाणामचैतन्यं न विद्यते।।

पापकर्मवशात् नराणां स्थावरत्वप्राप्तिः इति प्रतिपादयति मनुः। यथा मानवानां पापकर्मवशात्

नरकादि दारुणदुःखावाप्तिः, धर्माचरणाच्च स्वर्गादिसुखप्राप्तिर्भवति तथैव शरीरिणां वृक्षाणामपि दुष्कर्मणा दुःखप्राप्तिः, सत्कर्मणा च सुखप्राप्तिर्भवतीति सिद्धान्तितं धर्मशास्त्रेषु। **तथा च**[27]–

शरीरजैः कर्मदोषैर्याति स्थावरतां नरः।
गुरूत्वङ्कृत्य हुंकृत्य विप्रं निर्जित्य वादतः।
श्मशाने जायते वृक्षः कङ्कः गृद्ध्रादिसेवितः।।

नर्मदातीर - सम्भूताः सरलार्जुनपादपाः।
नर्मदातोयसंस्पर्शात् ते यान्ति परमां गतिम्।।

क्षुद्राः, पतङ्गाः, पशवः, कीटाः, स्थावराः वनस्पतयश्च तपश्चरन्ति, मनुष्या इव तपोबलेन स्वर्गामिनश्च भवन्ति इति स्पष्टमुद्घोषितं भगवता मनुना[28]–

कीटाश्चाहिपतङ्गाश्च पशवश्च वयांसि च।
स्थावराणि च भूतानि दिवं यान्ति तपोबलात्।।

एवं प्रकारेण पश्यामो वयं यत् धर्मशास्त्रवाङ्मये जन्तुविज्ञानस्य वनस्पतिविज्ञानस्य च विशदा चर्चा दरीदृश्यते। यद्यपि आधुनिके जन्तुविज्ञान–वनस्पतिविज्ञानात्मके प्राणिविज्ञाने यावता विस्तरेण स्थावर–जङ्गमानां प्राणिनां वर्णनं कृतं न तावता विस्तारेण धर्मशास्त्रे तेषां चर्चा प्राप्यते। किन्तु सहस्राधिक–वर्षेभ्यः प्राक् मनुस्मृति –प्रभृति–स्मृतिषु प्राणिविज्ञानस्य विविध–पक्षाणाम् संक्षिप्तं किन्तु सुस्पष्टं विवेचनं विहितमिति, अत्र नास्ति संशीतिलेशोऽपि। समासेन वर्णनस्य मूलकारणं त्विदं वर्तते यत् जीवानां वर्णनम् धर्मशास्त्रस्य आनुषंगिकमुद्देश्यमस्ति, न तु प्रधानम्। किन्तु अस्माभिः एतत् निश्चयेन वक्तुं शक्यते यत् आधुनिके जीवविज्ञाने ये विषयाः विस्तरेण विवेचिताः तेषां मूलम् आधारश्च धर्मशास्त्रनिरूपिता जीवविज्ञानसम्बद्धा चर्चैव, इति दिक्।

**सन्दर्भा :-**


1. याज्ञवल्क्यस्मृतिः –1/3
2. मनुस्मृतिः –1/1-2
3. मनुस्मृतिः–1/5
4. मनुस्मृतिः–1/5
5. मनुस्मृतिः– 1/5
6. मनुस्मृतिः– 1/5
7. याज्ञवल्क्यस्मृतिः– 1/8

8. मनुस्मृतिः– 1/5
9. मनुस्मृतिः– 1/39-40
10. मनुस्मृतिः– 1/43
11. मनुस्मृतिः– 1/44
12. मनुस्मृतिः– 1/45
13. मनुस्मृतिः– 1/46
14. मनुस्मृतिः– 1/46
15. मनुस्मृतिः– 1/46
16. मनुस्मृतिः– 1/46
17. मनुस्मृतिः– 1/47
18. मनुस्मृतिः– 1/47
19. मनुस्मृतिः– 1/48
20. मनुस्मृतिः– 1/48
21. मनुस्मृतिः– 1/48
22. चरकसंहिता–1/70-73
23. सुश्रुतसंहिता 1/22-23
24. चरकसंहिता–1/72
25. मनुस्मृतिः– 1/49
26. महाभारत शान्तिपर्व– 184/11-17
27. मनुस्मृतिः– 12/9, याज्ञवल्क्यस्मृतिः– 3/291
28. मनुस्मृतिः– 11/240

## सन्दर्भग्रन्थसूची

1. याज्ञवल्क्यस्मृतिः (पुनः मुद्रित संस्करण – 2010),
प्रकाशक – प्रो. राधावल्लभ त्रिपाठी, कुलपति, राष्ट्रिय संस्कृत संस्थान (मानित विश्वविद्यालय) 56–57 इन्स्टीट्यूशनल एरिया, जनकपुरी, नई दिल्ली – 110058
2. मनुस्मृतिः (कुल्लूकभट्टकृतव्याख्योपेता), प्रथम संस्करण, दिल्ली – 1983 ई.,
संस्कर्त्ता – आचार्य जगदीशलाल शास्त्री,
प्रकाशक – मोतीलाल बनारसीदास, हेड ऑफिस – 41–यू.ए. बंगलो रोड़, दिल्ली – 110007
3. श्रीचरकसंहिता (सन् 1929) (पूर्वार्द्धम्) (नरेन्द्रनाथशास्त्रिणा सम्पादिता संशोधिता च),

प्रकाशक – मोतीलाल बनारसी दास

4. सुश्रुतसंहिता (सूत्रस्थानम्)
(रामपुरवोयालिया-प्रवासि-श्रीहाराणचन्द्रचक्रवर्ति – कविराजविरचित – सुश्रुतार्थ-सन्दीपनभाष्य-समेतम्)
कलिकाता, शकाब्द: – 1827

5. पदार्थयोगार्णव:

6. महाभारत (पञ्चमखण्ड) शान्तिपर्व
(अध्याय – 184/11-17, पञ्चमहाभूतों के गुणों का विस्तारपूर्वक वर्णन पृ. 4893–4894
अनुवादक – पण्डित रामनारायण शास्त्री पाण्डेय 'राम'
मुद्रक तथा प्रकाशक – मोतीलाल जालान, गीताप्रेस, पो. गीताप्रेस, गोरखपुर (उ.प्र.)



# संस्कृतनीतिसाहित्यं वेदतत्त्वोपबृंहितम्

– प्रो. प्रभुनाथ द्विवेदी

*(समस्त विद्याओं का मूल वेद है। समस्त ज्ञान–विज्ञान वेद से ही प्रादुर्भूत है। वेद के बिना कोई भी ज्ञान–विज्ञान सम्भव नहीं है। संस्कृत वाङ्मय में प्रचलित नीति साहित्य भी बीजरूप में वेदों में प्रतिष्ठित है। जिस प्रकार दूध में नवनीत अन्तर्निहित है तथा जिस प्रकार इतिहास और पुराण के द्वारा वेदों का उपवृंहण होता है उसी प्रकार नीति वाक्यों में सञ्चित वैदिक तत्त्व भी सुगमता पूर्वक बोधगम्य है।)*

न्यायो नीतिर्नयो वापि सिद्धान्तः शास्त्रसम्मतः।
आदर्शं च मतं वाक्यं व्यवहारो विपश्चिताम्।।1।।
वचो मितञ्च साधूनां कार्येषु सन्निदर्शकम्।
तर्कप्रयोगपूतञ्च सिद्धं सिद्धिप्रदं शुभम्।।2।।
सर्वभूताश्रया नीतिर्नीतिस्तु जीवनं स्मृतम्।
यतो हि नीतिमाश्रित्य जीवस्तरति दुस्तरम्।।3।।
एतत्सर्वं समाहृत्य साहित्यं यद्विनिर्मितम्।
सुधीभिर्नीतिमर्मज्ञैः प्रोक्ता तन्नीतिनिर्मितिः।।4।।
नयश्च विनयश्चापि वेदादेव प्रवर्तते।
वेदादृते न सम्भाव्यं ज्ञानविज्ञानवैभवम्।।5।।
बीजरूपेण तत्सर्वं वेद एव प्रतिष्ठितम्।
ये यथा तं प्रपद्यन्ते प्रतिपत्तिस्तथैव हि।।6।।
नीतिशास्त्रं बुधैः प्रोक्तं व्यवहार्यं पदे पदे।
प्रथितं वाङ्मयं सम्यग् विशदं नीतिसंयुतम्।।7।।
वृक्षाणां तु यथा छाया सङ् क्रान्ता दृश्यते जले।
तथैव वैदिकं तत्त्वं नीतिसाहित्यसङ्गतम्।।8।।
नवनीतं यथा दुग्धेऽथवा पुष्पे च सौरभम्।
तथैव नीतिसाहित्ये वेदतत्त्वमिति स्मृतम्।।9।।
एवं यद् वैदिकं तत्त्वं नीतिवाक्येषु सञ्चितम्।
तदत्र प्रस्तुतं किञ्चित् काम्यं हृद्यं सुखावहम्।।10।।

**प्रीयन्तां सुधियः सर्वे समे नीति विशारदाः।**
**मोदन्तां पाठका विज्ञाः लोको भवतु नीतिमान्।।11।।**

अस्त्येव 'नी'-धातुर्भ्वादिगणे पठितो यस्य नैकेऽर्थाः समुपलभ्यन्ते कोशेषु प्रयोगेषु च नयनम्, आहरणम्, प्रापणम्, आदानम्, सञ्चालनम्, निर्देशनम्, शासनञ्च। अनेन धातुना 'क्तिन्' - प्रत्यये कृते सति 'नीति' रीति शब्दो व्युत्पद्यते। नायं शब्दः प्राचीनेष्वमरकोशादिषु पठितः किन्त्वाधुनिकाःकोशाःनिर्दिशन्तीमं शब्दं प्रदर्शयन्ति चास्यार्थप्रकारताम्। यथा-नीतिः = निर्देशनम्, दिग्दर्शनम्, प्रबन्धः, आचरणम्, व्यवहारः, औचित्यम्, शालीनत्वम्, नय-कौशलम्, बुद्धिमत्त्वम्, व्यवहारकौशलम्, राजनयः, योजना, उपायः, कूटयुक्तिः, आचारः, आचारदर्शनम्, अवाप्तिः, अधिग्रहणम्, प्रदानम्, प्रस्तुतिः, सम्बन्धः अवलम्बनञ्चेत्यादयः। अधुना 'POLICY' इत्यप्यस्यार्थो व्यह्रियते।

वेदेषु नोपलब्धिर्नीति' शब्दस्य। परवर्तिसंस्कृतवाङ् मयेऽस्मिन्नर्थे 'नय' एव बहुधा प्रयुक्तो दृश्यते। महाभारते श्रीमद्भगवद्गीतायां 'नीति' शब्दो द्वयोः स्थानयोः विद्योतते। एकत्र त्वयं शब्दो भगवतः कृष्णस्य स्वरूपमेवाधितिष्ठति- 'दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम्।'[1] अपरत्र श्रीमद्भगवद्गीतायाः सर्वान्तिमे श्लोके-

**'यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।**
**तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम।।'[2]**

अत्र प्रथमे प्रयोगे 'राजनयः द्वितीये च 'नैष्ठिकाचार' इत्यस्य शब्दस्यार्थः। अथ संस्कृतकाव्येष्वपि नीति- शब्दस्य प्रयोगा उपलभ्यन्ते। तत्र महाकविकालिदासकृते रघुवंश-महाकाव्ये- 'काले खलु समारब्धाः फलं बध्नन्ति नीतयः।'[3] कुमारसम्भवमहाकाव्ये- 'सम्यक्प्रयोगादपरिक्षतायां नीताविवोत्साहगुणेन सम्पत्।।'[4] शिशुपालवधमहाकाव्ये-'आत्मोदयः परज्यानिर्द्वयं नीतिरितीयती।'[5] नैषधीयचरिते तु 'नीति'-शब्दप्रयोगव्यपदेशतो नीतिरेवोक्ता - "आचरत्तदुचितामथ वाणीमार्जवं हि कुटिलेषु न नीतिः।।'[6]

:'नीति'-शब्दोपेतमेकं नीतिपद्यमप्यत्रोल्लेख्यम् -

**निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु**
**लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम्।**
**अद्यैव मरणमस्तु युगान्तरे वा**
**न्याय्यात्पथः प्रविचलन्ति पदं न धीराः।।**

इत्येवं यथोपबध्यान् 'नीति'-शब्दप्रयोगानुद्धृत्यात्र च निर्दिश्याथ प्रकृतमनुसरामः।

परमेश्वरस्य निःश्वासरूपा वेदाः सन्ति देवानाममरकाव्यानि। तेषामुपजीव्यता स्वयं सिद्धैव। एते वेदाः समग्रज्ञानराशेरक्षयनिधयः। अशेषमेव संस्कृतवाङ्मयं वैदिकज्ञानतोऽनुप्राणितमिति निश्चप्रचम्। प्राणिनां विशेषतो मानवानां विघ्नबाधकाः हितसाधकाश्चापौरुषेया वेदाः। मानवकल्याणपरान्नैकविधानुपायान् वेदयति वेदः। अतो नीतिसाहित्यमपि वेदतत्त्वसम्पृक्तमिति

नीतिप्रणयिनः सुधियः प्रमाणम्। स्मृतिग्रन्थाः यां नीतिमाचारञ्च प्रतिपादयन्ति ते श्रुतिसरणि-मेवानुसरन्ति- 'श्रुतेरिवार्थं स्मृतिरन्वगच्छदि'ति।

यत्साहित्यं तत्तु सूक्तिसौहित्यमेव। न केवलं काव्येषु नाट्येषु वापि तु समस्ते संस्कृतवाङ्मये सूक्तयः सदुक्तयश्च (सदुपदेशाश्च) विद्योतन्तेतराम्। वेदेभ्य आरभ्याऽद्यावधिपर्यन्तं विरचितं साहित्यं सूक्तिरत्नप्रभं विलसति। यस्य काव्यं सूक्तयो नाऽलङ्कुर्वन्ति, स कविभाग्भवितुं नार्हति। अतो हि प्रायेण समे कवयो नैजं काव्यं सदुक्तिभिर्नीतिवचनैश्चालङ्कर्तुं प्रयतन्ते। तत्रार्थान्तर- न्यासाद्यलङ्कारैरभिव्यक्ता भवन्ति सूक्तयः। सहृदयाः काव्यपयोधिं निर्मथ्य समुद्धृतं सूक्तिनवनीतं यथेच्छमास्वादयन्ति।[7] अनुभवशाणोल्लीढानि सूक्तिरत्नानि व्यवहारपक्षाधिरूढानि नीतिवचनानि भवन्ति। काव्यादिषु तेषामुपलब्धिस्त्वस्त्येव किन्तु संस्कृतवाङ्मये तादृशा अपि ग्रन्थाः सन्ति सङ्कलिताः विरचिता वा येष्वेकान्ततो नीतिवचनान्येवोपन्यस्तान्ति। संस्कृतवाङ्मये 'नीति-साहित्यमि' ति पृथगेव सृष्टिर्विराजते यस्यां नैके ग्रन्थाः नीति- व्यवहारपराः परानुग्रहकाङ्क्षया वितरन्ति प्रसादं प्रासादाद्विनिःसार्य प्रमितमप्यमितानुभव-सिद्धानां प्रसिद्धानामाप्तजनानां नीतिव्यवहारोपदेशवचनानाम्। एतानि नीति-वचनानि सुप्रयुक्तानि मानवस्य कार्यारम्भान् साफल्यं नयन्ति, हितं साधयन्ति जीवनं च सुखमयं विनिर्मान्ति। काव्यप्रयोजनेष्वेकं 'कान्तासम्मित-तयोपदेशप्रदानमपि स्मृतम्। तत्त्वाचार्यमम्मटदिशा- 'रामादिवद् वर्तितव्यं न रावणादिवदि' त्यपि वक्तुं समीचीनम्। एषा नीतिः सात्त्विकी। राजसी तु 'शठे शाठ्यं समाचरेत्।' 'निन्दति पुत्रोत्सवं वन्ध्येति तामसी नीतिः। अथवा, 'चर्वति पुच्छमपुच्छःसोऽन्यस्य सर्वात्मने' ति तामसी-नीतिः।

नीतिसाहित्ये समुपलब्धानां नीतिग्रन्थानां सूत्रितानां वा छन्दोबद्धानां वर्तत एवैका विशिष्टा सुबोधा पद्धतिः। सुभाषितपरम्पराश्रितेषु नीतिपद्येषु नैसर्गिकं याथार्थ्यमेतावद्विशदविशदं भवति यत्तु तत्पठनश्रवणसमनन्तरमेव सहृदयस्य हृदयं प्रविश्य तत्स्वीयभावरागेण रञ्जयति। सरसप्रभावोत्पादकतया, जीवनादर्शमयतया नैतिकमूल्यबलेन चैतानि नीतिवचनानि मानवस्यान्तःकरणं बलादिव समुचितं विमर्शमयं विधाय तदध्यवसायं समीहितफलाभिमुखं कुर्वन्ति। समृद्धं खलु संस्कृतनीतिसाहित्यम्। रामायण-महाभारत-पुराणादिग्रन्थेषु प्रचुराणि नीतिवचनानि समुपलभ्यन्ते। तत उद्धृत्य पञ्चतन्त्र-हितोपदेशाद्याख्यानग्रन्थेषु तत्तत्कथाप्रसङ्गेषु भूयांसि नीतिपद्यानि प्रयुक्तानि सन्ति। एतदतिरिक्तं स्वतन्त्रतयाऽपि नीतिग्रन्था विरचिताः। तत्र शुक्रनीतिः, बृहस्पतिनीतिः, चाणक्यनीतिः, कामन्दकनीतिः, विदुरनीतिश्चैते ग्रन्थाः प्रमुखाः भर्तृहरि कृतं नीतिशतकं समग्रे नीतिसाहित्ये कामप्यपूर्वामभिख्यां धत्ते।

अचिन्त्यः खलु वेदानां महिमा। तेषां प्रदायकत्वन्त्वनिर्वचनीयम्। वेदाःसर्वसिद्धिप्रदाः- 'सर्वं वेदात्प्रसिद्ध्यति।' नीतिसाहित्यस्याधमर्ण्यं कलयितुं वयं वेदं शरणं व्रजामः।

'वेदोऽखिलो धर्ममूलम्' इत्यत्र यस्य धर्मस्योत्सो वेदः स धर्मस्त्वाचारप्रभव एव- 'आचारप्रभवो धर्मः' इति। वैदिकसंस्कृतौ भारतीयजीवनपद्धतौ चास्य सदाचारस्य महत्त्वं शीर्षस्थानीयं विद्यते। 'ऋतस्य पन्थां न तरन्ति दुष्कृतः' इति वेदानामुद्घोषो यद् दुराचारिणः

सत्यस्याध्वानं तर्तुं नैव शक्नुवन्ति। अतः सदाचारपूताय जीवनायैवेयं वैदिकी ह्यार्षी मनीषा- 'तन्मे मनः शिवसङ्कल्पमस्तु।' मनसि कृतपदाः शुभा भाव एव परिणमन्ति सदाचारभूता' इत्येष वैदिकः सिद्धान्तोऽनुभवगम्यः-'यन्मनसा मनुते तद्वाचा वदति, यद्वाचा वदति तत्कर्मणा करोती'ति। इत्थं सदाचारो मनसा, वचसा कर्मणा चेति त्रिभिरुपायैरुपेतः पूर्णत्वमाप्नोति नान्यथा। 'मनस्यन्यद्वचस्यन्यदि' ति मनोवाग्विकारो दुराचारमेव पुष्णाति। वैदिकर्षिः प्रार्थयते-

परि माऽग्ने दुश्चरिताद् बाधस्वा मा सुचरिते भज।
उदायुशा स्वायुशोदस्थाममृताँ अनु।।[8]

अयमत्रास्याभिप्रायः - 'हे सर्वाग्रगण्य देव अग्ने, भवानवतु मां दुश्चरिताद् विदधातु च सदाचारभाग्, यतोऽहमुत्तममायुः सुन्दरञ्च जीवनं लब्ध्वाऽभ्युन्नत्याऽमृतत्वमनुसरामि।'

वेदविहितोऽयं सदाचारः सर्वत्र नीतिसाहित्येऽनुस्यूतो विराजते। महात्मा विदुरः प्रोक्तवान् -

''कर्मणा मनसा वाचा यदभीक्ष्णं निषेवते।
तदेवापहरत्येनं तस्मात् कल्याणमाचरेत्।।''[9]

नरो मनसा, वचसा कर्मणा च यं सततं सेवते स तमाकर्षति। अतो नित्यं शुभमाचरेत्। एवं हि मानवजीवनस्य सदाचारयुक्तता निर्दिष्टा।

येषु सदाचारः शैथिल्यं न भजते त एव सत्कुलसम्भवाः कीर्तिमिच्छन्ति।

येषां हि वृत्तं व्यथते न योनि-
श्चित्तप्रसादेन चरन्ति धर्मम्।
ये कीर्तिमिच्छन्ति कुले विशिष्टां
व्यक्तानृतास्तानि महाकुलानि।।[10]

सकल-वैभवसमृद्धानामपि कुलानां गणना वस्तुतः सत्कुलेषु न भवति। तान्येव श्रेष्ठानि यशोभूषितानि यानि निर्धनान्यपि सदाचारपराणि कुलानि-

कुलानि समुपेतानि गोभिः पुरुषतोऽर्थतः।
कुलसंख्यां न गच्छन्ति यानि हीनानि वृत्ततः।।
वृत्ततस्त्वविहीनानि कुलान्यल्पधनान्यपि।
कुलसंख्यां च गच्छन्ति कर्षन्ति च महद्यशः।।[11]

'आचारः कुलमाख्याती'ति चाणक्यवचनम्।[12] मनुष्यस्याचार एव तस्य कुलशीलमाविष्करोति। किं किं न साधयति सदाचारः? आचारविषयकं प्रथितमेवास्ति महाभारतीयं वचनमेतत् -

आचाराल्लभते ह्यायुराचाराल्लभते श्रियम्।
आचारात्कीर्तिमाप्नोति पुरुषः प्रेत्य चेह च।।
आचारलक्षणो धर्मः सन्तश्चारित्रलक्षणाः।
साधूनाञ्च यथावृत्तमेतदाचारलक्षणम्।।

महाभारतीयेऽस्मिन्नीति वचने यजुर्वेदस्य (4.28) पूर्वोद्घृत– आचारविषयो मन्त्रः साधु प्रतिबिम्बित आभाति। आचाररक्षणाय सदा प्रयतनीयम्। यतो ह्याचारभ्रष्टा नरा विनष्टा इति महात्मा विदुरः–

'वृत्तं यत्नेन संरक्षेद् वित्तमेति च याति च।
अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः।।[13]

'आचारहीनं न पुनन्ति वेदाः' इति नीतिं को न जानति? वेदवेदाङ्गनिष्णातो यज्ञकृद् ब्राह्मणोऽपि सदाचाररहितत्वात्प्रेमास्पदो भवितुं नार्हति–

आचारहीनस्य तु ब्राह्मणस्य
वेदाः षडङ्गास्त्वखिलाः सयज्ञाः।
कां प्रीतिमुत्पादयितुं समर्था
अन्धस्य द्वारा इव दर्शनीयाः।।[14]

आचारपूताः प्रचरन्ति विप्राः। आचारः परमो धर्मः श्रुत्युक्तः स्मार्त एव च। आचारपूतमाश्रयते हि लक्ष्मीः। एवमेवान्यान्यपि नीतिवचनानि सदाचारस्य महिमानं प्रथयन्ति। अतएव सदाचारयुक्तत्वमेव समादरस्य हेतुरिति नीतिः।

'मूकं करोति वाचाऽलमि'ति परमेश्वरस्यानुपमः प्रसादो वाणी। वाणीं विना हि प्राणी सम्यग्भावाभिव्यक्तिं विधातुं नार्हति। हृद्यं रसायनं कर्णामृतं हि मधुरं वचः। 'कोकिलानां स्वरो रूपम्' इति मधुरेण स्वरेण एव कोकिलोऽभिज्ञायते। सतां गृहेषु यानि वस्तूनि कदापि नोच्छिद्यन्ते तेष्वेकं सत्यप्रियं मधुरं वचनम् –

'तृणानि भूमिरुदकं चतुर्थी वाक् सूनृता।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन।।'

अथर्ववेदे ऋषिः कामयते मनसो वाचः कर्मणश्च माधुर्यम्–

जिह्वाया अग्रे मधु मे जिह्वामूले मधूलकम्।
ममेह क्रतावासो मम चित्तमुपयासि।।
मधुमन्मे निष्क्रमणं मधुमन्मे परायणम्।
वाचा वदामि मधुमद् भूयासं मधुसंदृशः।।[15]

वचो माधुर्योपेतं भवत्विति वेदोक्तिः सर्वत्र नीतिसाहित्ये स्फीतं रसति। अत्र स्मृतिरपि श्रुतिमनुसरति–

सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम्।
प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः।।

वरं हि सत्यं प्रियं वचनम्। यदि सत्यं न वदेत् प्रियं न वदेत् धर्मञ्च न वदेत्तद्धि भाषणान्मौनमेव श्रेय इति महात्मानो विदुरस्य नीतिः–

'अव्याहृतं व्याहृताच्छ्रेय आहुः
सत्यं वेदद् व्याहृतं तत् द्वितीयम्।

प्रियं वदेद् व्याहृतं तत् तृतीयं
धर्मं वदेद् व्याहृतं तच्चतुर्थम्।।[16]

'मधुरभाषणं हि सहजो गुण' इत्याचार्यचाणक्यः– 'दातृत्वं प्रियवक्तृत्वं----सहजा गुणाः।[17]

प्रियवक्तृतया सर्वे प्राणिनः प्रसन्नतां यान्ति। प्रियवचनं प्रसादनम्। अतः प्रियं ब्रूयात्। प्रियवचः प्रयोगे कीदृग् दारिद्र्यं कार्पण्यं वा? मधुरं वचनं सत्सङ्गतिश्चेति भुवनगरलतरोर्द्वे अमृतफले–

'प्रियवाक्यप्रदानेन सर्वे तुष्यन्ति जन्तवः।
तस्मात्तदेव वक्तव्यं वचने का दरिद्रता?।।
संसारविषवृक्षस्य द्वे फले ह्यमृतोपमे।
सुभाषितं च सुस्वादु सङ्गतिः सुजने जने।।[18]

'प्रियवचनधनाढ्या हि सद्गुणोपेताः सदाचारिणः' इति नीतिः।[19] सांसारिकेषु षड्गणेषु प्रियवादिनी पत्नी समुल्लिखिता विराजते– 'प्रिया च भार्या प्रियवादिनी च।'[20] अस्मिन्नीतिवचने बीजरूपता वर्तत एवाथर्ववेदस्य–

'जाया पत्ये मधुमतीं वाचं वदतु शान्तिवाम्।[21]

सदोत्थानं हि सततमुद्बोधनं वेदानाम् – 'उत्तष्ठित जाग्रत प्राप्य वरान्निबोधत' इति। वेदा उपदिशन्ति नित्यं क्रियाशीलत्वमालस्यरहितत्वञ्च–'चरैवेति चरैवेति। चरन् वै मधु विन्दति चरन् स्वादु उदुम्बरम्। चरैवेति चरैवेति।। कलिः शयानो भवति----।।'' एवं वेदा निर्दिशन्ति निरालसं जीवनम्। अलसं नरं निन्दति दुष्परिणामं सूचयति आलस्यस्य वेदः–कलिः शयानो भवतीत्यनेन।

ऋग्वेदे तु स्पष्टमेवोक्तं यद् देवगणाः सोमरसनिष्कर्षणव्यापारशीलं यजमानं वाञ्छन्ति न तु स्वप्नशीलमलसम्–

'इच्छन्ति देवाः सुन्वन्तं न स्वप्नाय स्पृहयन्ति।'[22]

'यज्ञो वै श्रेष्ठतमं कर्म' (शत.ब्रा.1.7.1.5) इति वेदोक्तन्यायेन श्रेष्ठकर्मकर्तारो नरा एव देवप्रियाः नालसाः। संस्कृतनीतिसाहित्येऽलसजनान् प्रत्ययं वेदगतस्तिरस्कृतिभावो नानारूपैः प्रचुरमभिव्यक्तः। लोकेऽपि यः सुप्तः स तु वञ्चितः' इत्युक्तिः पुष्णात्येवालसैर्जनैर्भुक्तां स्वार्थलाभहानिम्। आचार्यचाणक्य इममेवार्थं विवृणोति–

"अलब्धलाभो नालसस्य। अलसस्य लब्धमपि रक्षितुं न शक्यते।
न चालसस्य रक्षितं विवर्धते।।"[23]

आलस्यतो विद्या विनश्यति– 'आलस्योपहता विद्या।।'[24]

षडेते दुर्गुणास्त्याज्याः येषु निद्रा–तन्द्रालस्यानि–

षड् दोषाः पुरूषेणेह हातव्या भूतिमिच्छता।
निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता।।[25]

अनालस्यं तु कदापि कथञ्चन न हातव्यम्।[26] याज्ञिकाः समुद्योगिनोनरा कथमप्यलसाः नैव भवन्ति। उक्तं हि–

" उद्योगेन हि सिद्ध्यन्ति कार्याणि न मनोरथैः।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः।।"

अपि चायमेवार्थोऽनूद्यते–

'उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी–
दैंवेन देयमिति कापुरुषा वदन्ति।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः।।'

नीतिकारेण भर्तृहरिणा ह्यालस्यं निर्भरं निर्भत्सितम्। देहाश्रितमालस्यं तु देहिनो महान् शत्रुः। एतद्विपरीतं, तदाश्रित उद्योगः (अभ्युत्थानप्रवृत्तिः कर्मचेष्टा वा) तस्य परमं हितकरं मित्रम् –

आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः।
नास्त्युद्यमसमो बन्धुर्यं कृत्वा नावसीदति।।[27]

समाजेऽतिप्राचीनकालादेव द्यूतकीडा प्रवर्तते। एषा सामाजिकी कुरीतिर्दुर्व्यसनं च निन्दितं सर्वत्र सर्वथा गर्हितम्। द्यूतदुर्व्यसनेन समाजस्य कियती हानिः कियान् चानर्थो जायते, प्रत्यक्षमत्र निदर्शनं महाभारतम्। द्यूतकरस्याधःपतनं रज्जुच्छेदे कूपे घटमिव निश्चप्रचम्। सन्तापकारिमपि दुस्त्याज्यमिदं द्यूत्तकर्म द्यूतकरस्य सम्बन्धिनां क्लेशकरम्।

ऋग्वेदे (अक्षसूक्ते कितवसूक्ते वा) दुर्व्यसनस्य द्यूतस्य द्यूतकरस्य च निरूपणं याथा–तथ्यमुपलभ्यते–

'न मा मिमेथ न जिह्ल एषा शिवा सखिभ्य उत मध्यमासीत्।
अक्षस्याहमेक परस्य हेतोरनुव्रतामप जायामरोघम्।।
द्वेष्टि श्वश्रूरप जाया रुणद्धि न नाथितो विन्दते मर्डितारम्।
अश्वस्येव जरतो वस्न्यस्य नाहं विन्दामि कितवस्य भोगम्।।
नीचा वर्तन्त उपरि स्फुरन्त्यहस्तासो हस्तवन्तं सहन्ते।
दिव्या अंगारा इरिणे न्युप्ता शीताः सन्तो हृदयं निर्दहन्ति।।
जाया तप्यते कितवस्य हीना माता पुत्रस्य चरतः क्वस्वित्।
ऋणावा बिभ्यद् धनमिच्छमानोऽन्येषामस्तमुप नक्तमोति।।
अक्षैर्मा दीव्यः कृषिमित् कृषस्व वित्ते रमस्व बहु मन्यमानः।
तत्र गावः कितव तत्र जाया तन्मे विचष्टे सवितायमर्यः।।[28]'

संस्कृतनीतिसहित्ये यदपि द्यूतविषयकं निगदितं तन्मूले तु कितवसूक्तमेतत्। आचार्यचाणक्यः सूत्रयति द्यूतव्यसनिनः कार्यहानिम् –

'नस्ति कार्यं द्यूतप्रवृत्तस्य'[29] इति।

विदुरस्तु द्यूतनिन्दां कुर्वन् न श्रान्तिं श्रयते। स द्यूतं परिवर्जयति, तस्य च दुष्परिणाममपि निरूपयति बहुधा–

यां रात्रिमधिविन्ना स्त्री यां चैवाक्षपराजितः।
यां च भाराभितप्ताङ्गो दुर्तिवक्ता स्म तां वसेत्।।[30]
'पुरा ह्युक्तं नाकरोस्त्वं वचो मे द्यूते जितां द्रौपदीं प्रेक्ष्य राजन्।
दुर्योधनं वारयेत्यक्षवत्यां कितवत्वं पण्डिताः वर्जयन्ति।।'[31]
द्यूतमेतत्पुराकल्पे दृष्टं वैरकरं नृणाम्।
तस्माद् द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान्।।[32]
'यत्र स्त्री यत्र कितवो बालो यत्रानुशासिताः।
मज्जन्ति तेऽवशा राजन् नद्यामश्मप्लवा इव।'[33]
'यं प्रशंसन्ति बन्धक्यो न स जीवति मानवः।' [34]

भगवता श्रीकृष्णेनाऽऽत्मविभूतियोगे 'द्यूतं छलयतामस्मि' इत्युक्त्वा द्यूतस्य पराकोटिं वञ्चनत्वं प्रदर्शितम्। अतो 'द्यूतं दूरत एव परिवर्जनीयं कल्याणमिच्छद्भिर्जनैरिति भगवान् वेदो नीतिकाराश्च।

'सत्यं वद', 'सत्यमेव जयते' इत्यादिभिः प्रकारैः सत्यस्योद्घोषं कुर्वन्त्यःश्रुतयः सत्यं सत्यस्वरूपाः। 'नास्ति सत्यात्परो धर्मः' इत्येवं स्मृतयोऽपि सत्यस्य स्वरूपनिर्वचनं कुर्वन्ति। ऋग्वेदस्त्वनेकशः सत्यस्य महिमानं प्रस्तौति–'सत्यमूचुर्नर एवा हि चक्रुः' (4.33.6); 'सुगाऋतस्य पन्थाः' (8.31.13); 'सत्यस्य नावः सुक्रमपीपरन्' (9.73.1), 'स हि सत्यो यं पूर्वेद् चिद् देवासश्चियमीधिरे' (4.25.2); ') 'ऋतस्य पन्थां न तरन्ति दुष्कृत :' (9.73.6)। अपि च ऋग्वेद एव–

'सुविज्ञानं चिकितुषे जनाय सच्चासच्च वचसी पस्पृधाते।
तयोर्यत् सत्यं यतरदृजीयस्तदित् सोमोऽवति हन्त्यासत्।।' (7.104.12)

यजुर्वेदे – 'हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्।
तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये।।' (यजुर्वेदः, 40.15)

सामवेदे– 'ऋतावृधौ ऋतस्पृशौ वृहन्तं क्रतुं ऋतेन आशाथे।' (848)।

एवं हि वेदेषु सत्यस्य प्रार्थतं महात्म्यमवलोक्यते। 'सत्यं ब्रूयादि' ति मनुस्मृतिरप्युपदिशति। अनया सत्यवाचा नीतिसाहित्यमप्यनुप्राणितम्।

'सत्यं चेत्तपसा च किमि'ति[36] कथयता भर्तृहरिणा सत्यं परमं तप इति स्वीकृतम्। महात्मना विदुरेणापि 'सत्येन रक्ष्यते धर्मः'[37] इत्युक्त्वा सत्यं धर्मरक्षकं प्रमाणितम्। आचार्य चाणक्यः सत्यं परमं प्रतिष्ठापयति–

सत्येन धार्यते पृथ्वी सत्येन तपते रविः।
सत्येन वाति वायुश्च सर्वं सत्ये प्रतिष्ठितम्।।[38]

'सत्यं माता .......[39] इति कथयन् चाणक्यः सत्यस्य सर्वातिशायित्वं प्रमाणयति।

मानवजीवने दानस्य विशिष्टं महत्त्वं केनाविज्ञातम् ? 'दानमेकं कलौ युगे' इत्युक्ता मनुस्मृतिः (1.86) दानं प्रशंसति। शतपथब्राह्मणे बृहदारण्यकोपनिषदि च इत्याख्याने प्रजापतिनोपदिष्टो मानवो 'द' इत्यस्य दानमेवार्थं जग्राह। पुराणेषु, रामायणे, महाभारतेऽन्येषु च धर्मग्रन्थेषु दानस्य माहात्म्यं फलञ्च सुगुम्फितमेव।

बृहद्देवतानुसारम्, ऋग्वेदे सन्ति नैकाः दानस्तुतयः। परञ्च, तत्र दशममण्डलस्थं दानस्तुतिसूक्तं (भिक्षुसूक्तं वा) दानस्य भव्यं स्वरूपं प्रस्तौति। अस्मिन् लघुकाये सूक्ते दानस्य महत्त्वेन सहैव दानसम्बद्धाः नैतिकशिक्षाश्च विलसन्ति। अस्याः दानस्तुतेः संक्षेप एवमस्ति-

"प्रदातुर्धनं न कदापि क्षीणतामेति। अदाता सुखभाग् न भवति। अन्नदानेन क्षुधातृप्तिकारी भवति। सर्वातिशायी दाता। यो भिक्षुकेभ्यो ददाति, स दुःखं नाप्नोति। प्रदाता सर्वेषां मित्रम्। याचकेभ्यो दीयमानं वस्तु पुण्यमार्गं निर्माति। यस्य दानेऽभिरुचिर्नास्ति तस्यान्नं तमेव हन्ति। य एकाकी भुङ्क्ते स केवलं पापं भुनक्ति। यत्किञ्चिद् देयं श्रद्धया देयमिति।" तद्दानस्तुतिसूक्तस्य प्रमुख मन्त्रा[40] अत्र प्रस्तूयन्ते-

न वा उ देवाः क्षुधामिद्वधं ददुरुताशितमुपगच्छन्ति मृत्यवः।
उतो रयिः पृणतो नोप दस्यत्युता पृणन् मर्डितारं न विन्दत।।
स इद्भोजो यो गृहवे ददात्यन्नकामाय चरते कृशाय।
अरमस्मै भवति यामहूता उतापरीषु कृणुते सखायम्।।
न स सखा यो न ददाति सख्ये सचाभुते सचमानाय पित्वः।
अपास्मात् प्रेयान्न तदोको अस्ति वृणन्तमन्यमरणं चिदिच्छेत्।।
मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत्स तस्य।
नार्यमणं पुष्यति नो सखायं केवलाथो भवति केवलादी।।

वृहदारण्यकोपनिषदि (4.4.22) कथिमस्ति यद् ब्राह्मणा ब्रह्म विदन्ति यज्ञदानतपोभिरिति-
'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन.......।"

विदुरनीतावनेकत्र दानं चर्चितं विद्यते। ये गुणाः कस्यचित्पुरुषस्य ख्यातिं विशदयन्ति तेषु यथाशक्ति कृतं दानमपि परिगणितम् ------ दानं यथाशक्ति कृतज्ञता च।[41] दानगुणोपेतस्योदात्तहृदयस्याभ्युदयसिद्धिर्देवगणैरपि विधीयते।

'दानं होमं दैवतं मङ्गलानि तस्योत्थानं देवताराधयन्ति।'[42]

नीतिशास्त्रे धर्मस्य येऽष्टौ मार्गाः प्रोक्तास्तेष्वेको दानम् -

'इज्याध्ययनदानानि तपः सत्यं क्षमा दया।
अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः।।'[43]

येषां चतुर्णां कार्याणां सद्भिः सह सम्बन्धः स्मृतस्तेष्वेकं दानम् -

'यज्ञो दानमध्ययनं तपश्च चत्वार्येतान्यन्ववेतानि सद्भिः।'[44]
दानमुपभोगश्च धनस्य सुफलं प्रोक्तम् - दत्तभुक्तं फलं धनम्।'[45]
कार्पण्यं तु दानतो जेतव्यम् - 'जयेत् कदर्यं दानेन।'[46]

आचार्यचाणक्योऽपि नयदिशा दानं विनयति। 'अदत्तदानाच्च भवेद् दरिद्री'ति उपनिषद्वाक्यं परिवर्त्य तमेव भावं व्यनक्ति- 'दारिद्र्यनाशनं दानम्।[47] दानशीलता सर्वथा स्वभावतः प्रसरति- 'दातृत्वं ------सहजगुणाः।[48] अद्वितीयाः निरुपमाः सन्ति दानिनोऽस्मिन् भूतले।[49] हस्तस्य शोभा दानेनैव भवति- 'दानेन पाणिर्न तु कङ्कणेन[50]।' भर्तृहरिरपि नीतिशतके भावमिमं निबध्नाति पदैरेभिरेव- 'दानेन पाणिर्न तु कङ्कणेन' इति।[51] दानं भोगो नाशश्चेति धनस्य तिस्रो गतयो भवन्ति-

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति।।[52]

नीतिकारस्य भर्तृहरेरिदं कथनं सर्वथोचिंत प्रतिभाति यत् क्षीणवित्ताः दानिनोऽर्थकार्श्येनैव शोभन्ते-

तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु जनाः।[53]

वरतन्तुशिष्यस्य प्रसङ्गे विश्वजिद्यज्ञकृतो रघोः प्रयागे च कुम्भपर्वणि महाराजहर्षवर्धनस्य दानोत्पन्नमर्थकार्श्यं सुविदितमेव।

अस्त्येव पूर्वोद्धृते ऋग्वेदीये दानस्तुतिसूक्ते 'केवलाघो भवति केवलादी' ति। अस्यार्थच्छाया नीतिवचनेषु यथावद्गृहीता। मनुस्मृतौ (3.118)अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणादि' ति। एवमेव श्रीमद्भगवद्गीतायामपि 'भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणादि' ति.. (3.13) सुस्पष्ट मेव। नीतिमञ्जर्यां परस्परं विभज्य भोक्तुं समीहितम्- 'विभज्य भुञ्जते सन्तो भक्ष्यं प्राप्य सहाग्निना।' आचार्य चाणक्योऽपि निर्दिशति- 'तद् भोजनं यद् द्विजभुक्तशेषम्'[54] अर्थात् भोजनं तु तदेव यद् ब्राह्मणैर्भुक्तानन्तरमवशिष्टम्। व्यवहारेऽपि सद्गृहस्थाः यज्ञशिष्टान्नं, देवेभ्योऽर्पितं भोगमथवा अतिथिब्राह्मणेभ्यो निवेदितं भोजनं, तद् भुक्तशेषं प्रसादं मत्वा श्रद्धया गृह्णन्ति। नीतिज्ञशिरोमणिर्महात्मा विदुरोऽपि प्राह यदाश्रितेषु विभज्य, याचिते सति शत्रुभ्योऽपि प्रदाय तत्रावशिष्टं स्वल्पमपि भोजनं विशिष्टं भवति सकलान् चानर्थानपाकरोति-

'मितं भुङ्क्ते संविभज्याश्रितेभ्यो मितं स्वपित्यमितं कर्म कृत्वा।
ददात्यमित्रेष्वपि याचितः संस्तमात्मवन्तं प्रजहत्यनर्थाः।।'[55]

आदर्शभूता भवन्ति सम्बन्धाः पतिपत्न्योः पितृपुत्रयोरन्येषां च कुटुम्बिनामेकस्मिन् सुमतिसमृद्धे सुखसन्नद्धे कुले। वेदोऽपि सम्यगुपदिशति-

अनुव्रतः पितुः पुत्रो मात्रा भवतु संमनाः।
जाया पत्ये मधुमतीं वाचं वदतु शान्तिवाम्।।
मा भ्राता भ्रातरं द्विक्षन् मा स्वसारमुत स्वसा।
सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया।।[56]

नीतिसाहित्ये बीजरूपोऽयमर्थो न्युप्तोऽमितं समुद्भिन्नः पल्लवितश्च। आचार्य चाणक्यः चिनोति चातुर्येणेममर्थम्-

'यस्य पुत्रो वशीभूतो भार्या छन्दानुगामिनी।
विभवे यस्य सन्तुष्टि : तस्य स्वर्ग इहैव हि।।'

अपिच, ते पुत्रा ये पितुर्भक्ताः स पिता यस्तु पोषकः।
तन्मित्रं यस्य विश्वासः सा भार्या यत्र निर्वृतिः।।[57]

पुत्रः पितुराज्ञाकारी स्यादिति शुक्रनीतिरपि-

'प्राप्याऽपि महतीं वृद्धिं वर्त्तते पितुराज्ञया।
पुत्रस्य पितुराज्ञाऽपि परमं भूषणं स्मृतम्।।[58]

सांसारिकेषु षट् सुखेष्वाज्ञाकारी पुत्रः प्रियवादिनी च पत्नी परिगणिते महात्मना विदुरेण-

अर्थागमो नित्यमरोगिता च
प्रिया च भार्या प्रियवादिनी च।
वश्यश्च पुत्रोऽर्थकरी च विद्या
षड् जीवलोकस्य सुखानि राजन्।[59]

नीतिकारो भर्तृहरिरप्यादर्शकुटुम्बं चित्रयति-

'यः प्रीणयेत् सुचरितैः पितरं स पुत्रः
यद्भर्तुरिव हितमिच्छति तत्कलत्रम्।
तन्मित्रमापदि सुखे च समक्रियं यद् -
एतत्त्रयं जगति पुण्यकृतो लभन्ते।।'[60]

न केवलं मानवेषु, अपि तु सर्वेषु जीवेषु मैत्रीभावः, सख्यगुणः सौहार्दप्रीतिश्चालक्ष्यते। एकं साधुमित्रं कुटुम्बिजनानप्यतिरिच्य महदुपकारकं हितसाधकञ्च भवति। 'न स सखा यो न ददाति सख्ये' इति वेदवचनं दानस्तुतिसूक्तमन्त्रे (10.117.4) दृष्टमेव। एवं हि मित्र-व्यवहारपराण्यनेकानि वचनानि वेदेषूपलभ्यन्ते। नीतिशास्त्रे मित्रलक्षणं मित्राणां गुणाश्च बहुधा वर्णिताः। प्रसिद्धमिदं नीतिवचनम्-

'पापान्निवारयति योजयते हिताय गुह्यांश्च गूहति गुणान् प्रकटीकरोति।
आपद्गतं न जहाति ददाति काले सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः।।'

महाभारतस्य शान्तिपर्वणि मित्रलक्षणं महर्षिणा व्यासेनोक्तम्-

''आर्तिरार्ते प्रिये प्रीतिरेतावन्मित्रलक्षणम्।
विपरीतं तु बोधव्यमरिलक्षणमेव तत्।।[61]''

कामन्दकीयनीतौ सुहृदो गुणा एवं प्रोक्ताः-

''शुचित्वं त्यागिता शौर्यं सामान्यं सुखदुःखयोः।
दाक्षिण्यं चानुरक्तिश्च सत्या च सुहृद्गुणाः।।[62]''

'यो मित्रं त्यजति स पापभाक् पुण्यं नाश्नुते'- स्पष्टमेव वेदयति वेदः-

यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति।
यदीं शृणोत्यकलकं शृणोति न हि प्रवेद सुकृतस्य पन्थाम्।[63]

एतमेवार्थं महात्मा विदुरो नीतिमुखेन व्यनक्ति–" मित्रत्यागि चेष्यते।"[64]

अपि च, 'हरणं च परस्वानां परदाराभिदर्शनम्।
सुहृदश्च परित्यागः त्रयो दोषाः क्षयावहाः।।[65]

इत्येवं प्रमिताक्षरैरत्र संस्कृतनीतिसाहित्ये वेदस्य प्रभावः प्रदर्शितः। विस्तरभियाऽन्येऽनेके विषयाऽस्मिन् प्रबन्धे नैव गृहीताः।

अन्ते च,

संस्कृतनीतिसाहित्यं वेदतत्त्वोपबृंहितम्।
एवमत्र मयाऽऽख्यातं प्रमितं सनिदर्शनम्।।

## सन्दर्भाः

1. श्रीमद्भगवद्गीता 10.38
2. तत्रैव 18.78
3. रघुवंशमहाकाव्यम् 12.67
4. कुमारसम्भवमहाकाव्यम् 1.22
5. शिशुपालवधमहाकाव्यम् 2.30
6. नैषधीयचरितमहाकाव्यम् 5.103

7 क. निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु.
प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते.. (हर्षचरितम् , 7.17).

7 ख .साहित्यपाथो दधिमन्थनोत्थं कर्णामृतं रक्षत हे कवीन्द्राः. (विक्रमाङ्कदेवचरितम् )

8. शुक्लयजुर्वेदः 4.28
9. विदुरनीतिः 7.55
10. विदुरनीतिः 4.24.
11. तत्रैव, 4.28–29
12. चाणक्यनीतिदर्पणः, 3.2.
13. विदुरनीतिः, 4.30.
14. चाणक्यनीतिदर्पणः, 3.9.
15. अथर्ववेदः, 1.34.2–3.
16. विदुरनीतिः, 4.12.
17. चाणक्यनीतिदर्पणः, 3.9.
18. तत्रैव, 16.17.18.
19. नीतिशतकम्, 104.

20. विदुरनीतिः , 1.87.
21. अथर्ववेदः, 3.30.2.
22. ऋग्वेदः, 8.2.18.
23. चाणक्यसूत्राणि, 38,39,40.
24. चाणक्यनीतिदर्पणः, 5.7.
25. विदुरनीतिः, 1.83.
26. षडेव तु गुणाः पुंसा न हातव्याः कदाचन. सत्यं दानमनालस्यमनसूया क्षमा धृतिः..–तत्रैव, 1,86.
27. नीतिशतकम् , 86.
28. ऋग्वेदः 10.34 तः केचन मन्त्राः .
29. चाणक्यसूत्राणि, 71.
30. विदुरनीतिः, 3.31.
31. तत्रैव, 4.70 .
32. तत्रैव, 5.19.
33. विदुरनीतिः, 6.43.
34. तत्रैव, 6.45.
35. श्रीमद् भगवद् गीता, 10.36
36. नीतिशतकम् , 55.
37. विदुरनीतिः, 2.39
38. चाणक्यनीतिदर्पणः, 5.17.
39. तत्रैव, 12.11.
40. ऋग्वेदः, 20.117.1.3.4.6.
41. विदुरनीतिः, 1.104.
42. विदुरनीतिः, 1.121
43. तत्रैव, 3.56
44. तत्रैव, 3.55
45. तत्रैव, 7.65
46. तत्रैव, 7.72
47. चाणक्यनीतिदर्पणः, 5.11
48. तत्रैव, 11.1
49. तत्रैव, 14.8
50. तत्रैव, 17.12
51. नीतिशतकम्, 72
52. तत्रैव, 43

53. तत्रैव, 44
54. चणाक्यनीतिदर्पणा:, 15.8
55. विदुरनीति:, 4.123
56. अथर्ववेद:, 3.30.2-3.
57. चाणक्यनीतिदर्पण: 2.3-4.
58. शुक्रनीति: 2.38.
59. विदुरनीति:, 1.87
60. नीतिशतकम्, 68
61. महा. शान्तिपर्व, 103.50
62. कामन्दकीयनीति:, 4.75
63. ऋग्वेद:, 10.71.6
64. विदुरनीति:, 7.50
65. तत्रैव, 1.70



# अश्वमेधयागः - उद्भवो विकासश्च

- प्रो. उमाशङ्कर शर्मा 'ऋषिः'

*(अश्वमेघ यज्ञ का प्रचलन अति प्राचीन काल से प्रचलित है। विभिन्न श्रौत सूत्रों में इसकी विस्तृत चर्चा की गई है। यह यज्ञ राजशक्ति का परिचायक होता था। अपने समय के प्रसिद्ध चक्रवर्ती सम्राटों के द्वारा अनुष्ठान करने का उल्लेख प्रामाणिक ऐतिहासिक ग्रन्थों में प्राप्त होता है। इस यज्ञ की प्रक्रिया वर्षव्यापिनी होती थी। ऋग्वेद से ब्राह्मण काल तथा श्रौतसूत्र प्रणयन काल तक इसकी अविच्छिन्न परम्परा थी। कालान्तर में पशुहिंसा के कारण सम्राट अशोक के काल में निषेध का उल्लेख किया है, किन्तु ब्राह्मण धर्म के उदय के पश्चात् पुनः कुछ राजाओं के द्वारा यज्ञ की प्रवृत्ति का भी उल्लेख प्राप्त होता है।)*

अश्वमेधः विभिन्नेषु श्रौतसूत्रेषु प्रमुखतया निर्दिष्टः प्रपञ्चितश्च।[1] प्रचलनमस्य पूर्वकालादेव बभूव यतः ऋग्वेदसंहितायाः प्रथममण्डले सूक्तद्वयेन (162-63) अश्वदेवता केन अनुमीयते यत् देवरूपेण अश्ववर्णनं तद्विषयकं यजनञ्च तदानीं तत्पूर्वमेव वा प्रवर्तते स्म। 'चषालं य अश्वयूपाय तक्षति' (ऋ. 1.162.6), 'अत्रा ते भद्रा रशना अपश्यम्' (1.163.5) इत्यादयो मन्त्रांशाः तत्रत्याः स्पष्टं तन्निरूपयन्ति। तदानीं जना विश्वसन्ति यदश्वमेधस्याश्वः स्वर्गमेति। 'एष च्छागः पुरा अश्वेन वाजिना' (ऋ. 1.162.3) इति ज्ञापयति यत् अश्वाग्रे एकः अजोऽपि नीयते स्म। अश्वं परितः त्रिवारं हविष्यं परिक्रान्तं भवतीति अर्यर्चेन सूच्यते- 'यद्धविष्यमृतुशो देवयानं त्रिर्मानुषाः पर्यश्वं नयन्ति' (ऋ. 1.162.4)।

किञ्च शतपथब्राह्मणे (13.1-5) तैत्तिरीयब्राह्मणे (3.8-9) चाश्वमेधो वर्णितः। बहवः प्राचीना राजानस्तत्रोल्लिखिताः, यैरश्वमेधोऽनुष्ठितः। तैत्तिरीये तु अवश्वमेधो राष्ट्ररूपेण निर्दिष्टः (राष्ट्रं वा अश्वमेधः)। अयमपि तत्रोल्लेखो यत् कश्चिदबलः राजा अश्वमेधानुष्ठानं करोति चेत् स निक्षिप्यते, यतः शत्रुभिर्लब्धो यज्ञाश्वः यज्ञं निहन्ति (तै. ब्रा. 3.8.9 यदमित्रा अश्वं विन्देरन् हन्येतास्य यज्ञः)। श्रौतसूत्रेषु ब्राह्मणगत एव अश्वमेधविषयो विस्तरेण दत्तः। तत्रायं त्रिषु सोमसवनदिवसेषु अनुष्ठीयमानत्वादहीनो यज्ञः इति वर्णितः, त्र्यह इति विशेषः। आपस्तम्बः कथयति यत् सार्वभौमो राजा अभिषिक्तो वा अश्वमेधमनुष्ठातुमर्हति (आपस्तम्ब 20.1.1)।

यथा ऐतरेयब्राह्मणे (39.1) राजसूयविषये प्रतिपादितं तथैव आश्वलायनः सर्वकामावाप्तये विजयाभिलाषार्थं विभुसमृद्धिलाभार्थं चाश्वमेधविधानं कुरुते।[2] नूनमेवास्यानुष्ठानं क्षत्रियैः तत्रापि राजभिरेव क्रियते स्म। भारते क्षत्रियेतरैरपि राजशासनं कृतमिति तेऽपि यदा कदा अश्वमेधमन्वतिष्ठन्।

प्राचीने काले राजसंस्थाया उदये सति राजशक्तिप्रमाणीकरणाय एतस्य सामान्यमनुष्ठानं भवति स्म। किन्तु शनैः शनैः पुरोहितवर्गेणास्मिन् कर्मकाण्डस्य विविधाः उपचाराः समावेशिताः। अतएव सार्वभौमत्वं कामयमानानां राज्ञामेव कृते अश्वमेधो विहित आसीत्। **यज्ञाश्वस्य** अनिरुद्धं भ्रमणं यज्ञकर्त्तुः नृपस्य अश्वाक्रान्तभूमिषु राजशक्तिं निर्दिशति स्मेति सामान्यजनेषु अश्वमेधस्य परिणामः प्रसारितः। तत्र कर्मकाण्डं तु शास्त्रमात्रे पर्यवसितम् , न जनेषु।

अश्वमेधानुष्ठानं प्राचीनेऽपि काले विरलमासीत् , राजशक्तेरस्थिरत्वात्। तथा च तैत्तिरीयसंहितायां (5.4.12.3) शतपथब्राह्मणे (1.3.3.6) च अश्वमेधस्य उत्सन्नयागत्वं (प्रचलनाभावः) प्रतिपादितम्। अथर्ववेदेऽपि कतिपयैर्यज्ञैः सहाश्वमेधस्यापि उत्सन्नत्वं संकेतितम्।[3] अश्वमेधस्य प्राचीनकर्मकाण्डे विविधा उपचारा विचित्राः सन्ति। तेषां विषये लेखकानां मतभेदोऽपि दृश्यते।

यज्ञस्यास्यानुष्ठानस्य कालमालम्ब्य विविधानि मतानि लभ्यन्ते सूत्रेषु। यथा- फाल्गुनशुक्लपक्षस्य ज्येष्ठमासशुक्लपक्षस्य वा अष्टम्यां नवम्यां वा तिथौ अस्यारम्भः विहितः। केचित् (कात्यायन-लाट्यायनौ) **आषाढमासे** तत्ततिथौ अश्वमेधारम्भं मन्यन्ते। आपस्तम्ब (20.1.4) मतेन तु चैत्रपूर्णिमायां यज्ञारम्भः प्रशस्तः। प्रारम्भिके कर्मणि ब्रह्मौदनपाकः घृतेन मिश्रयित्वा होत्रादिभ्यश्चतुर्भ्यः ऋत्विग्भ्यः प्रदीयते। एते च अश्वस्योपरि पवित्रं जलं क्षिपन्ति।

अश्वविषयेऽपि विधानानि सन्ति। अश्वः श्वेतवर्णः कृष्णवर्णवृत्ताङ्कितः प्रशस्तः। स च आशुगो भवेत्। श्वेताश्वाभावे पृष्ठभागे श्वेतः अग्रभागे कृष्णवर्णोऽपि अश्वः उपयुज्यते। अश्वं परितश्चतसृषु दिक्षु उपर्युक्ताश्चत्वारः ऋत्विजः अश्वस्योपरि जलसेचनं कुर्वन्ति। अश्वः पुनः जले नीयते। आपस्तम्बादयः कथयन्ति यत् अश्वस्याधस्तात् विशिष्टस्य (चतुरक्षस्य) शुनः शवः जले उत्तीर्यते। तदनन्तरम् अश्वः अग्निसमीपे आनीयते। यावत् अश्वशरीराद् जलबिन्दवः पतन्ति तावद् अग्नावाहुतयो दीयन्ते। तदनन्तरं मुञ्जमयी दर्भमयी वा मेखला अश्वस्य कटिभागे परिधीयते। मेखलायाः दीर्घत्व-परिमाणं विदधते सूत्रकाराः द्वादश त्रयोदश वा अरत्नय इति। पुनरप्यश्वे जलं समन्त्रकं क्षिप्यते।

शतसंख्यकैः राजकुमारैः सह शताधिकैरन्यैरपि रक्षकैरनुगतः अश्वः स्वैरवृत्त्या विचरणाय मुच्यते। सर्वेऽपि रक्षकाः सायुधा भवन्ति। संहितानुसारेण तेषां संख्या चतुःशतं भवति (वाजसनेयि. 22.19; तैत्तिरीय सं. 7.1.12.1)। वर्षं यावदश्वः स्वाधीनतया विचरति देशे च विदेशेषु च। स न प्रत्यावर्तते। अश्वरक्षकाः तावन्तं कालं ब्राह्मणगृहादेव भोजनं याचन्ते, रात्रौ च **रथकारगृहेषु** स्वपन्ति।[4] यावदश्वः अनेन प्रकारेण बहिर्विचरति, तावद् राजा (यजमानः) प्रत्यहं सवितृदेवाय प्रातर्मध्याह्ने सायं च तिस्रः इष्टीः सम्पादयति। तेषु कालेषु सविता क्रमशः सत्यप्रसवः, प्रसविता, आसविता इत्यभिधाय पूज्यते। यदा प्रयाजाहुतयो दीयन्ते, तदा पुरोहितेतरो ब्राह्मणो वीणावादनसहितं स्वरचिताः राजप्रशस्तिरूपाः तिस्रो गाथाः (गीतरूपाः) गायति।[5] एवमेव कश्चित् क्षत्रवर्णो वीणावादकः राज्ञः (यजमानस्य) संग्रामाणां विजयानां च विषये प्रशस्तिगानं करोति।

वर्षपर्यन्तं च होता सवितुरिष्टेरनन्तरम् आहवनीयाग्रेः दक्षिणस्यां दिशि स्वर्णासनमुपविश्य सपुत्रं मन्त्रियुक्तं च राजानमभिषिक्तं यजमानं पारिप्लवनामकमुपाख्यानं श्रावयति। अन्ये ऋत्विजश्च

राज्ञस्तद्वंशजानां पूर्वपुरुषाणां कार्याणि कीर्तीश्च स्तुवन्ति। सर्वथा राजस्तुतिः अश्वमेधस्य महत्त्वपूर्णं कृत्यम्। राजसत्तासमर्थकोऽयं यज्ञः इति न संशयः। किन्तु यावदश्वमेधः प्रवर्तते, तावत्कालपर्यन्तं प्रतीकरूपेण अध्वर्युरिव राजा तिष्ठति। राजा च कथयति– हे ब्राह्मणाः सामन्ताश्च, यादृशं सम्मानं भवन्तो मह्यमर्पयन्ति, तादृशमेवास्मै अध्वर्यवे ददतु।[6] यच्च पारिप्लवाख्यानमुपरि चर्चितं तद्विषयेऽनेकत्र वर्णनं लभ्यते।[7] पारिप्लवाख्याने विविधाः गाथाः गीयन्ते। दशदिवसात्मकं गाथाचक्रं वर्षपर्यन्तं चलति। प्रतिचक्रं च दिने दिने नाना गाथाः पूर्वकालादागता गीयन्ते। प्रथमदिवसादारभ्य दशमदिनपर्यन्तं पृथक् पृथक् कृत्यानि भवन्ति। यथा **प्रथमे दिवसे** होता कथयति यन्मनुः विवस्वतः पुत्रः, सर्वे मानवाः तस्य सन्ततयः। तदनन्तरं होतैव कक्षे उपस्थितान् जनान् सम्बोधयति– सर्वे भवन्तो मनुसन्तानरूपाः तिष्ठन्ति। पुनः ऋग्वेदस्य ऋग्विशेषं पठित्वासौ वदति– 'अद्य वेदः ऋचां वेदो वर्तते' इति।

द्वितीयदिवसे होता वदति– यमो विवस्वत्पुत्रः, पितरश्चास्य प्रजा इति। एवमुक्त्वा स सभायां स्थितान् वयोवृद्धान् निर्दिशति, यजुर्वेदस्यचैकमनुवाकं पठति। एवमेव पृथक् पृथक् दिवसेषु क्रियमाणस्य कर्मणो विधानानि वर्तन्ते दशमदिवसपर्यन्तम्। एतेषु दिनेषु सर्वे वेदाः पठ्यन्ते प्रतीकमात्रेण पुराणांशाश्च; सर्वे च प्राणिनः प्रजात्वेन निर्दिश्यन्ते। कृत्यचक्रं वर्षपर्यन्तं किञ्चित् परिवृत्य चलति इति श्रौतसूत्रेषु विस्तरो लभ्यते। अध्वर्युः, उद्गाता, होता च भूयिष्ठया दक्षिणया प्रसाद्यन्ते इत्यपि निर्दिष्टम्।

अश्वमेधस्य परिसमाप्तेः पूर्वमेव अश्वो यदि म्रियेत रुग्णो वा जायेत तदा यज्ञविशुद्धिकर्मरूपेण केचन विधयोऽपि आपस्तम्बादिश्रौतसूत्रेषु दर्शिता लभ्यन्ते।[8] शत्रुणा अश्वग्रहणेऽपि यज्ञनाशो मतः। वर्षान्ते च अश्वः अश्वशालामानीय यजमानस्य (राज्ञः) दीक्षाकार्यं जायते। दीक्षानन्तरं यजमानस्य स्तुतिर्देवतावद् भवति। एवमेव सोमसवनदिवसेषु विविधासु इष्टिषु चासौ प्रजापतितुल्यः मन्यते।

अश्वमेधयागे सम्पूर्णतया एकविंशत्यरत्निमानाः एकविंशतिरेव यूपाः स्थाप्यन्ते। मध्ययूपः श्लेष्मांतकवृक्षगतस्य काष्ठस्य भवति। तमुभयतः देवदारुकाष्ठस्य यूपौ भवतः। तत्पार्श्वे बिल्व-खदिर-पलाशयूपाः स्थाप्यन्ते। यूपस्थापनमेव अश्वमेधस्य यागत्वं साधयति। **यज्ञ-यागयोरयं विशेषः**। यूपसम्बन्धरहितत्वे सति शास्त्रविहितकर्मविशेषः (देवतोद्देशेन हविस्त्यागः) यज्ञः, सयूपत्वे सति अग्न्याहुतित्वं यागः इति कोषकारा आहुः।[9] अत्र लक्षणे अग्निहोत्रवारणाय सत्यन्तम्। देवगृहस्थण्डिलविशेषवारणाय अग्न्याहुतित्वमिति पदकृत्यमपि ज्ञेयम्। कालान्तरे च यथा सर्वेषु रूपकभेदेषु नाटक शब्दस्य प्रधानत्वात् प्रयोगः, तथैव याग-यज्ञयोरपि श्रौतसूत्रगते भेदे नष्टे अश्वमेधयज्ञः इत्यपि प्रचलनं जायते। परमार्थतस्तु 'अश्वमेधयागः' इत्येव श्रौतः प्रयोगः साधीयान्। यूपस्थापनानिवार्यत्वात्।

यागेऽस्मिन् द्वादशदीक्षादिवसाः, द्वादश उपसद्दिवसाः, त्रयश्च सोमसवनदिवसाः भवन्ति। यूपेषु विविधा यज्ञपशवो बद्धा जायन्ते। केषाञ्चिदालम्भनं केषाञ्चिन्मोचनं भवतीति विशेषः। त्रिषु सोमदिवसेषु द्वितीयः अतीव महत्त्वपूर्णः, तत्र बहुलकृत्यसंप्रयोगात्। तस्मिन् दिवसे केचन

विचित्रा रोचकाश्च क्रियाकलापाः विहिताः।[10] यज्ञाश्वः त्रिभिरन्यैरश्वैः सह रथे संयोज्यते। रथमारुह्य अध्वर्युः यजमानश्च सरोवरं जलाशयं गच्छतः, अश्वं चास्मिन् प्रवेशयतः। यज्ञस्थलं प्रत्यावृत्य पुनः कृत्यान्तराणि सम्पाद्यन्ते। पट्टमहिषी अन्याश्च राज्ञः प्रियाः क्रमेणाश्वस्य अग्रभागे मध्यभागे पृष्ठभागे च घृतं लेपयन्ति। 'भूर्भुवः स्वः' इति शब्दैस्ताः अश्वशीर्षे ग्रीवाकेशेषु पुच्छेषु च एकाधिकशतं कनकगुटिकाः बध्नन्ति। ऋग्वेदमन्त्रैः (ऋ. 1.163) अश्वस्तुतिर्भवति। राजभार्याः अश्वस्य त्रिवारं परिक्रमां च कुर्वन्ति। अश्वस्यालम्भनानन्तरं कतिपयानि विचित्रकृत्यानि विधीयन्ते यथा- मृताश्वपार्श्वे राजमहिष्याः शयनम् , अध्वर्युणा तस्याः अश्वस्य चोपरि आवरकाच्छादनम्, अपशब्दप्रयोगश्च। अश्लीलव्यवहारः तत्र कथं विहितः इति प्राचीना कापि गर्हितपरम्परा धर्मेण योजितेति मन्ये।

तृतीयदिवसस्य सोमसवनानन्तरं यागसम्पूर्णतासूचकम् अवभृथस्नानमाचर्यते। यागान्ते ऋत्विग्भ्यो गावः दक्षिणारूपेण दीयन्ते। गवां प्रभूता संख्या तद्विषये निर्दिष्टा वर्तते। एवं सामान्यरूपेण यागस्यास्य परिचयः श्रौतसूत्रानुसारेण दातुं शक्यते।

रामायण-महाभारतयोरपि अश्वमेधस्य विशिष्टं वर्णनं लभ्यते। रामायणस्य बालकाण्डे पुत्रोत्पत्तिकामनया दशरथेन कृतस्याश्वमेधस्य वर्णनं वर्तते। दशरथः कथयति-

**पुत्रार्थं हयमेधेन यक्ष्यामीति मतिर्मम।** (बालकाण्डे 12.8)

सार्वभौमत्वं श्रौतसूत्रेष्वश्वमेधफलमिति प्रागुक्तम्। अत्र तु पुत्रलाभ इति विशेषः। किन्तु प्रक्रिया श्रौती एव ईषत्काव्यशैल्यामुपवर्णितेति। अश्वमेधे नाना राजानः आमन्त्रिताः (13.20-29)। संवत्सरान्ते समागते तुरङ्गमे त्रिषु दिवसेषु सोमसवनमपि कृतमिति वर्णितम्। विशेषेण अतिथिसत्कार एव विस्तरेण दर्शितस्तत्र। 'त्र्यहोऽश्वमेधः संख्यातः कल्पसूत्रेण ब्राह्मणैः' (14.40) इत्यपि शास्त्रविधिर्निरूपितः। अश्वालम्भन-राज्ञीशयनादयः क्रियाकलापा अपि वर्णिता एव। अश्वमेधः महायज्ञः इति प्रतिपादितं तत्र (14.2)। उत्तरकाण्डेऽपि रामेणाश्वमेधानुष्ठानं वर्णितम्।

अपि च महाभारते आश्वमेधिकपर्वणि विस्तरेण यागोऽयं वर्णितः। तत्रापि प्रायेण मुख्यविषयाः धार्मिककृत्यानि च प्रकाशितानि। व्यासो युधिष्ठिरं कथयति यदश्वमेधेन यजमानस्य सर्वाणि पापकर्माणि विलीयन्ते।[11] युधिष्ठिरः चैत्रपूर्णिमायां तदर्थं दीक्षामाप्नोत्। अश्वमनु तदानीं वर्षं यावदर्जुनो रक्षार्थमगात्- युद्धस्य परिवर्जनायासौ निर्दिष्ट आसीत्।[12] कृष्णसारोऽसावश्वः सम्पूर्णे भारते पूर्वदिशः दक्षिणदिशं ततः पश्चिमत उत्तरां दिशं बभ्राम। मार्गे युद्धमप्यभूत्। शत्रवो न हताः, प्रत्युताश्वमेधयज्ञमाहूताः अर्जुनेन। रामायणमहाभारतयोरुभयोरपि अश्वमेधानुष्ठानविधिः यूपसंख्यादिः समानप्रायः। मृताश्वपार्श्वे द्रौपद्याः शयनमपि महाभारते (आश्व. 89.2-3) निर्दिश्यते। अश्ववपायाः आहुतिरपि कृता। किन्तु आपस्तम्बः (20.18.11) वपाहुतेर्निषेधं करोति। व्यासाय सम्पूर्णा मेदिनी दाने प्रदत्ता, किन्तु स ब्राह्मणेभ्यः स्वर्णदानं निर्दिश्य मेदिनी प्रत्यावर्तितेति विशेषः।

एतदतिरिक्तमपि भारतस्येतिहासे अश्वमेधानुष्ठानं विभिन्नैः राजभिः कृतमिति लभ्यते। सर्वप्रथमं वैदिकधर्मप्रतिष्ठात्रा शुंगवंश्येन पुष्यमित्रेण वारद्वयम् अश्वमेधः कृतः इति अयोध्याभिलेखेन ज्ञायते। एकस्मिंस्तु स पुत्रं वसुमित्रमेव अश्वरक्षायां नियोजितवान्। यज्ञाश्वः सिन्धोर्दक्षिणतीरे

यवनैर्गृहीतोऽभूत्। तदानीं सेनयोर्मध्ये समरो बभूव। वसुमित्रो विजयी जातः, अश्वश्च मोचितः इति कालिदासो मालविकाग्निमित्रनाटके (5.15) सूचयति–

**ततः परान् पराजित्य वसुमित्रेण धन्विना।**
**प्रसह्य ह्रियमाणो मे वाजिराजो निवर्तितः।। इति**

महाभाष्यकारः पतञ्जलिस्तत्र पुष्यमित्रस्य पौरोहित्यं समपादयत्।

चतुर्थशतके गुप्तराजवंश्यः महायोद्धा समुद्रगुप्तो भारतस्यानेकान् राज्ञो विजित्य अश्वमेधयागमनुष्ठितवान्।[13] पञ्चमशतके कामरूपस्य राजा महेन्द्रवर्मापि अश्वमेधानुष्ठानमकार्षीत्।[14] सप्तमशतके गुप्तनरेशेन आदित्यसेनेनापि यागोऽयमनुष्ठितः। चालुक्यवंशोद्भवो राजा पुलकेशी (प्रथमः) अश्वमेधानुष्ठानं चकारेति तत्पौत्रस्य कीर्तिवर्णनपराद् ऐहोलाभिलेखाद् (634 ई.) ज्ञायते यथा–

**भूश्च येन हयमेधयाजिना**
**प्रापितावभृथमज्जनं बभौ। ( ऐ.शिला., श्लो.8 )**

प्रथमशतकेऽपि आन्ध्रप्रदेशे सातवाहनवंश्यः शातकर्णिः (प्रथमः) दक्षिणभारतस्यानेकान् प्रदेशान् विजित्य अश्वमेधयागमन्वतिष्ठत्।[15] एतेन दक्षिणभारते वैदिकप्रतिष्ठा ज्ञायते। प्रावर्तत च तत्र वेदानुशीलनपरम्परा।

अपि चाष्टादशशतकारम्भे (प्रायेण 1714 ई. वर्षे) आमेरनरेशो जयसिंहः (सवाई इति ख्यातः) जयपुरनगरं स्थापयन् नाना दिग्देशेभ्यः पण्डितान् आहूय अश्वमेधयागमनुष्ठितवान्। सर्वशास्त्रज्ञो नागेशभट्टोऽपि काशीतो निमन्त्रितः, किन्तु क्षेत्रसंन्यासकारणादसौ न गतः इति प्रसिद्धा वार्ता।

एतेन ज्ञातुं शक्यते यदश्वमेधस्योद्भवः राजसत्तोदयं सूचयति। ऋग्वेदादेवास्य प्रवर्तनाद् ब्राह्मणकाले श्रौतसूत्रप्रणयनकाले च अविच्छिन्नाऽऽसीत् परम्परा। पशुहिंसाकारणाद् सम्राट् अशोकः एतस्य निषेधाय प्रयासविशेषं चकार। किन्तु ब्राह्मणधर्मस्योदयादनन्तरं भारते वर्षे यत्र तत्र प्रसिद्धा राजानः अश्वमेधयजने प्रवृत्ता अभवन्निति इतिहाससूत्रेभ्यो ज्ञायते। अद्य तु तादृशं राजतन्त्रं नास्ति, न च विजयप्रसङ्गः, नापि यागसम्भारकृत्यानि। तथापि एतस्य दीर्घकालिकी परम्परा बभूवेति न विस्मरणीयम्।

**सन्दर्भग्रन्था :-**

1. आश्वलायनश्रौतसूत्रम् 9.3-4; शांखा. श्रौ.सू. 15.12-27 तथा 16.18; लाट्या. श्रौ.सू. 9.1-3; कात्या. श्रौ. सू. 15; मानव श्रौ. सू. 9.1; वाराह श्रौ.सू. 3.4.1-5; बौधायन श्रौ. 15; आपस्तम्ब श्रौ. 20.1-23; हिरण्यकेशि श्रौ. 13; वाधूल श्रौ. 11; वैतानसूत्रम् 36.1-18.
2. आश्वलायन श्रौ. 10.6.1 सर्वान् कामानाप्स्यन् , सर्वा विजितीः विजिगीषमाणः, सर्वा व्युष्टीः व्यशिष्यन्, अश्वमेधेन यजेत।
3. पी.वी. काणे- धर्मशास्त्र का इतिहास, भाग-1, पृ. 569
4. आपस्तम्ब श्रौ. 20.5.15-18

5. आपस्तम्ब श्रौ. 20.6.5
6. आपस्तम्ब श्रौ. 20.3.1-2
7. आश्वलायन श्रौ. 10.7.1-10; शतपथब्राह्मणम् 13.4.3; शांखायन श्रौ. 16.2
8. आपस्तम्ब श्रौ. 22.7.9-20; कात्यायन श्रौ. 20.3.13-21.
9. सर्वतन्त्रसिद्धान्तपदार्थलक्षणसंग्रहः, पृ., 166-7
10. India of Vedic Kalpasutras, p 554
11. महाभारतम् , आश्व. 71.16
12. महाभारतम् , आश्व. 72.23-4
13. भारतीय इतिहास कोश (हिन्दी अनु., उ.प्र.हिं.सं.) पृ. 463,
12. तत्रैव, पृ. 29,
15. तत्रैव, पृ. 46



# दत्तपुत्रविचारः

– प्रो. किशोरचन्द्रमहापात्रः

*(इस शोध–पत्र के पूर्वार्द्ध भाग में मनुयाज्ञवल्क्यादि के मतों के आधार पर औरस, क्षेत्रज–दत्तकादि द्वादश विध पुत्रों का स्वरूप एवं लक्षण की सम्यक् समीक्षा की गई है। तदनु द्वादशविधपुत्रों में दत्त, दत्तक–दत्रिम आदि शब्दों द्वारा विविध कृतियों में उल्लिखित दत्तकपुत्र का प्रथमतः मनुयाज्ञवल्क्यादि के मतानुसार स्वरूप बताया है तथा वह दत्तकपुत्र कैसा हो? किसके द्वारा दिया जाय किसके द्वारा ग्रहण किया जाय? किसप्रकार ग्रहण किया जाय? जिसका एक पुत्र है, वह पुत्र दे सकता है या नहीं? दत्तक ग्रहण में स्त्रियों का अधिकार है या नहीं? इत्यादि विषय प्राचीन मतानुसार तथा आधुनिक हिन्दुविधि के मतानुसार सम्यग् वर्णित है।)*

जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणैः ऋणवान् जायते, ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इति श्रुतिप्रमाणात् पित्रर्णमुक्तिहेतोः पुत्रोत्पादनमवश्यं कर्त्तव्यमिति प्रतीयते। पुन्नाम्नो नरकात् त्रायत इति पुत्रपदनिर्वचनात् पितुर्नरकोद्धारकत्वेन पुत्रस्यावश्यकता परिवारे वर्त्तत एव। प्रसङ्गेऽस्मिन्नुक्तं[1] मनुना यथा–

**पुंनाम्नो नरकाद्यस्मात् त्रायते पितरं सुतः।**
**तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा।।** इति।।

अपि च पुत्रपौत्रादिभिः स्वर्गलोकादिप्राप्तिर्भवतीति मनुनाऽपि प्रतिपादितम्। यथोक्तं[2] तेन –

**पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते।**
**अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम्।।** इति।।

एतावता पुत्रपौत्रादीनां भूयसी प्रशंसा श्रूयते। तत्र यद्यपि पुत्रशब्देन सामान्यतः औरस एव पुत्रो गृह्यते, तथापि तदभावे अन्ये एकादशविधाः पुत्राः तस्य प्रतिनिधिरूपेण वर्त्तन्ते। अत एवोक्तं[3] मनुना प्रसङ्गेऽस्मिन् –

**औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च।**
**गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट्।।**
**कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा।**
**स्वयं दत्तश्च शौद्रश्च षडदायादबान्धवाः।।** इति।।

एतेषु द्वादशविधेषु पुत्रेषु औरसो मुख्यः, अन्ये सर्वे गौणाः। यद्यपि मनुना[4] 'पुत्रिकायां कृतायान्तु यदि पुत्रोऽनु जायते' इति वचनेन पुत्रिकापुत्रोऽपि पुत्रत्वेन स्वीकृतस्तथापि तेन

द्वादशपुत्राभ्यन्तरे तस्यान्तर्भावो न कृतः। याज्ञवल्क्येनापि द्वादशविधाः पुत्राः सलक्षणं प्रतिपादिताः। तेषु तेन शौद्रो न स्वीकृतः किन्तु पुत्रिकापुत्रः स्वीकृत इति। यथोक्तं[5] तेन–

औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः।
क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा।।
गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः।
कानीनः कन्यकाजातो मतामहसुतो मतः।
अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः।
दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत्।।
क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात्स्वयं कृतः।
दत्तात्मा तु स्वयं दत्तो गर्भे विन्नः सहोढजः।
उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत्सुतः।
पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः।। इति।।

पुनश्च[6] दत्तकमीमांसायां स्मृत्यन्तरवचनत्वेन पञ्चदशविधाः पुत्राः प्रतिपादिताः। ते यथा-

औरसः पुत्रिका बीजक्षेत्रजौ पुत्रिकासुतः।
पौनर्भवः कानीनश्च सहोढो गूढसम्भवः।
दत्तः क्रीतः स्वयंदत्तः कृत्रिमश्चापविद्धकः।
यत्र क्वचोत्पादितश्च पुत्रास्तु दश पञ्च च।। इति।।

एतेन वचनेन मनुयाज्ञवल्क्यवचनयोर्यद्यप्यापाततो विरोधो दृश्यते, तथापि बीजजस्य अपकृष्टौरसपुत्रत्वेन तस्यौरसेऽन्तर्भावात् , पुत्रिकायाः पुत्रिकापुत्रस्य च पिण्डदानमात्रदापकत्वेन ऐक्यविधानात्, यत्र क्वचोत्पादितस्य औरसे एवान्तर्भावान्मनूक्ता पुत्राणां द्वादशसंख्या न विरुद्धेति वक्तुं शक्यते। अतो द्वादशविधानां पुत्राणामेव प्रसिद्धिः।

एतेषु द्वादशविधेषु पुत्रेषु सवर्णायां संस्कृतायां स्वयमुत्पादितः पुत्र औरसः। स च मुख्यपुत्रः। यथा देवक्यां वसुदेवेनोत्पादितः पुत्रः श्रीकृष्णः। अन्येष्वेकादशविधेषु गौणपुत्रेषु परक्षेत्रे परस्य पत्न्यां जातः क्षेत्रजः। यथा महाभारते व्यासेन विचित्रवीर्यस्य पत्न्यामम्बिकायामम्बालिकायाञ्च क्रमेण नियोगविधिनोत्पादितः पुत्रः धृतराष्ट्रः पाण्डुश्च। कलौ नियोगविधेर्निन्दितत्वात् क्षेत्रजपुत्रो न दृश्यते। मातापितृभ्यामन्यतरेण दत्तः दत्तकः। यथा लोमपादस्य दत्तकाकन्या शान्ता। प्रलोभनप्रदर्शनपूर्वकं स्वीकृतः पुत्रः कृत्रिमः। स्वपत्न्यामन्येन परपुरुषेण प्रछन्नभावेन चौर्यरताहितगर्भमूलक उत्पन्नो गूढजः। मातृपितृभ्यां परित्यक्तो येन परिपालितः स तस्याऽपविद्धपुत्रः। यथा कण्वपरिपालिता कन्या अपविद्धाकन्या। कन्याभवः कानीनः। स च मातामहसुत इति कथ्यते। यथा कुन्त्याः कन्यावस्थायामुत्पादितः पुत्रः कर्णः। एकेन कृतगर्भायामन्येन परिणीतायामुत्पादितः पुत्रः सहोढः। मूल्यदानेन क्रीतः पुत्रः क्रीतपुत्रः। यथा– हरिश्चन्द्रस्य शुनःशेपः। प्रथममेकस्य जाया भूत्वाऽपरस्य पुनर्या जाया भवति सा पुनर्भूः। तस्यां पुनर्भ्वां

जातः पौनर्भवः। आत्मानं पुत्ररूपेण यः ददाति स स्वयंदत्तः। यथा विश्वामित्रस्य पुत्रः शुनःशेपः। द्विजातिभिः शूद्रायामुत्पादितः शौद्रः।

एतेष्वेकादशविधेषु गौणपुत्रेषु दत्तकोऽन्यतमः। स च दत्तः दत्रिम इत्यादिशब्दैरपि व्यपदिश्यते। तस्य किं तावल्लक्षणमिति जिज्ञासायामुक्तं[7] मनुना यथा–

**माता पिता वा दद्यातां यमद्भिः पुत्रमापदि।**
**सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः।।** इति।।

पुनश्च [8]याज्ञवल्क्येनापि '**दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेदिति**' वचनेनापि मातृपितृभ्यां तयोरन्यतरेण वा कस्मैचिदपुत्राय दत्तो यः पुत्रः स दत्तक इति। अर्थात् पिता माता च मिलितभावेन अथवा केवलं पिता, केवलं वा माता पितुरनुमतिं गृहीत्वा प्रीतिवशतः निकटतमसपिण्डाय पुत्रं दद्यात्। कदेति चेत् प्रतिग्रहीतुरपुत्रत्वरूपायामापदि। पुत्रश्च प्रतिग्रहीतुः वयसा सम्बन्धेन च पुत्रतुल्यो यथा स्यात्तथा भाव्यम्।

स एव दत्तकः कीदृशः, केन देयः, केन ग्राह्यः, कथञ्च ग्राह्य इति विचारकोटिमायाति। तत्रादौ कीदृशपदेन कः दत्तको भवितुमर्हतीति जिज्ञासायां वसिष्ठवचनमुत्थाप्य नन्दपण्डितेनोक्तं यत् – अदूरबान्धवं बन्धुसन्निकृष्टमेव प्रतिगृह्णीयादिति। अर्थात् सन्निकृष्टः सपिण्डः। सगोत्रत्वेन बहुपुरुषान्तरापेक्षया स्वल्पपुरुषान्तरः सन्निकृष्टः। अतः प्रथमं समानगोत्रसपिण्डः दत्तको भवेत्। तदभावेऽसमानगोत्रसपिण्ड–समानगोत्रासपिण्डयोरन्यतरः, तदभावे चासमानगोत्रासपिण्डोऽपि दत्तकत्वेन ग्रहीतुं शक्यते। किन्तु **सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिरिति** [9]याज्ञवल्क्यवचनादसमानजातीयः कदापि न ग्राह्यः। एतेन ज्ञायते यत् एकेन भ्रात्रा भ्रात्रन्तरस्य पुत्रं पुत्रत्वेन ग्रहीतुं शक्नुयात्। यतो हि एकस्य भ्रातुः पुत्रोऽकृतोऽपि भ्रात्रन्तरस्य पुत्रो भवितुमर्हति। यथाह्युक्तं [10]मनुना–

**भ्रातृणामेकजातानामेकश्चेत्पुत्रवान्भवेत्।**
**सर्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीत्।।** इति।।

तद्वद् भगिनीनां मध्येऽपि परस्परं पुत्रदान–प्रतिग्रहः कर्तुं शक्यते। किन्तु सोदराणां भ्रातृभगिनीनां मध्ये परस्परं पुत्रदातृ–ग्रहीतृत्वं नास्ति। अर्थाद् भगिन्या भ्रातृपुत्रो न ग्राह्यः, न वा भ्रात्रा भगिनीपुत्रः। पुनश्च भागिनेयो दौहित्रो वा सपिण्ड–सगोत्रसम्बन्ध्यपि पुत्रत्वेन ब्राह्मणादिभिः त्रिभिर्नैव ग्राह्यः। किन्तु शूद्रेण दौहित्रभागिनेयौ दत्तकत्वेन ग्रहीतुं शक्येते। यथोक्तं [11]दत्तकमीमांसायां शौनकवचनमुत्थाप्य–

**दौहित्रो भागिनेयश्च शूद्रैस्तु क्रियते सुतः।**
**ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित्।।** इति।।

सम्प्रति आधुनिकहिन्दुविध्यनुसारेण दत्तकः सजातीयो विजातीयो वा यः कश्चिदवैधोपायेनोत्पादितोऽपि सम्बन्ध्यसम्बन्धिनिर्विशेषेण हिन्दुश्चेद् ग्राह्यः।

स एव दत्तकः केन देय इति जिज्ञासायां मात्रा पित्रा च मिलित्वा, अथवा केवलं पित्रा अथवा पितुरनुमत्या केवलं मात्रेति। तत्र बहुपुत्रेणैव पुत्रो देयः। अर्थान्न्यूनातिन्यूनतया यस्य त्रय

एव पुत्राः सन्ति स एव पुत्रं दातुं प्रभवति, न त्वेकपुत्रः। प्रसङ्गेऽस्मिन् शौनकवचनमुत्थाप्य नन्दपण्डितेन [12]दत्तकमीमांसायामुक्तं यत् –

**नैकपुत्रेण कर्त्तव्यं पुत्रदानं कथञ्चन।**
**बहुपुत्रेण कर्त्तव्यं पुत्रदानं प्रयत्नतः।।** इति।।

अर्थाद् यस्य एक एव पुत्रः स पुत्रं न दद्यात् , तथा सति स स्वयमेवाऽपुत्रो भवेत्। अत एवोक्तं [13]वसिष्ठेन– **न त्वेवैकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा, स हि सन्तानाय पूर्वेषाम्।** साम्प्रतिकहिन्दुविधौ माता यदि विकृतमस्तिष्कारूपेण न प्रमाणिता न वा सन्न्यासिनी, न वा तस्या हिन्दुत्वं छिन्नं तर्हि तदा तस्या अनुमतिं विना पिता पुत्रं दातुं न प्रभवति। परन्तु विमातुः क्रूरदृष्टेः कारणात् पिता स्वपुत्रं यस्मै कस्मैचित् दातुं प्रभवति। तद्वत् क्वचिन्माता स्वकीयमवैधसन्तानं स्वभर्त्तुरनुमतिं विनाऽपि दत्तकत्वेन यस्मै कस्मैचित् दातुं प्रभवति। पुनश्च यदा भर्त्ता सन्न्यासी विकृतमस्तिष्को भवेत् , अथवा तस्य हिन्दुत्वमवसितं तदा तत्पुत्रं तद्भार्या दातुं प्रभवेत्। सम्प्रति कश्चिदभिभावकोऽपि पित्रोरनुमत्या पित्रोरभावे च मातृपितृविहीनं पुत्रं संरक्षकरूपेण यस्मै कस्मैचित् दातुं प्रभवति।

ततो दत्तकः केन ग्राह्य इति जिज्ञासायामुच्यते यदपुत्रेणैव पुत्रप्रतिनिधिर्ग्राह्यः। प्रसङ्गेऽस्मिन्नत्रिवचनमुत्थाप्य नन्दपण्डितेन [14]दत्तकमीमांसायामुक्तं यत् –

**अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदा।**
**पिण्डोदकक्रियाहेतोः यस्मात्कस्मात्प्रयत्नतः।।** इति।।

'अपुत्र' पदेन मृतपुत्रोऽजातपुत्रो वा बोध्यते। एतेन बहुपुत्रेण पुत्रग्रहणं नाभ्यानुज्ञायते। यद्यपि बहुपुत्रवता विश्वामित्रेण देवरातादिपुत्रप्रतिनिधिर्गृहीत इति पौराणिकी वार्त्ता श्रूयते, तथापि चण्डालपक्वश्वजघनभक्षणवदसाधारणकर्मकर्त्तुर्नियमातिक्रमो न दोषायेति मत्वा तदस्माभिर्न ग्राह्य इति विचारणीयम्। पुनश्च दत्तकग्रहणे पुमानेवाधिकारी, न स्त्री। यतो हि वसिष्ठेन स्त्रियाः पुत्रग्रहणस्य प्रतिषेधः कृतः। यथोक्तं [15]तेन– **न स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद् भर्त्तुरिति।** अनेन विधवायाः दत्तकग्रहणेऽधिकारो नास्तीति गम्यते। सधवाऽपि भर्त्तुरनुज्ञां विना दत्तकदाने ग्रहणे वा नाधिकारिणी। पुनश्च पुत्रग्रहणकाले **'देवस्य त्वेत्यादि'** वैदिकमन्त्राणामुच्चारणस्यावश्यकताहेतोः तदुच्चारणे च स्त्रीणामनधिकारात् तासां पुत्रग्रहणेऽधिकारो नास्तीति गम्यते।

परन्तु साम्प्रतिकहिन्दुविधौ स्त्रिया अधिकारः स्पष्टतया प्रतिपादितः। यस्याः कस्याश्चिदविवाहिता–विवाहिता–विधवा–बन्ध्या–पतिपरित्यक्ता–विवाहोच्छिन्नादिसर्वविधायाः प्राप्तवयस्कायाः स्त्रियाः पुत्रग्रहणेऽधिकारो वर्त्तते। विवाहितः कश्चित् पुरुषः दत्तकं गृह्णाति चेत् स तस्य पत्न्या अनुमत्यैव पुत्रं गृह्णीयात्, अन्यथा दत्तकग्रहणमसिद्धं स्यात्। यदि सा पत्नी सन्न्यासिनी विकृतमस्तिष्का अथवा तस्या हिन्दुत्वमवसितं तर्हि तस्या अनुमतिर्नापेक्ष्यते। परन्तु ब्रह्मचारिविधुरादयः पुत्रग्रहणे स्वतन्त्रा भवन्ति। विवाहिता स्त्री स्वपत्युरनुमतिं विना दत्तकं ग्रहीतुं नार्हति।

यथा कश्चित् पुरुषः कस्यापि पुत्रं दत्तकत्वेन गृह्णाति, तथा कस्यापि कन्यां दत्तकात्वेनापि ग्रहीतुमर्हेत्। यथा दशरथः स्वकन्यां शान्तां लोमपादाय दत्तवान्। यस्य एकः पुत्रो विद्यते स

एकां कन्यां दत्तकात्वेन, यस्य चैका कन्या विद्यते स एकं पुत्रं दत्तकत्वेन ग्रहीतुं प्रभवेत्। एतेन ज्ञायते यत् कश्चित् पुत्रवान् पुनरेकं पुत्रं दत्तकरूपेण, कन्यावान् वा पुनरेकां कन्यां दत्तकारूपेण ग्रहीतुं न शक्नुयात्। परन्तु तत्रेयान् विशेषो यत् – यदा कश्चन पुरुषः कामपि कन्यां दत्तकात्वेन, काचित् स्त्री वा कमपि पुत्रं दत्तकत्वेन गृह्णाति, तदोभयत्र पितृकन्ययोः मातृपुत्रयोश्च वयोव्यवधानं न्यूनातिन्यूनमेकविंशतिवर्षाणि भवेयुरन्यथा दत्तकग्रहणमसिद्धं स्यात्। प्रसङ्गेऽस्मिन् [16]हिन्दुविधौ मुल्लामहोदयेनोक्त यत् – If a Hindu wants to adopt a child of a pasitive sex, he or she must be older to the child by atleast twenty one (21) years. Violation of this requirement renders the adoption void. This is meant to prevent people from abusing the adopted child.

सम्प्रति दत्तकः कथं ग्राह्य इति विचार्यते। धर्मशास्त्रानुसारेण पुत्रं प्रतिग्रहीष्यन् जनः पूर्वेद्युरुपवासेन स्थित्वा आचार्यं राजानं बन्धूंश्चाहूय संपूज्य ब्राह्मणान् भोजयित्वाऽग्न्याधानाद्याज्योत्पवनान्तं कर्म कृत्वा दातुः समक्षं गत्वा पुत्रं देहीति याचेत। ततो "देवस्य त्वेति" मन्त्रेण शिशुं हस्ताभ्यां परिगृह्य "अङ्गादङ्गादिति" मन्त्रं जप्त्वा शिशोः मूर्द्धानमाघ्राय, वस्त्रादिभिरलंकृत्य पुत्रं गृह्णीयात्। परन्तु साम्प्रतिकहिन्दुविधौ तथा नियमो नास्ति। तत्र न दत्तहोमस्यावश्यकता न वोपवासस्य। केवलं पुत्रदाता शिशु बाहुभ्यामुत्थाय प्रतिग्रहीतृक्रोडे संस्थाप्य वदति यत् 'पुत्रोऽयं मया तुभ्यं दत्तः कन्येयं वा दत्तेति'। प्रतिग्रहीता च तदा वदति यत् – 'मया शिशुरयं पुत्रत्वेन कन्यात्वेन वा परिगृह्यत' इति। प्रसङ्गेऽस्मिन् [17]हिन्दुविधौ मुल्लामहोदयेनोक्तं यत् – The giver of the child lifts the child in his arm and place it in the lap of adoptive parent saying 'I give this child in adoption to thee', and the taker says 'I accept this child as my adopted son or doughter'

सर्वविधेषु धर्मकृत्येषु, व्यवहारेषु श्राद्धशुद्धिदायग्रहणादिकर्मसु च दत्तक औरसवत् परिगृह्यते। दत्तके कृतेऽनन्तरमौरसे समुत्पन्ने औरसस्य धार्मिककृत्यष्वेवाऽधिकारः, दायभागविषये तु दत्तकस्यौरसेन सहाऽऽनुकूल्यप्रातिकूल्यादिस्थितिविचारदृष्ट्या क्वचित् चतुर्थ/पञ्चम/षष्ठांशादिप्राप्तिर्धर्मशास्त्रेषु स्वीक्रियते। आधुनिकहिन्दुविधौ तु तुल्यो दायाधिकार इति। प्रसङ्गेऽस्मिन् [18]हिन्दुविधौ मुल्लामहोदयेनोक्तं यत् – If there is an adopted child and a natural child, both will inherit equally.

**सन्दर्भाः-**


| | | |
|---|---|---|
| 1. मनु.-9-138 | 2. मनु.-9-137 | 3. मनु.-9/159-160 |
| 4. मनु-9/134 | 5. याज्ञ.व्य.-128-132 | 6. द.मी.पृ.-67 |
| 7. मनु.- 9-168 | 8. याज्ञ.व्य.-130 | 9. याज्ञ. व्य.-133 |
| 10. मनु. 9-182 | 11. द.मी. पृ.- 75 | 12. द.मी. पृ.-88 |
| 13. द.मी. पृ.-3 | 14. द.मी. पृ.-113 | 15. द.मी. पृ.-13 |
| 16. Mulla H.L p-222 | 17. Mulla H.L p-228 | 18. Mulla H.L p-230 |

**सन्दर्भ ग्रन्थसूची-**

1. मनुस्मृतिः- चौखम्बासंस्कृतभवन, वाराणसी 2009
2. याज्ञवल्क्यस्मृतिः, चौखम्बासंस्कृतसंस्थान, वाराणसी-2008
3. दत्तकमीमांसा काशीहिन्दुविश्वविद्यालय, वाराणसी-1980
4. Modern Hindu Law by Dr. Prasa Diwan, Allahabad Law Agency, Allahabad, 1993



# शिशुपालवधे ज्यौतिषतत्त्वविमर्शः

– प्रो. बृजेशकुमारशुक्लः

*(संस्कृत महाकाव्यों की श्रेणी में महाकवि माघविरचित शिशुपालवध महाकाव्य का अप्रतिम स्थान है। 'माघे सन्ति त्रयोगुणाः' यह सूक्ति एवं काव्यशास्त्रीय सभी विधानों का भलीभाँती सुन्दरता पूर्वक निर्वहण तो किया ही है। साथ ही आयुर्वेद, व्याकरण, दर्शन, वेद, पुराण, ज्यौतिष, कामशास्त्रादि विषयक समस्त शास्त्रीय तथ्यों का भी प्रसङ्गानुसार उल्लेख पग-पग पर दृष्टिगोचर होता है, जिससे कवि की नानाशास्त्र विचक्षणता की स्पष्ट प्रतीति होती है। प्रस्तुत शोध पत्र में शिशुपालवध महाकाव्य के अन्तर्गत ज्योतिष के तीनों समूह सिद्धान्त, संहिता तथा होरा सन्दर्भों को सूक्ष्मता के साथ दर्शाया गया है।)*

अखिलदेववाणीसाहित्ये कविपुङ्गवस्यायाऽऽचार्यप्रतिभावतः श्रीमाघस्य शिशुपालवधं नाम महाकाव्यं कविताकामिन्याः शृङ्गारभूतं रसमयं शास्त्रीयञ्च विद्वत्सु नितरां प्रथितम्। काव्यालङ्काराणां यादृशी रमणीयताऽत्र महाकाव्ये दरीदृश्यते तादृश्येव कमनीयता शास्त्रविजृम्भाणाया अत्र काव्ये जरीगृह्यते। महाकविना माघेनाऽत्र काव्यशास्त्रालङ्कारव्याकरणकामशास्त्र-दर्शनन्यायज्यौतिषागमराजनीतिधर्मशास्त्रपुराणादिविविधशास्त्राणां तत्त्वानि काव्यमुक्तासु सङ्ग्रथितानि। अनेन महाकवेरस्य प्रतिभा विविधशास्त्रेषु विजृम्भिता दृश्यते। एवं काव्यरसमादाय शास्त्रमपि नितरां चकास्ति।

अथ च समेषु शास्त्रेषु वेदस्य चक्षुर्भूतस्य ज्यौतिषशास्त्रस्याऽस्ति काचिन्महत्ता। वेदाङ्गज्यौतिषस्याऽनन्तरं वराहमिहिराऽऽर्यभट्टभास्कराचार्यप्रभृतिभिर्ज्यौतिर्विद्भिर्नभसि विचरतां ग्रहनक्षत्रतारादीनां गतिसङ्क्रमणं ज्ञात्वा तेषां मानवजीवने संसारे प्रकृतिजाते च कः प्रभावो भवतीति सुष्ठु विवेचितम् । एतैर्ज्योतिर्विद्भिरनेके ग्रन्था एतद्विषयका व्यरचिषत, तेषु दैवज्ञशास्त्रस्य विविधा विषयाः समुन्मीलिताः सन्ति। विषयदृष्ट्या ज्यौतिषं स्कन्धत्रये विभक्तम् – सिद्धान्तः संहिता होरा च। स्कन्धत्रयेऽपि विविधा अवान्तरविषयाः सन्ति। एतान् विषयानाश्रित्य महाकविर्माघः स्वकीये शिशुपालवधे ज्यौतिषशास्त्रविषयकविचारान् प्रकटयामास। तेऽत्र विषया अधोलिखितसन्दर्भेषु द्रष्टुमर्हाः सन्ति–

### सिद्धान्तज्यौतिषस्य तत्त्वविचारः

सिद्धान्त ज्यौतिषे कालज्ञानविषये युगवर्षमासदिवसानां समुल्लेखो भवति। आर्यभटीयस्य कालक्रियापादे युगादीनां प्रवृत्तिश्चैत्रशुक्लादेर्मन्यते। एष कालोऽनाद्यन्तो निरन्तरं प्रचलति–

युगवर्षमासदिवसास्समं प्रवृत्तास्तु चैत्रशुक्लादेः।
कालोऽयमनाद्यन्तो ग्रहभैरनुमीयते क्षेत्रे।।[1]

शिशुपालवधेऽपि युगान्तकालस्य समुल्लेखं विधाय माघो युगपरिमाणमेव वर्णयति यद् युगान्ते प्रलयकाले समेषां जीवानां समुपसंहारं कुर्वतो यस्य कृष्णस्य शरीरे चतुर्दशभुवनानि सविस्तरमतिष्ठन्, तस्मिन्नेव शरीरे तपोधनस्य श्रीनारदस्याऽऽगमनजनिता प्रसन्नता न माति स्म-

युगान्तकालप्रतिसंहृतात्मनो
जगन्ति यस्यां सविकासमासत।
तनौ समुस्तत्र न कैटभद्विष-
स्तपोधनाभ्यागमसम्भवा मुदः।।[2]

अत्र 'युगान्त' इति शब्दस्याऽर्थः प्रलय इति विहितः। यथोक्तं ब्रह्मस्फुटसिद्धान्ते-

ग्रहनक्षत्रोत्पत्तिर्ब्रह्मदिनादौ दिनक्षये प्रलयः।[3]

कदा प्रलयो भवतीत्याकाङ्क्षायां निगदितं यदेकसप्ततिर्युगानां कालो मन्वन्तरं प्रोच्यते। एकमन्वन्तरे समाप्ते सति द्वितीयमन्वन्तरस्य प्रारम्भात्पूर्वं चाऽष्टचत्वारिंशद्दिव्यवर्षात्मकं जलप्लावनं भवति।[4] एष एव प्रलयकालः।[5] शिशुपालवधकृता युगान्तशब्दस्योल्लेखः सिद्धान्तज्यौतिष-दृशाऽ८ारि। शिशुपालवधे सुमेरुश्रङ्गस्य वर्णनं विहितं प्रथमसर्गे एव-

जिगाय जम्बूजनितश्रियः श्रियं
सुमेरुशृङ्गस्य तदा तदासनम्।[6]

सिद्धान्तज्योतिषधिया यत्र ध्रुवतारा खमध्ये समायाति तत् स्थानं सुमेरुः स्यात्। सुमेरुशृङ्गे स्थित्वैव 'सूर्यसिद्धान्तस्य' ज्यौतिषग्रन्थस्य रचना विहिता। अत एव सुमेरुर्न कश्चित्पर्वतोऽपि तु पृथिव्या ऊर्ध्वतमो भागः। तदेवोत्तरध्रुवस्थानमिति प्रोक्तं ब्रह्मस्फुटसिद्धान्ते-

खे भूगोलस्तदुपरि मेरौ देवाः स्थितास्तले दैत्याः।
खे भगणाक्षाग्रस्थावुपर्यधश्च ध्रुवौ तेषाम्।।[7]

एवमुत्तरध्रुवखमध्यस्थः सुमेरुर्दक्षिणध्रुवे च कुमेरुरित्युक्तं सिद्धान्तज्यौतिषे। माघ एतत्सर्वं जानाति स्म। शिशुपालवधे सूर्यस्योत्तरायणगमनस्य वर्णनं प्राप्यते। अत्र भगवान् कृष्णः उत्तरायणतो दक्षिणायनङ्गतः सूर्य इव सौम्यः सन् युद्धाभिनिवेशं त्यक्त्वा इन्द्रप्रस्थं प्रययौ-

कौबेरदिग्भागमपास्य मार्ग-
मागस्त्यमुष्णांशुरिवावतीर्णः।
अपेतयुद्धाभिनिवेशसौम्यो
हरिर्हरिप्रस्थमथ प्रतस्थे।[8]

अस्मिन् पद्ये सौम्यायनगतः सूर्योऽसह्यकिरणो भवति, परन्तु यदा स दक्षिणायनं गच्छति तर्हि तस्य किरणाः सह्याः भवन्ति। एतत्तथ्यं लोको जानाति ज्यौतिषेऽपि च प्रचलितम्। सूर्यसिद्धान्ते सौम्यायन-याम्यायनयोर्विवरणमेवं लिखितम् -

**भानोर्मकरसङक्रान्तेः षण्मासा उत्तरायणम्।**
**कर्कादेस्तु तथैव स्यात् षण्मासा दक्षिणायनम्।।[9]**

मकरसङ्क्रान्तेर्मिथुनसङ्क्रान्तिं यावत्सूर्य उत्तरायणे भवति। एतस्मिन् काले रविकिरणास्तीक्ष्णा भवन्ति। ततः कर्कसङ्क्रान्तेर्धनुसङ्क्रान्तिं यावत् सूर्यरश्मयः सौम्या भवन्ति, एष दक्षिणायनकालः। उपरिस्थे पद्ये न केवलं सूर्यस्योत्तरायणदक्षिणायनचलनस्योल्लेखोऽस्ति, अपि तु अगस्त्यताराया: दिशाऽपि माघेन ज्ञायते। अगस्त्यमिति शब्दस्याऽत्रार्थो दक्षिणा दिशेति विहितः। ज्यौतिषेऽपि अगस्त्यताराया उदयो दक्षिणस्यां स्वीक्रियते। अष्टगुणितपल-भातोऽष्टसप्तत्यंशन्यूने सति तत्तुल्ये रवौ अगस्तयोऽस्तङगतो भवति। एवमेवाऽष्टगुणितपल-भयाऽष्टनवत्यंशाः संयुक्ताश्चेत्ततुल्ये सूर्येऽगस्त्योदयो याम्याशायां भवति-

**पलभाऽष्टवधोनसंयुता गजशैला वसुखेचरा लवाः।**
**इह तावति भास्करे क्रमाद् घटजोऽस्तं ह्युदयं च गच्छति।।[10]**

शिशुपालवधकृता लिखितं यत्सूर्येऽस्ते सति मेरुरन्धकारग्रस्तो भवति-

**प्रोषितार्यमणं मेरोरन्धकारस्तटीमिव।[11]**

अत्राऽर्यमा सूर्यो न केवलमस्तत्वं ब्रजति अपितु सूर्यः षण्मासान् यावत्प्रोषितो भवति ध्रुवस्थानेऽतस्तमो मेरुप्रदेशं रुरोध। अनेन ज्यौतिषसम्मतं सुमेरुस्थानस्य उत ध्रुवस्थानस्य षण्मासात्मकं दिनं षण्मासात्मिकाञ्च रात्रिं महाकविर्माघो ज्ञातवान्।

शिशुपालवधेऽनेकत्र ग्रहणस्य समुल्लेखो वरीवर्त्ति। राहुणा चन्द्रो ग्रस्यते इति माघो लिखति यदेकोऽपि शत्रुश्चेदस्ति तर्हि सुखं न भवति, यतो हि देवतानां पुरस्तादेव राहुश्चन्द्रमसं पीडयति-

**ध्रियते यावदेकोऽपि रिपुस्तावत्कुतः सुखम्।**
**पुरः क्लिश्नाति सोमं हि सैंहिकेयोऽसुरद्रुहाम्।।[12]**

एवमेवाऽपरस्मिन् पद्येऽपि चन्दमसो ग्रहणं माघेन निर्दिष्टम्।[13] अन्यत्रापि तेन प्रोक्तं यदापदि शत्रोराक्रमणं मानिनो न कुर्वन्ति। मानी पुरुषः समृद्धिमन्तं शत्रुमाक्रमते यथा पूर्णचन्द्र एव राहुणा ग्रस्यते-

**नीतिरापदि यद्गम्यः परस्तान्मानिनो ह्रिये।**
**विधुर्विधुन्तुदस्येव पूर्णस्तस्योत्सवाय सः।।[14]**

ज्यौतिषशास्त्रेऽपि लिखितं यद् भूभा राहुस्तेन चन्द्रो ग्रस्यते। पृथिव्याश्छायैव चन्द्रमसमाच्छादयति सूर्यग्रहणे च शशाङ्कच्छाया तत्र निपतति। भास्कराचार्येण सिद्धान्तशिरोमणौ निगदितम् -

**राहुः कुभा मण्डलगः शशाङ्कं**
**शशाङ्कगश्छादयतीनबिम्बम्।।[15]**

वटेश्वरसिद्धान्तेऽपि प्रकारान्तरेणोक्तं यद् राहुरर्धबिम्बेन चन्द्रं चन्द्रबिम्बार्द्धेन च सूर्यं-खण्डयति। एवं राहुद्वारेण ग्रहणं सर्वे आचार्या मेनिरे-

**खण्डयति तमोऽर्धेन क्षपाकरं विधुदलेन तिग्मांशुम्।**
**राहुकृतं च ग्रहणं प्राहुस्ते समस्त आचार्याः।।**[16]

माघेनाऽन्यत्रापि '**राहुरिन्द्रमधुनाऽपि बाधते**'[17] इत्यलेखि। अनेन ज्ञातं भवति यन्माघः सिद्धान्तज्यौतिषस्य चन्द्रार्कयोर्ग्रहणमपि सुष्ठु जानाति स्म। एवं सिद्धान्तज्यौतिषस्य विषयाः शिशुपालवधे दरीदृश्यन्ते।

## संहिताज्यौतिषस्य तत्त्वविचारः

संहिताज्यौतिषस्य तत्त्वानि शिशुपालवधमहाकाव्ये सुष्ठु द्रष्टुं शक्यन्ते। संहिताज्यौतिषस्य क्षेत्रमतीव विस्तृतमस्ति। अतः काव्यकृता माघेन यतस्ततः कवितारसप्लावनसन्दर्भेऽपि शास्त्रीया चर्चा संहिताज्यौतिषस्य विहिता। ग्रहाणां चारस्य विवेचनं संहितासु नितरां प्राप्यते। एकस्मिन् पद्ये माघः कथयति यत् श्रीकृष्णः सर्वासु दिक्षु अबाधितमार्गमभीष्टसिद्धिप्रदायकं पुष्याख्यं रथं समधिरूढोऽभूद् यथा क्षपानाथः सर्वाशायात्रासुलभं सर्वसिद्धिसम्पादकं क्षिप्रसञ्ज्ञकं पुष्यनक्षत्रं गच्छति–

**रराज सम्पादकमिष्टसिद्धेः सर्वासु दिक्ष्वप्रतिषिद्धमार्गम्।**
**महारथः पुष्यरथं रथाङ्गी क्षिप्रं क्षपानाथ इवाधिरूढः।।**[18]

ज्यौतिषसंहिताया मुहूर्त्तग्रन्थेषु लिखितं यत् पुष्यनक्षत्रे यदा चन्द्रो भवति तद्दिनं शुभं मन्यते। माघेन लिखितं यत्पुष्यनक्षत्रं क्षिप्रसञ्ज्ञकमस्ति। मुहूर्त्तचिन्तामणौ पुष्यनक्षत्रं क्षिप्रसञ्ज्ञमिति प्रोक्तम् –

**हस्ताश्विपुष्याभिजितः क्षिप्रं लघु गुरुस्तथा।**
**तस्मिन् पण्यरतिज्ञानं भूषाशिल्पकलादिकम्।।**[19]

कविना पुष्यनक्षत्रस्य यत्फलं ज्यौतिषे प्रोक्तं तदपि ज्ञायते यतो हि पुष्यनक्षत्रं विवाहकार्यं हित्वा सकलार्थसिद्धिप्रदं भवति–

**ग्रहेण विद्धोऽप्यशुभान्वितोऽपि**
**विरुद्धतारोऽपि विलोमगोऽपि।**
**करोति पुंसां सकलार्थसिद्धिं**
**विहाय पाणिग्रहणं हि पुष्यः।।**[20]

पुष्यनक्षत्रस्य प्रशंसा मुहूर्तगणपतौ अपि कृता वर्तते–

**पापैर्विद्धे युते हीने चन्द्रताराबलेऽपि च।**
**पुष्ये सिद्ध्यन्ति सर्वाणि कार्याणि मङ्गलानि च।।**[21]

एवं पुष्यनक्षत्रस्य फलं तत्सञ्ज्ञां च सम्यग् ज्ञातवान् महाकविर्माघः। एवं स ज्यौतिषस्य ज्ञाताऽऽसीदिति प्रमाणीभवति। माघेन शिशुपालवधे पूर्णचन्द्रस्य वर्णनं विहितम् –

**यतो बृहत्पार्वणचन्द्रचारु**
**तस्यातपत्रं विभरांबभूवे।।**[22]

अत्र श्रीकृष्णस्य यात्राकाले चन्द्रमसः पूर्णत्वं तथा च तस्याऽऽतपत्रमिव विशालत्वं दर्शयन् कविर्भगवतः श्रीकृष्णस्य यात्रासाफल्यं निर्दिशति। यतो हि वशिष्ठसंहितायामुक्तं यत्पूर्णचन्द्रमहायोगो यात्रायां राज्यप्रदो भवति–

**पूर्णचन्द्रमहायोगः पूर्णराज्यप्रदः सदा।**[23]

बृहत्संहितायामपि–

**विशालश्चन्द्रो राज्ञां लक्ष्मीवृद्धिकरः स्मृतः।**
**ज्ञेयो विशालमूर्त्तिर्नरपतिलक्ष्मीविवृद्धये चन्द्रः।।**[24]

माघेन चन्द्रमस उदयः पूर्वस्यां दिशि वर्णितः।[25] अनेन ज्ञायते यदेष चन्द्रोदयः पूर्णिमायां स्याद्, पौर्णमास्यां चन्द्रमसः पूर्वस्यामुदयत्वात्। एवमेवाऽस्तोन्मुखस्य चन्द्रस्य वर्णनं महाकविना पश्चिमाशायां विहितम् –

**नवकुमुदवनश्रीहासकेलिप्रसङ्गा –**
**दधिकरुचिरशेषामप्युषां जागरित्वा।**
**अयमपरदिशोऽङ्के मुञ्चति स्त्रस्तहस्तः**
**शिशयिषुरिव पाण्डुं म्लानमात्मानमिन्द्रः।।**[26]

अन्यत्रापि चन्द्रस्यास्तच्छविः प्रतीच्यामेव वर्णिता।[27] सामान्यजनोऽपि जानाति यद् विधोरुदयः पूर्णिमायां प्राच्यां भवति तत्तिथौ तस्य चन्द्रस्याऽस्तङ्गमत्वं प्रतीच्यां स्यादिति। ज्यौतिषशास्त्रीयास्तु जानन्त्येव सर्वमेतत्।

यदि चन्द्रमाः प्रतिकूलतां गतो भवति तर्हि साधनान्यनेकान्यपि विफलानि भवन्ति। ज्यौतिषशास्त्रस्यैष सिद्धान्तो माघेनाऽलेखि–

**प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता।**[28]

ज्यौतिषेऽप्युक्तं यच्चन्द्रः सम्मुखेऽर्थलाभं कारयति, दक्षिणे चेच्छशाङ्कः स्यात् तर्हि सुखं सम्पदञ्च प्रयच्छति सः। परन्तु यदि विधुः प्रतिकूलः पृष्ठे स्यात्तर्हि मरणतुल्यं कष्टं ददाति। एवमेव चन्द्रे वामे सति धननाशं विदधाति विधुः–

**सम्मुखे ह्यर्थलाभाय दक्षिणे सुखसम्पदः।**
**पृष्ठतो मरणञ्चैव वामे चन्द्रे धनक्षयः।।**[29]

शिशुपालवधः सूर्यास्तस्य[30] वर्णनमथ च दिवसस्योल्लेखो[31] महाकवेरस्य ज्यौतिषज्ञानं स्मारयति। विधुः पतितांशुक उपपतिरिव पश्चिमाशोपान्तेन नीचः शीघ्रमेवोपगच्छति–

**द्रुततरमुपयाति स्त्रंसमानांशुकोऽसा–**
**वुपपतिरिव नीचैः पश्चिमान्तेन चन्द्रः।।**[32]

अत्रापि विधोरस्तं वर्णयति पश्चिमदिशायाम्। एवमेवैकत्र माघो रात्रिकल्पावसानस्योल्लेखं चकार।[33] कल्पस्तु ज्यौतिषस्य विषयत्वम्।[34]

ज्यौतिषशास्त्रे संहितास्कन्धे सप्तर्षिध्रुवयोर्वर्णनं प्राप्यते। शिशुपालवधे माघः सप्तर्षिमण्डलस्य वर्णनं कुर्वन् कथयति यतसूक्ष्माकारस्य ध्रुवस्योपरि स्पष्टं देदीप्यमानं सप्तर्षिमण्डलं व्यस्तं

सत् कृष्णस्य चरणकमलप्रहारेण शैशवे शकटासुरस्य पुञ्जीभूतं शकटमण्डलमिव शोभतेतराम्-

**स्फुटतरमुपरिष्टादल्पमूर्त्तेर्ध्रुवस्य -**
**स्फुरति सुरमुनीनां मण्डलं व्यस्तमेतत्।**
**शकटमिव महीयः शैशवे शार्ङ्गपाणे-**
**श्चपलचरणकाब्जप्रेरणोत्तङ्गिताग्रम्।।**[35]

आचार्यवराहमिहिरस्य बृहत्संहितायां सप्तर्षिचारः समुल्लिखितः। उत्तरस्यां दिशि ध्रुवतारासम्पृक्तं सप्तर्षिमण्डलं नरीनर्त्ति।[36] अत्र सप्तर्षिमण्डले पूर्वभागे भगवान् मरीचिस्तत्पश्चिमे वशिष्ठस्ततोऽङ्गिरा ततोऽत्रिस्ततः पुलस्त्यस्ततः पुलहस्ततः क्रतुश्च विराजन्ते। मध्ये च साध्वी वशिष्ठपत्नी अरुन्धती विराजते –

**पूर्वे भागे भगवान् मरीचिरपरे स्थितो वसिष्ठोऽस्मात्।**
**तस्याङ्गिरास्ततोऽत्रिस्तस्यासन्नः पुलस्त्यश्च।।**
**पुलहः क्रतुरिति भगवानासन्ना अनुक्रमेण पूर्वाद्यात्।**
**तत्र वसिष्ठं मुनिवरमुपाश्रितापरुन्धती साध्वी।।**[37]

यन्नक्षत्रस्य पूर्वास्यामुदयेन सप्तर्षिमण्डलं स्पष्टं दृश्यते तस्मिन्नक्षत्र एव सप्तर्षयस्तिष्ठन्तीति संहितायामुक्तम्। अथ च सप्तर्षय एकैकस्मिन् नक्षत्रे शतं वर्षाणि यावच्चरन्ति-

**एकैकस्मिन्नृक्षे शतं शतं ते चरन्ति वर्षाणाम्।**
**प्रागुदयतोऽप्यविवरादृजून्नयति तत्र संयुक्ताः।।**[38]

एवं महाकविर्माघः सप्तर्षिमण्डलस्य ध्रुवतारायाश्च समुल्लेखं विधाय संहिताज्यौतिषस्य सूक्ष्मविषयाञ्जानातीति प्रमाणीभवति। संहिताज्यौतिषे धूमकेतोर्वर्णनं दरीदृश्यते। उन्नतमेघानां वर्णनं कुर्वता माघेनाऽभ्यधायि यत् तिरस्कृतरविकिरणाः सद्यः कृतस्नानाः हस्तिशरीरवत्कान्तिशालिनः स्फुरणशीलाः वारिदा मन्ये धूमकेतोः केतुत्वं प्राप्ता, पक्षे च धूमकेतोरग्रेर्ध्वजत्वमुपगताः-

**सवितुः परिभावुकैर्मरीचीनचिराभ्यक्तमतङ्गजाङ्गभाभिः।**
**जलदैरभितः स्फुरद्भिरुच्चैर्विदधे केतनतेव धूमकेतोः।।**[39]

अत्र धूमकेतोरुदयवर्णनात्प्रकारान्तरेण शिशुपालस्य वधो भविष्यतीति दैवज्ञशास्त्रोक्तं फलं विजृम्भितम् –

**धूमनिभो विषमाख्यः केतुर्भूभारमपनयति।**
**कतिपयदिवसं गत्वा गमननिवृर्त्तिं करोति धूम्रनिभः।।**[40]

अनेन धूमकेतोरुदयेन श्रीकृष्णः शिशुपालमाततायिनं हत्वा भूभारमपनीतवानिति सत्यम्। अथ च सुदर्शनचक्रेण शिशुपालस्य शिरश्छेदनं विधाय राहुस्त्रीस्तनयोः कार्कश्यशोभामपि श्रीकृष्णो नाशयामास।[41] प्रथमसर्गे एव नारदेन सह शिशुपालवधस्यः प्रतिज्ञां कुर्वाणस्य श्रीकृष्णस्य भ्रुकुटिच्छलेन मन्ये नभसि केतूदयोऽभूत्-

**ओमित्युक्तवतोऽथ शार्ङ्गिण इति व्याहृत्य वाचं नभ-**
**स्तस्मिन्नुत्पतिते पुरःसुरमुनाविन्दोः श्रियं बिभ्रति।**

**शत्रूणामनिशं विनाशपिशुनः क्रुद्धस्य चैद्यं प्रति**
**व्योम्नीव भ्रुकुटिच्छलेन वदने केतुश्चकारास्पदम्।।[42]**

एवं शिशुपालवधकाव्यरचयिता माघः संहिताज्यौतिषोक्तं धूमकेतोरुदयफलमपि सम्यग् ज्ञातवान्।

राहुः सूर्यं ग्रसत इति वर्णनमपि राहुचारदिशा शिशुपालवधे कीर्त्तितम्।[43] चन्द्रशुक्रयोरुदयस्य वर्णनमपि तेन विहतम् –

**अवतेरतुर्नयननन्दनौ नभः शशिभार्गवावुदयपर्वतादिव।[44]**

अत्र श्रीकृष्णश्चन्द्रो युधिष्ठिरश्च शुक्र इति वर्णितौ। यथा चन्द्रशुक्रयोः समुदये जाते मङ्गलकार्याणि भवन्ति, तथैवाऽत्र श्रीकृष्णयुधिष्ठिरयोः रथादवतीर्णे सति जगन्मङ्गलदायकः शिशुपालस्य वधोभवितुमर्हति।

शिशुपालवधमहाकाव्यस्य पञ्चदशसर्गेऽनेकेषु पद्येषु तावदपशकुनस्य वर्णनं विहितम्। शिशुपालो यदा स्वकीयां सेनां सज्जीकृतवान्, तस्मिन् समयेऽपशकुनानां स्थितिं वर्णयामास कविः। राजयोषितो हस्ताच्च्युतं कांस्यमद्यपात्रं प्रभग्नम्[45], क्वचिच्च युवतीनां रोदनम्,[46] प्रियतमस्य विजयमङ्गलार्थमश्रुरोधात्करात्कङ्कणनिपतनं[47] च काव्ये नितरां कविनाऽवर्णि। अनेन शिशुपालस्य कृतेऽपशकुनानि बभूवुः। ज्योतिषशास्त्रेऽनेकत्राऽपशकुनानां निर्देशो विहितः।[48] छिक्काऽशुभं ददातीति शास्त्रोक्तवचनं स्मृत्वा कश्चिद्योद्धा गमनसमये नतभ्रुवो रमण्याः शिथिलभुज-युगलकङ्कणध्वनिं क्षुतमिवाऽशुभं श्रुत्वा क्षणमात्रं प्रस्थानादवरुद्धवान् –

**क्षणमात्ररोधि चलितेन कतिपयपदं नतभ्रुवः।**
**स्रस्तभुजयुगगलद्वलयस्वनितं प्रति क्षुतमिवोपशुश्रुवे।।[49]**

सर्वदिक्षु क्षुतमशुभं भवति, गोक्षुतं तु मरणप्रदं भवति। एतत्सर्वं नारदसंहितायामुक्तम् –

**सर्वदिशु क्षुतं नेष्टं गोक्षुतं निधनप्रदम्।**
**अफलं यद्द्वामवृद्धरोगीपीनसवत्कृतम्।।[50]**

बसन्तराजशाकुने छिक्काया अपशकुनं निगदितम्। क्षुतेन सर्वे शकुनाः शुभाः नष्टा भवन्ति–

**आदौ क्षुतं चेच्छकुनैस्ततः किम्,**
**पश्चात्क्षुतं चेच्छकुनैस्ततः किम्।**
**जातानुजाताञ्छकुनान्निहन्ति**
**क्षुतं क्षणेनाऽत्र न संशयोऽस्ति।।[51]**

पञ्चदशसर्गेऽन्तिमे पद्ये शिशुपालपक्षीयराज्ञां युद्धप्रस्थाने काचिद्रजोधर्मयुक्ता रमणी दाहयुक्ताः शोभारहिता दिशाः भूमिवत्कम्पमाना भ्रान्तिमत्यो युवत्यश्च अशिवमपशकुनं चक्रुः–

**प्रस्थाने पार्थिवानामशिवमिति पुरो भावि नार्यः शशंसुः।[52]**

एवं शिशुपालवधे संहिताज्यौतिषस्य विषया आगताः। अनेन ज्ञायते यदस्य महाकाव्यस्य कर्त्ता माघो ज्यौतिषस्य सर्वान् विषयान् सुष्ठु जानाति स्म। काव्यरसेनाऽभिषिक्ताः शास्त्रीया विषयाः समाम्नाताः शिशुपालवधे। तत्र ज्यौतिषमस्पृष्टं नास्ति।

**होराज्यौतिषस्य तत्त्वविचारः –**

अस्मिञ्जगति समेषां मनुष्याणां पूर्वजन्मनां कर्मफलबोधकं शास्त्रं ज्यौतिषे होरेति कथ्यते, यथाऽऽह कल्याणवर्मा–

**कर्मफललाभहेतुं चतुराः संवर्णयन्त्यन्ये।**
**होराशास्त्रं सञ्ज्ञा लग्नस्य तथार्धराशेश्च।।**[53]

होराशास्त्रं जातकमिति नाम्नाऽपि प्रतिथं वर्तते। मनुष्याणां भाग्यफलविर्मशशास्त्रमेव होराशास्त्रं भवितुमर्हति।[54] अस्य होराशास्त्रस्य सन्दर्भाः शिशुपालवधे प्राप्यन्ते। अस्मिन् काव्ये शिशुपालो युधिष्ठिरं भर्त्सयन् कथयति यद् हे युधिष्ठिर! तव नाम धर्मराज इति कथं जना असत्यमेव वदन्ति। यथा नितान्तमशुभमपि भौमदिनं लोके मङ्गलमिति जल्पन्ति जनाः–

**तव धर्मराज इति नाम कथमिदमपष्ठु पठ्यते।**
**भौमदिनमभिदधत्यथवा भृशमप्रशस्तमपि मङ्गलं जनाः।।**[55]

होराशास्त्रे भौमदिनं न प्रशस्तकरं मन्यते। भौमः पापग्रहो[56] जातकेऽशुभं फलं प्रयच्छति। मङ्गलवारे चेज्जातकस्य जन्म स्यात्तर्हि तत्फलं सदा रोगशीलत्वं, भवति–

**द्वात्रिंशे च द्वितीये च वर्षे पीडा मङ्गले।**
**चतुः सप्ततिवर्षाणि सदा रोगी स जीवति।।**[57]

मङ्गलदिने यस्य जन्म भवेत्तस्य फलमत्र मानसागरीकारेण शुभतया नोक्तमतो भौमदिनममङ्गलं मनुते दैवज्ञः। शिशुपालवधे मासर्तुकीर्त्तनं ज्यौतिषशास्त्रस्य होराशास्त्रं स्मारयति। माघेन शिशुपालवधस्य षष्ठसर्गे षड्तूनां वर्णनमकारि। ऋतुवर्णनं तु महाकाव्यस्याङ्गभूतम्। तत्र प्रथमसर्ग एव तेन ऋतवः षट् कीर्त्तिताः–

**तपेन वर्षा शरदा हिमागमो**
**वसन्तलक्ष्म्या शिशिरः समेत्य च।**
**प्रसूनक्लृप्तिं दधतः सदर्तवः**
**पुरेऽस्य वास्तव्यकुटुम्बितां ययुः।।**[58]

ज्यौतिषस्य होरास्कन्धेऽपि मीनमेषयोरर्के वसन्तः, वृषमिथुनयोरर्के ग्रीष्मः, कर्कसिंहयोरर्के वर्षा, कन्यातुलयोः सूर्ये शरद् वृश्चिकचापयोः सूर्ये हेमन्तः, मकरकुम्भयोरर्के च शिशिर-ऋतुर्भवति–

**मीनमेषगते सूर्ये वसन्तः परिकीर्त्तितः।**
**वृषभे मिथुने ग्रीष्मो वर्षा कर्कटसिंहयोः।।**
**कन्यायाञ्च तुलायाञ्च शरदृतुरुदाहृतः।**
**हेमन्तो वृश्चिकद्वन्द्वे शिशिरो मृगकुम्भयोः।।**[59]

एकत्र ऋतुवर्णने महाकविर्मासस्य कीर्त्तनं कुर्वन् एवं कथयति यत्क्रोधयुक्ता या रमणी प्रियतमेन सार्धं नाऽतिष्ठत्। मार्गशीर्षमासेन कृतवेपथुः सैव तरुणी सहास्या सती तं प्रियतममाश्लिष्य सहसा शिथिलीकर्तुं नोत्सहते स्म –

प्रियतमेन यया सरुषा स्थितं
न सह सा सहसा परिरभ्य तम्।
श्लथयितुं क्षणमक्षमताङ्गना
न सहसा सहसा कृतवेपथुः।।[60]

अत्र सहस्-शब्दो मार्गशीर्षमासपर्यायत्वेनोल्लिखितः। एवमेव शिशिरमासं विहायाऽस्माकं शीतहरस्य कुचोष्मणः को गुणो भविष्यतीति बुद्ध्या निवृत्तक्रोधाः प्रियाङ्गना अनुमतशीलान् नमनशीलांश्च प्रियतमान् घनमालिङ्गितवत्यः।[61] सर्वे जानन्ति यत्कालविधानशास्त्रे ऋतुमासयोः सम्यगुल्लेखो वर्तते। अथ च होराज्यौतिषे जन्मकुण्डल्यां सुनफाऽनफादुरुधराख्याः योगा भवन्तीत्युक्तम्। शिशुपालवधेऽपि दुरुधरा-योगस्य प्रतिपादनं कुर्वन् कविः कथयति यद् भीमार्जुनयोर्मध्ये श्रीकृष्णो दुरुधराख्यं योगं धारयन् चन्द्र इव रेजे-

पवनात्मजेन्द्रसुतमध्यवर्त्तिना -
नितरामरोचि रुचिरेण चक्रिणा।
दधतेव योगमुभयग्रहान्तर-
स्थितिकारितं दुरुधराख्यमिन्दुना।।[62]

यदि चन्द्राद् द्वितीयभवने सूर्यभिन्नः कश्चिद् ग्रहो वर्तते तर्हि सुनफायोगः, चन्द्राद् द्वादशभावे सूर्यभिन्नः कोऽपि ग्रहश्चेत्तर्हि अनफायोगः, एवमेव द्वितीयद्वादशभावयोश्चन्द्रात्कश्चित्सूर्यभिन्नो ग्रहस्तिष्ठेत् तर्हि दुरुधरायोगो भवति जातकशास्त्रे-

हित्वाऽर्कं सुनफाऽदुरुधराः स्वान्त्योभयस्थैर्ग्रहैः।
शीतांशोः कथितोऽन्यथा तु बहुभिः केमद्रुमोऽन्यैस्त्वसौ।।[63]

अस्य पद्यस्य टीकायां मल्लिनाथोऽपि पद्यांशमेतदेव समुद्धृतवान्। तेन कल्याणवर्मण एतत्पद्यमपि समुदलेखि-

रविवर्जं द्वादशगैरनफा चन्द्राद् द्वितीयगैः सुनफा।
उभयस्थितैर्दुरुधरा केमद्रुमसञ्ज्ञिकोऽतोन्यः।।[64]

दुरुधरायोगस्य प्रस्तारविधिनाऽशीत्युत्तरशतं भेदा भवितुमर्हन्ति, एष योगः शुभफलदायकः प्रोक्तः-

सूर्यं विना द्वादशवित्तसंस्थैः
श्चन्द्रस्य योगोऽत्र हि दुर्धराख्यः।
अशीतियुक्तं शतमेव तेषां
पृथक् प्रदिष्टं सुशुभं समग्रम्।।[65]

अत्र माघेन दुरुधरायोगस्य भाविकालिकफलं विद्योतितम्। दुरुधरायोगे जातो जातको धनवाहनभूमिसुखसंयुक्तः सुलोचनाकटाक्षकटाक्षितः सन् वैरिणं जित्वा भूपतिः स्यात्। यथोक्तंजातकाभरणे-

द्रविणवाहनबन्धुवसुन्धरा सुखयुतं सततं कुरुते नृपम्।
दुरुधराऽतितरां जितवैरिणं सुनयनानयनाञ्चललालसम्।।[66]

श्रीकृष्णोऽत्र दुरुधरायोगस्य फलं लप्स्यत इति महाकवेरत्राऽभिप्रायः शिशुपालस्य वैरिणो वधान्निश्चप्रचमेव फलीभूतः। अनेन होराज्यौतषस्य सूक्ष्मविषयानपि महाकविर्माघो जानाति स्म।

शिशुपालवधे नक्षत्रमालाया वर्णनं विहितम्।[67] यद्यपि नक्षत्रमाला हारविशेषो भवति, यस्यां मालायां नक्षत्रसङ्ख्यकाः सप्तविंशतिमौक्तिकाः भवन्ति। यथोक्तं मल्लिनाथेन–

सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः।[68]

एकत्र माघेन ताराणां निमीलनं वर्णितम्। तत्र रात्रिर्निमीलिताऽभूत्। व्यतीतायां रात्रौ सर्वास्तारा अपि बभूवुरस्तङ्गताः –

सपदि कुमुदिनीभिर्मीलितं हा क्षपापि।
क्षयमगमदपेतास्तारकास्ताः समस्ताः।।[69]

अत्र नक्षत्रताराणां समुल्लेखाज्ज्यौतिषस्य ज्ञानं स्फुटीभवति। ज्यौतिषे सप्तविंशत्यक्षष्टा-विशंतिसङ्ख्यकानि नक्षत्राणि, नक्षत्रेषु च तारा दरीदृश्यन्ते।[70] महाकविर्माघ उक्तवान् यत् काचित्तरुणी प्रतिगवाक्षं मुखं विधाय रतिं विधातुं भृशमौत्सुक्यशीला स्वनेत्राभ्यामस्ताचलसूर्ययोरन्तरं माति स्म। कति हस्ताशिष्टमरत्निमात्रमवशिष्टमित्यादिकं तया युवत्या स्वदृशा वेधत इत्याशयः-

गतया पुरः प्रतिगवाक्षमुखं दधती रतेन भृशमुत्सुकताम्।
मुहुरन्तरालभुवमस्तगिरेः सवितुश्च योषिदमिमीत दृशा।।[71]

सूर्यास्तः कदा भविष्यति? सूर्यास्ते सति रात्रौ रतिरपेक्षत इति रमण्याः सूर्यस्य वेधोऽत्र दृशा प्रख्यापितः। एष विषयो ज्यौतिषस्य, यथोक्तं सिद्धान्ततत्त्वविवेके–

अर्करश्मिप्रघातोऽस्ति नेत्रयोश्च महान् युतौ।
अन्तरे त्वल्पकश्चैवं नृणामनुभवो यतः।।[72]

महाकविर्माघ एवं वेधप्रक्रियां प्रयोगशीलामपि लिखितवान्। अन्यत्रापि दृष्टिसूत्रद्वारेण वेधः समुल्लिखितो[73] विस्तरभियाऽत्र नाम्रातः।

शिशुपालवधे हस्तनक्षत्रस्य तथा च तन्नक्षत्रे चन्द्रसञ्चारस्य वर्णनमेकत्र प्राप्यते। सुरतासक्तान् दर्शं दर्शं हस्तनक्षत्रे लज्जयाऽधोमुखचन्द्रा रात्रिः पराङ्मुखी बभूव–

अभजत परिवृत्तिं साथ पर्स्तहस्ता–
रजनिरवनतेन्दुर्लज्जयाऽधोमुखीव।।[74]

दक्षिणचारिषु नक्षत्रेषु हस्तनक्षत्रं वर्तते–

पुनर्वसुमृगश्चार्द्रा ज्येष्ठा मैत्रं करस्तथा।
पूर्वाषाढोत्तराषाढे मूलं दक्षिणचारिणः।।[75]

अत्रोऽत्र चैत्रमासस्य शुक्लपक्षस्य त्रयोदशी चतुर्दशी वा तिथिर्भवितुमर्हति तदैव हस्तनक्षत्रे चन्द्रमा अस्तोन्मुखो रात्रौ अभवत्। महाकविर्माघो ज्यौतिषस्य ज्ञाताऽऽसीद् यतो हि तेन लिखितं यद् गुरुशुक्रानुगां चान्द्रमसीं शोभां दधानः श्रीकृष्ण उद्धवबलरामाभ्यां सह सभामण्डपमगच्छत्–

सार्धमुद्धवसीरिभ्यामथासावासदत्सदः।
गुरुकाव्यानुगां विभ्रच्चान्द्रीमभिनभः श्रियम्।।[76]

ज्यौतिषस्य होराशास्त्रे चन्द्रगुरुशुक्राणामेकत्र स्थितिः सौभाग्यं निर्दिशति, चारुकीर्त्तिं बुद्धिं वृत्तिञ्च प्रयच्छति-

भाग्यभाग्भवति मानवः सदा
चारुकीर्त्तिमतिवृत्तिसंयुतः ।
भार्गवेन्दुसुरराज - पूजिताः
संयुता यदि भवन्ति सम्भवे।।[77]

अनेन ज्ञायते यद् भगवान् कृष्णोऽत्र नितरां भाग्यशाली यशोयुक्तः स्वकर्मणि च कुशलो भविष्यति। यथा चन्द्रो गुरुशुक्राभ्यां सह गच्छति तथैव श्रीकृष्णः उद्धवबलरामाभ्यां सह जगाम। अनेन प्रकारान्तरेण ज्यौतिषहोरोक्तं तत्फलं श्रीकृष्णः प्राप्तवानित्यर्थः। माघस्यैतेन ज्यौतिषशास्त्रज्ञानप्रतिभा सुष्ठु स्फुरिता भवति।

इत्थं शिशुपालवधमहाकाव्यस्य सन्दर्भैर्ज्ञायते यदस्मिन् महाकाव्ये ज्यौतिषशास्त्रीयाः स्कन्धत्रयात्मका विषयाः दरीदृश्यन्ते। यद्यपि काव्यमेतत् काव्यशास्त्रीयविधानानुसारं शिशुपालवधात्मकं कथानकं रसालङ्कारादिभिः प्रस्तौति। परन्तु महाकवेर्यच्छास्त्रीयं ज्ञानं वर्तते तस्याऽपि निदर्शनं सुष्ठु विदधाति काव्यमेतत्। अनेन कवेः शास्त्रीया प्रतिभा नितरां विद्योतते। अत्र पत्रमेतज्ज्यौतिषशास्त्रमभिलक्ष्य प्रस्तुतम्, तथा च दृश्यते सिद्धान्तसंहिताहोरासम्पृक्तं सम्यग् ज्ञानं महाकवेर्माघस्य। एवमेव चेदायुर्वेदव्याकरणदर्शनकाव्यशास्त्रकामशास्त्र-शालिहोत्रवेदपुराणेतिहासादिविषयकं ज्ञानं शिशुपालवधे कोऽपि निरीक्षेत् तर्हि शास्त्राणामेतेषां विषयाः सम्यगुन्मीलिताः भवितुमर्हन्ति। अनेन शोधपत्रेण शिशुपालवधमहाकाव्यस्य ज्यौतिषशास्त्रीयतत्त्वविमर्शोऽत्र विजृम्भित इत्यस्मिन् सहृदयहृदया विपश्चितो ज्योतिर्विद एव प्रमाणमिति।

**सन्दर्भाः-**

1. आर्यभटीये-कालक्रियापादे-11
2. शिशुपालवेध 1/23
3. ब्रह्मस्फुटसिद्धान्ते-मध्यमाधिकारे-28
4. युगानां सप्ततिः सैका मन्वन्तरमिहच्यते। कृताब्दसङ्ख्यस्तस्यान्ते सन्धिः प्रोक्तो जलप्लवः।। (सूर्यसिद्धान्ते-मध्यमाधिकारे-1/18)
5. सिद्धान्तशिरोमणौ-गोलाध्याये-भुवनकोशे-62-65
6. शिशुपालवधे 1/19
7. ब्रह्मस्फुटसिद्धान्ते-गोलाध्याये-3
8. शिशुपालवधे 3/1

9. सूर्यसिद्धान्ते-मानाध्याये-9
10. ग्रहलाघवे-उदयास्ताधिकारे-22
11. शिशुपालवधे 2/39
12. शिशुपालवधे 2/35
13. तुल्येऽपराधे स्वर्भानुमन्तं चिरेण यत्।
हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम्।। (शिशुपालवधे 2/49)
14. शिशुपालवधे 2/61
15. सिद्धान्तशिरोमणौ-गोलाध्याये (ग्रहणवासनयाम् )-10
16. वटेश्वरसिद्धान्ते-मध्यमाधिकारे 10/40
17.शिशुपालवधे 14/78
18. शिशुपालवधे 3/22
19. मुहूर्त्तचिन्तामणौ-नक्षत्रप्रकरणे-6
20. बृहद्दैवज्ञरञ्जने, पृ. 46-47
21. मुहूर्त्तगणपतौ-नक्षत्रप्रकरणे-43
22. शिशुपालवधे 3/2
23. वशिष्ठसंहितायाम् - यात्राध्याये-166
24. बृहत्संहितायाम् - चन्द्रचाराध्याये-20
25. उदयमुदितदीप्तिर्याति यः सङ्गतौ मे
पतति न वरमिन्द्रः सोऽपरामेष गत्वा।
स्मतरुचिरिव सद्यः साभ्यसूयं प्रभेति
स्फुरति विशदेमेषा पूर्वकाष्ठाङ्गनाया)।। (शिशुपालवधे 11/12) तथा च शिशुपालवधे 9/26
26. शिशुपालवधे 11/22
27. शिशुपालवधे 11/14
28. शिशुपालवधे 9/6
29. शीघ्रबोध-द्वितीयप्रकरणे-65
30. शिशुपालवधे 9/18
31. 'परिमन्दसूर्यनयनो दिवसः' (शिशुपालवधे 9/3)
32. शिशुपालवधे 11/65
33. प्रलयमखिलतारालोकमह्नाय नीत्वा
श्रियमनतिशयश्रीः सानुरागां दधानः
गगनसलिलराशिं रात्रिकल्पावसाने
मधुरिपुरिव भास्वानेष एकोऽधिशेते।। (शिशुपालवधे 11/66)
34. इत्थं युगहसस्रेण भूतसंहारकारकः।
कल्पो ब्राह्ममहः प्रोक्तं शर्वरी तस्य तावती।। (सूर्यसिद्धान्ते-मध्यमाधिकारे-20)
35. शिशुपालवधे 11/3

36. ऐकावलीव राजति ससितोत्पलमालिनी सहासेव।
नाथवतीव च दिव्यैः कौबेरी सप्तभिर्मुनिभिः।।
ध्रुवनायकोपदेशान्नरीनर्त्तीवोत्तरा भ्रमद्भिः।
यैश्चारमहं तेषां कथयिष्ये वृद्धागर्गमतात्।। (बृहत्संहितायाम् - सप्तर्षिचारे 1-2)
37. बृहत्संहितायाम् , सप्तर्षिचारे- 5-6
38. बृहत्संहितायाम् , सप्तर्षिचारे -4
39. शिशुपालवधे 20/69
40. वशिष्ठसंहितायाम् - केतुचाराध्याये-2
41. राहुस्त्रीस्तनयोरकारि सहसा येनाश्लथालिङ्गन-
व्यापारैकविनोददुर्ललितयोः कार्कश्यलक्ष्मी वृथा।। (शिशुपालवधे 20/78)
42. शिशुपालवधे 1/75
43. ग्रसते हि तमोपहं मुहुर्ननु राह्वाह्वमहर्पतिं तमः। (शिशुपालवधे 16/57)
44. शिशुपालवधे 13/61
45. शिशुपालवधे 15/81
46. शिशुपालवधे 15/83, 90
47. तत्रैव 15/85
48. बृहत्संहितायाम् - द्रष्टव्यः शाकुनाध्यायः, मुहूर्त्तचिन्तामणो-द्रष्टव्यं यात्राप्रकरणम्
49. शिशुपालवधे 15/91
50. नारदसंहितायाम् 33/92
51. बसन्तराजशाकुने-नरेङ्गिते छिक्काप्रकरणे-8
52. शिशुपालवधे 15/96
53. सारावल्याम् 2/3
54. जातकमिति प्रसिद्धं यल्लोके कीर्त्यते होरा।
अथवा दैवविमर्शनपर्यायः खल्वयं शब्दः।। (सारावल्याम् 2/4)
55. शिशुपालवधे 15/17
56. बृहज्जातके 2/5
57. मानसागर्याम् 1/237
58. शिशुपालवधे 1/66
59. ज्यौतिषतत्त्वप्रकाशे 1/32-34
60. शिशुपालवधे 6/57
61. शिशिरमासमपास्य गुणोऽस्य न-क इव शीतहरस्य कुचोष्मणः।
इति धियास्तरूषः परिरेभिरे घनमतो नमतोऽनुमतान् प्रियाः।। (शिशुपालवधे 6/65)
62. शिशुपालवधे 13/22
63. बृहज्जातके 13/3, शिशुपालवधे 13/22 मल्लिनाथटीकायाम्।
64. शिशुपालवधे 13/22 मल्लिनाथटीकायाम्।

65. यवनजातके 41/1
66. जातकाभरणे-चन्द्रयोगाध्याये-5
67. ओषामसे मत्सरोत्पातवाताश्लिष्द्न्तक्ष्मारूहां घर्षणोत्थैः।
68. शिशुपालवधे 18/35 मल्लिनाथटीकायाम्।
69. शिशुपालवधे 11/24
70. भारतीयज्योतिषे, प- 600
71. शिशुपालवधे 9/2
72. सिद्धान्ततत्त्वविवेके-बिम्बाधिकारे-32
73. तत्रैव-46
74. शिशुपालवधे-10/91
75. ज्यौतिषतत्त्वप्रकाशे 1/95
76. शिशुपालवधे 2/2
77. ज्योतिषतत्त्वप्रकाशे 4/367



# अभिनवरसविमर्शः

- आचार्यः जि.यस्.आर्. कृष्णमूर्तिः

*(काव्यामृत रसास्वाद क्या है? इस विषय में आचार्य भरतमुनि से लेकर अद्यावधि कतिपय अर्वाचीन अचार्यों ने भी अपने–अपने मतों का उल्लेख किया है। आचार्य भरत के रससूत्र के चारों व्याख्याकारों के अतिरिक्त एकादश मत प्राप्त होते हैं, जिसमें आचार्य अभिनव गुप्त का मत मूर्धन्य माना जाता है। इन्हीं 'मतों' को आधार बनाकर अन्य आचार्यों ने भी रसानुभूति के सन्दर्भ में अपने–अपने मतों को प्रस्तुत किया है। रसानुभूति की लौकिकता तथा अलौकिकता पर भी आचार्यों में मतवैषम्य है। प्रस्तुत लेख में रसानुभूति प्रक्रिया के भारतीय आस्तिक, नास्तिक दर्शन तथा अर्वाचीन आचार्यों के मतों का विस्तृत विश्लेषण किया गया है।)*

विदितचरमेव समेषां विदुषाम् –

**संसारविषवृक्षस्य द्वे फले अमृतोपमे।**
**काव्यामृतरसास्वादः सज्जनानां च संगतिः।।**

तेषु आद्यः अनुभवैकवेद्यः। तस्मिन्विषये नैके स्वकीयसिद्धान्तान् प्रतिपादयामासुः। आभरतात् आपण्डितराजम् आचार्याः अस्मिन्विषये अनेकान् विचारान् प्रकटीचक्रुः। तत्र काव्यामृतरसास्वादो नाम कः? इति विचारः प्रवर्तनीयः।

अथ काव्यं नाम किम्? शब्दः काव्यम्? उत अर्थः काव्यम्? आहोस्वित् उभौ काव्यम्? इत्यत्र चिरन्तनकाव्यलक्षणविधायिनां सरणिमनुसृत्य शब्दार्थौ काव्यमिति निश्चप्रचं प्राकाटि च मम्मटादिभिः, समर्थितं च नागेशभट्टादिभि ''तदधीते तद्वेद'' इति सूत्रस्य भाष्यपङ्क्तीः समुद्धरद्भिः। लोकोत्तरवर्णनानिपुणकविकर्मणः काव्यस्य परमं प्रयोजनं किमिति? जिज्ञासायां 'रसास्वादः' एव इति सद्यः परनिर्वृत्तिः इति च सर्वैः अङ्गीकृतम्। तदेव काव्यामृतरसास्वादः। कथम् ?

तत्र महाकविः भवभूतिः व्यङ्ग्यमर्यादया काव्यस्य मुख्यं प्रयोजनं दर्शयति अन्यापदेशेन–

**म्लानस्य जीवकुसुमस्य विकासनानि।**
**संतर्पणानि सकलेन्द्रियमोहनानि।**
**एतानि ते सुवचनानि सरोरुहाक्षि!**
**कर्णामृतानि मनसश्च रसायनानि।।** उ.रा.च.(1)–36 इति।

अत्र सीतायाः वचनानि वर्णयन् कविः तानि काव्यविषयेऽपि समन्वितानि भवन्ति इति सूचयति। कथं वचनानि मनसो रसायनानि भवन्ति? इति चेत् तत्र समाधानं रसास्वादः इति।

अथ कोऽयं रसः?, यस्य आस्वादनेन मनः रसायितं भवति? इति चेत् उच्यते विभावादिव्यज्यमानरत्याद्यन्यतमः स्थायीभावः रसः इति। तथा च सूत्रं भरतस्य- "**विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः**" इति।

तच्च दर्शितं दशरूपककारेण धनञ्जयेन दशरूपके चतुर्थप्रकाशे-

**विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः।**
**आनीयमानः स्वादुत्वं स्थायीभावः रसः स्मृतः।।**[2] इति।

स्थायिनः भावाः रत्यादयः वासनारूपेण सहृदयानां मनसि स्थिररूपेण वर्तन्ते। तेषां रत्यादीनां लोके कारणात्मना वर्तमानानि यदि काव्ये वर्णितानि विभावपदवाच्यानि, कार्याणि कविसमर्पितानि अनुभावपदवाच्यानि, सहकारीणि काव्यसमर्पितानि व्यभिचारिपदवाच्यानि सत्त्विकाः अपि भावाः व्यभिचारिण एवेति लाक्षणीकैः अङ्गीक्रियते।

विभावानुभावव्यभिचारिणः इति समस्तं पदम् , अत्र द्वन्द्वसमासः, तैः संयोगात् रसस्य निष्पत्तिः। संयोगः द्विष्ठः। तर्हि तैः कस्य संयोगः स्थायिनः इति समाधानम्। एवं रसस्य निष्पत्तिः। अस्मिन् सूत्रे संयोगनिष्पत्तिरसपदानि व्याख्यानबीजानि।

कथं स्थायीभावः स्वादुतामानीयते? तत्रैव बहवः बहुधा विचारान् प्रास्तुवन्।

अत्र निष्कर्षतया पण्डितराजेन एकादशधा रससूत्रार्थविचाराः प्रादर्शितथाहि-

रसगङ्गाधरे रसगङ्गाधरस्वरूपान्कादशरससूत्रार्थविचारान् प्रस्तूय ग्रन्थस्य अन्वर्थतां साधयति। यथा-

रसगङ्गाधरकारस्य अभिमतं रसनिरूपणम्, अस्मिन् ग्रन्थे रसस्यैव निरूपणस्य प्राधान्यम्। अत एव तन्नाम विहितम्। अस्य पदस्य व्युत्पत्तिरीदृशी धरतीति धरः, रस एव गङ्गा रसगङ्गा तस्याः धरः रसगङ्गाधरः। गङ्गाधरः इति पदं शिवपरतया यदि स्वीक्रियते, रस एव गङ्गाधरः यत्र इति। रस एव गङ्गाधरस्वरूपः इति अनुगम्यते। गङ्गाधरः रुद्रः, एकादशधा भिन्नः। यथा रुद्रः एकादशधा भिन्नः तथैव रसवादाः अपि एकादशधा भिन्न इति दर्शयितुमेव तावन्तः रसवादाः दर्शिताः।

**तत्र विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः इति सूत्रं तत्तन्मतपरतया व्याख्यायते** इति अवतारिकां कृत्वा क्रमशो विवृणुते जगन्नाथः -

**1. आद्ये अभिनवगुप्तमते-**

विभावानुभावव्यभिचारिसंयोगात् व्यञ्जनात् चिदानन्दविशिष्टस्थाय्यात्मनः स्थाय्युपहितचिदानन्दात्मनो वा निष्पत्तिः स्वरूपेण प्रकाशनम्।

**2. द्वितीये भट्टनायकमते-**

विभावानुभावव्यभिचारिणां सम्यक् साधारणात्मतया योगात् भावकत्वव्यापारेण भावनात् , रसस्य स्थाय्युपहितसत्त्वोद्रेकप्रकाशितस्वात्मानन्दरूपस्य निष्पत्तिः भोगाख्येन साक्षात्कारेण विशदीकृतिः।

**3. तृतीये नव्यमते–**

विभावानुभावव्यभिचारिणां संयोगात् भावनाविशेषरूपात् दोषात् रसस्य अनिर्वचनीयदुष्यन्तरत्याद्यात्मनो निष्पत्तिः उत्पत्तिः।

**4. चतुर्थे परकीयमते–**

विभावादीनां संयोगात् ज्ञानात् रसस्य ज्ञानविशेषात्मनो निष्पत्तिः उत्पत्तिः।

**5. पञ्चमे भट्टलोल्लटमते–**

विभावादीनां सबन्धात् रसस्य रत्यादेः निष्पत्तिः उत्पत्तिः।

**6. षष्ठे श्रीशङ्कुकमते–**

विभावादिभिः कृत्रिमैरपि अकृत्रिमतया गृहीतैः संयोगात् अनुमानात् रसस्य रत्यादेः निष्पत्तिः अनुमितिः, नटादौ पक्षे इति शेषः।

**7. सप्तमे कतिपयेषां मते–**

विभावादीनां त्रयाणां संयोगात् समुदायात् रसनिष्पत्तिः रसपदव्यवहारः।

**8. सप्तमे कतिपयेषां मते–**

विभावादिषु सम्यग् योगात् चमत्कारात् रसनिष्पत्तिः रसपदव्यवहारः।

**9. नवमे अन्येषां मते–**

भाव्यमानो विभाव एव रसः। इयं व्याख्या सूत्रविरुद्धा।

**10. दशमे इतरेषां मते–**

अनुभावस्तथा तथा परिणमति इति व्याख्यायाः अपि सूत्रविरोधः।

**11. एकादशे केषांचन मते–**

व्यभिचार्येव तथा तथा परिणमति इति मतमपि सूत्रविरुद्धम्।

अत्र विलक्षणतेयं यत् क्रमेऽपि स्पष्टता प्रादर्शित।

अत्र एकादशसु वादेषु त्रयः आद्याः व्यञ्जनानुकूलाः, तदनु क्रमशः त्रयः व्यञ्जनाप्रतिकूलाः, द्वौ तु लोकन्यायप्रसिद्धौ, पानकरसचर्वणावत्, चतुर्थं तु धनिकमतम्, नव्यमतं तु जगन्नाथाभिमतम् इति केचन कथयन्ति। अन्तिमं त्रयं तु यद्यपि सूत्रविरुद्धं तथापि लोकानुभवगोचरतामुररीकृत्य एकादशसंख्यां पूरयितुं त्रयो वादाः प्रास्ताविषत। अत्र इदमनुसन्धेयं यत् सूत्रविरुद्धवादत्रयं विहाय अष्टवादानां स्वीकारेऽपि गङ्गाधरस्य अष्टमूर्तित्वं न व्याहन्यते इति।

पूर्वोक्तेषु एकादशसु वादेषु अभिनवगुप्तमतं मूर्धन्यं प्रतिपादयन्तः–

**"समुचितललितसन्निवेशचारुणा काव्येन समर्पितैः"**– इत्यारभ्य – **येयं द्वितीयपक्षे तदाकारचित्तवृत्त्यात्मिका रसचर्वणा उपन्यस्ता, सा शब्दव्यापारजन्यत्वाच्छाब्दी, अपरोक्षसुखालम्बनत्वादपरोक्षात्मिका, तत्त्वं वाक्यजबुद्धिवत्** इति उपसंहृत्य **इत्याहुरभिनवगुप्ताचार्याः** इत्यादरभावेन व्याहृत्य तेषु गौरवं प्राचीकटन् जगन्नाथाः।

एवमेव मम्मटाचार्या अपि भट्टलोल्लटश्रीशङ्कुकभट्टनायकीयरसवादान् अभिनवदर्शितानुविधया प्रदर्श्य अन्तिममभिनवमतमेव पार्यन्तिकतया प्रदर्श्य **इत्यभिनवगुप्तपादाः** इति उपसमाहार्षुः।

एतैरुद्धरणैः अनन्तरकालिकानामभिनवगुप्तपादेषु प्रामाणिकता दर्शिता इति सुस्पष्टम्। अभिनवगुप्तपादाः न केवलमभिव्यक्तिवादस्यैव प्रवर्तकाः भवन्ति, इतरेषां वादानां समुन्मीलने अपि मार्गदर्शकाः भवन्ति। किमु वक्तव्यं सम्पूर्णस्य साहित्यशास्त्रस्य त एव मूलपुरुषाः। यदि तेषाम् अभिनवभारती, ध्वन्यालोकलोचनं न प्रादुरभविष्यतां भट्टलोल्लटश्रीशङ्कुकभट्टनायक-नामान्येव रसवादविमर्शे न आकर्णयिष्याम इति कथने नास्ति संशीतिलेशः।

एतेषां सर्वेषां मतानामनुवादकाः प्रस्तोतारो वा भवन्तु अभिनवगुप्तपादाः परं साहित्यशास्त्रस्य तदीयमंशदानं सर्वथा सर्वदा अस्माभिः प्रस्मर्तव्यं न विस्मर्तव्यम्। तदीयं चिन्तनमवलम्ब्यैव जगन्नाथाः एकादशरसवादान् उद्भावयामासुः इति अनुपदमेव अस्माभिः लक्षितम्। तदाधारीकृत्यैव इतरेऽपि आचार्याः रसानुभूतिविषये अनेकान् वादान् प्रास्तुवन्। तेषां वादानां मूलं भवति अभिनवगुप्तस्य इयं पङ्क्तिः-

**''अत्र विज्ञानवादः, द्विधाभिधानं, स्फोटतत्त्वं, सत्कार्यवादः, एकत्वदर्शनम् , इत्यादिषु द्रष्टव्यम्** इति।[3] (ना.शाऽन.भा. पृ. 692)।

इदं च सूत्रप्रायम् , तेनैव आचार्यैः अनेके वादाः समुद्भाविताः। तथा हि- तत्र अभिनवगुप्तमते प्रत्यभिज्ञादर्शनं, नव्यमते एकत्वदर्शनम् , भट्टनायकमते साङ्ख्यदर्शनस्य सत्कार्यवादः, आनन्दवर्धनस्य ध्वनितत्त्वे स्फोटतत्त्वं, भट्टलोल्लटस्य मते कतिपयेषां बहूनां च मतयोः रसपदव्यवहारः इत्यनेन आरोपः इत्यनेन च द्विधाभिधानं, विश्वनाथस्य मते विज्ञानवादः प्रस्फुटतया लक्ष्यन्ते।

जगन्नाथेन प्रतिपादितेषु एकादशसु रसवादेषु अभिव्यक्तिः प्रत्यभिज्ञादर्शनानुसरिणी, भुक्तिवादः साख्यदर्शनानुसारी, अनुमितिवादः न्यायदर्शनानुसारी, उत्पत्तिवादः मीमांसादर्शनानुसारी, इति च निस्सन्दिग्धम्। निर्विवादेऽस्मिन् विषये विस्तारः जामितां जानयेत्। अत्र विद्वांस एव प्रमाणम्। तदितरवादेषु यथासंभवं किञ्चित्प्रस्तूयते-

जगन्नाथदर्शिते अन्तिमे पञ्चके भरतव्याख्यानसरणिरेवालम् -

**लोकस्वभावसंसिद्धा लोकयात्रानुगामिनः।**
**अनुभावविभावाश्च ज्ञेया अभिनये बुधैः।।**[4] ना.शा. 7-6
**योऽयं स्वभावो लोकस्य सुखदुःखसमन्वितः।**
**सोऽङ्गाद्यभिनयोपेतः नाट्यमित्यभिधीयते।।**[5] ना.शा.119

इति भरतमुनिकारिकयोः पर्यालोचनेन काव्यानुभूतिः सर्वथा लौकिकी एव। अत एव पानकरसन्यायेन आस्वाद्यमानः रसोऽयं लौकिकः इति सिद्ध्यति।

भोजमतानुसरं **''कीर्तिं प्रीतिं च विन्दति''** इति कथनेन रसास्वादः लौकिक एव।

महिमभट्टः वस्तुवादी आचार्यः। स रसस्य ब्रह्मास्वादसहोदरतां सर्वथा खण्डयति। स रसः सुखास्वाद एव इति मनुते। लोकात् काव्यस्य भेद एव नास्तीति कथयन् रसानुभूतिः

जीवनस्य एका विशिष्टा अवस्था इति उल्लिखति। किमियं राजाज्ञा काव्यरसास्वादः लोके न भवति? इति पृच्छति। एतत्सर्वमपि द्विधाभिधाने परिगण्यते।

विश्वनाथोऽपि–

**स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः** इति (सा.द.3-3) कथयन् विज्ञानवादं स्पृशति।

यथा क्षणिकविज्ञानवादी बौद्धः घटादिविज्ञानमेव आत्मानं मनुते तथैव विज्ञानरूपात्मना अभिन्नो रसः प्रतीयते इति उपापादि तेन। एवमेतेषां वादानां परिशीलनेन पूर्वोक्तायाः अभिनवगुप्तस्य पङ्क्तेः अनुसन्धानेन च तत् तत्त्वमेव परिस्फुरति।

अत्र रसानुभूतिः लौकिकी अलौकिकी वा भवतु, सर्वैरपि रसः अनुभूयते। स मीमांसको वा वेदान्ती वा नैयायिको वा सांख्यो वा बौद्धो वा चार्वाको वा भवतु। तत्तद्दर्शनेषु रसानुभूतिप्रक्रियाविषये किञ्चिदत्र प्रस्तूयते–

पूर्वोक्तमभिनवगुप्तीयं वचनं सूक्ष्मदृष्ट्या वयं परिशीलयामः तर्हि इदम् अवश्यमेव प्रतिभाति। यथा विविधदार्शनिकप्रक्रियासमन्वयं रसवादेषु अनुजानाति अभिनवगुप्ताचार्यः।

**"तथापि वयं तु प्रकृतानुपयोगिश्रुतलवसन्दर्शनमिथ्याप्रयाससंश्रयमशिक्षितपूर्विण इत्यास्ताम् " ( अभि.भा. 692 )** इति कथयता उत्पत्त्यनुमितिभुक्त्यभिव्यक्तिवादानेव प्रस्तूय विरम्यते अभिनगुप्तेन।

अत एव सति उपयोगे बौद्धानां विज्ञानवादस्य, द्वैतिनाम् अनुभोक्त्रनुभावकानुभवत्रिपुटि-भेदप्रक्रियायां द्विधाभिधानस्य, प्राचीनानां वैयाकरणानां व्यङ्ग्य-व्यञ्जनप्रक्रियायां स्फोटतत्त्वस्य, सांख्यानां परिणामवादे सत्कार्यवादस्य तथा अद्वैतवादिनां रसानन्दाद्वैतवादे एकत्वदर्शनस्य च विषयभेदेन तान् स्वीकृत्य तत्तद्भेदाः ग्रन्थविस्तरभयात् न प्रत्यपादिषत अभिनवगुप्तेन। अत एव तेन कथितः –

**ऊर्ध्वोर्ध्वमारुह्य यथार्थतत्त्वं धीः पश्यति श्रान्तिमवेदयन्ती।**
**फलं तदाद्यैः परिकल्पितानां विवेकसोपानपरम्पराणाम्।।**

इति अभिनवरसनिरूपणश्लोकः अत्र विशेषतया उल्लेखनीयः। तदत्र अभिनवरसविमर्शः संक्षेपेण निरूप्यते।

तत्र दर्शनेषु आस्तिकदर्शनेषु प्रथम्

**पूर्वमीमांसादर्शने रसानुभवप्रक्रिया–**

कुमारिलमते प्रभाकरमते च मनः अणुरूपं भवति। आत्मनो यः सुखानुभवः सः आत्ममनस्संयोगादेव भवति। अस्मिन् मते रसानन्दस्य सुखरूपत्वम् अङ्गीकर्तव्यम्। तथा सति ऐहिकसुख-स्वर्गसुख-मोक्षसुखेषु त्रिषु रसानन्दः कुत्र अन्तर्भाव्यः? इति चेत् ऐहिककाव्यनाट्याद्युपनिबद्धविषयानुभवजन्यसुखविशेषत्वेन ऐहिकसुखे अन्तर्भाव्यः। सुखस्य ज्ञानरूपत्वात् बुद्धित्वमेवेति चेत् न, बुद्धिसुखयोः विविक्तत्वमेव मीमांसकैरभिप्रेतम्।

सुखमपि सुखान्तरवत् मानसप्रत्यक्षगम्यम्। तथा च पार्थसारथिमिश्राः शास्त्रदीपिकायां कथयन्ति–

गीतिश्रवणप्रियालिङ्गनचन्द्रदर्शनमधुरास्वादसुरभिघ्राणादिजन्यानन्दसुखशब्दाभिघातेन च एवंरूपत्वं मनः अस्ति। यथा ह्यन्यसुखेषु सुखरूपं प्रत्यभिज्ञायते। नैवमात्मनि प्रत्यभिजानीमो येन आनन्दस्य अभिधेयः स्यात्। किंच काव्यनाट्यानुभूयमानस्य सुखभोगरूपत्वात् सुखदुःखभोगस्यैव संसारत्वेन तदन्तर्गतत्वात् भोगान्तरविलक्षणस्वभावत्वात् अलौकिकप्रथेति मन्तव्यम्।

**वेदान्तदर्शने रसानुभूतिप्रक्रिया–**

वेदान्तदर्शनं नाम एकत्वदर्शनम्। अस्मिन् दर्शने ब्रह्मैव रसः इति तदेकदेशिनां वेदान्तिनां पक्षः। तेषु मूर्धन्याः श्रीवत्सलाञ्छनः, जगन्नाथ इत्यादयः। तैः अद्वैतदर्शनानुसारं रसानुभूतिप्रकारः निरूपितः। रसानुभवे वेदान्तदशर्नानुसारिणी रीतिः नव्यपथमुपदर्शयति।

इयं स्वबुद्धिपरिकल्पिता। इदं मतं मायावादिसम्मतम्। तदनुसारम् अनिर्वचनीयख्यातिरूपा हि रत्यादिप्रतीतिः इति कथयता जगन्नाथेन एवमुपापादि। काव्यनाट्ययोः कविनटप्रकाशितेषु विभावादिषु व्यञ्जनाव्यापारेण दुष्यन्तादिनिष्ठत्वेन शकुन्तलादिरतिः गृह्यते। सामाजिके सहृदयतावशात् भावनाख्यः कश्चन दोषविशेषः समुल्लसति। तस्य महिम्ना सामाजिकः कल्पितदुष्यन्तत्वाच्छादितो भवति। तादृशे तस्मिन् शुक्तिशकले रजतखण्ड इव अनिर्वचनीयः साक्षिभास्यः शकुन्तलादिविषयकरत्यादिः समुत्पद्यते स व रसः।

अस्य मतस्य अयमभिप्रायः – योगिनाम् इव सहृदयकाव्यनाट्याभिनिविष्टसामाजिकानां च अयमास्वादो भवति। मानसिकावस्थासंवादः अत्र। योगिनां किल यदा योगाभ्यासवशतः निरुद्धबाह्यविषये मनसि स्वप्रकाशाखण्डानन्दाकारपरब्रह्मपरिस्फूर्तिः जायते तथा काव्यनाट्यानुशीलनवशादपि निरुद्धेतरे मनसि गुरूपदेशाद्ब्रह्मात्मकः एव रसः परिस्फुरति। योगिनां च ब्रह्मसाक्षात्कारे गुरूपदेशः निदानं, सहृदयानां तु कवीनां विभावादिवर्णनमेव कारणम्। बहिश्शरीरं व्याप्य च ब्रह्मसाक्षात्कारसमानशीर्षो रसः। इयानेव भेदः यत् ब्रह्मानन्दसाक्षात्कारः शरीरं विश्वं च व्याप्य परिस्फुरति, रसस्तु नाट्याद्यभिनयपर्यन्तमेव स्फुरति। ब्रह्मैव रस इति बहवः प्रवदन्ति।

**द्वैतदर्शनानुसारं रसानुभूतिः –**

द्वैतिभिः इन्द्रियातिरिक्ततया आत्ममनसोः साक्षात्कर्तृतया कश्चन साक्षी अभ्युपगम्यते। अयं साक्षी घटादीन् विषयान् ज्ञानद्वारेण परम्परया साक्षात्करोति। पुनः साक्षादेव आत्मानं साक्षात्करोति। तथा च साक्षी अहम् इति वेद्यते। आत्मा कदापि न मनोविषयः, तथा सति आत्मविषये संशयविपर्ययौ स्याताम्। तथा चोक्तम् अनुव्याख्याने–

**''साक्षात्सिद्धे त्वसंशयात् साक्षिसिद्धस्य न कदापि बाध्यत्वं तददोषतः''**

ततः एवं सर्वेन्द्रियजन्यानां विषयाणां तदभ्युपगतसाक्षिवेद्यत्वं सिद्धम् , तेन काव्यनाट्यानुशीलनावबुद्धविभावादिरससामग्र्यापि मनोद्वारा साक्षिवेद्यतया तदनु जायमानसुखविशेषरूपरसानन्दोऽपि तदभ्युपगतः साक्षिवेद्य एव। ननु शुक्तिरजतादिप्रामाण्यं न साक्षिवेद्यत्वं तर्हि काव्यनाट्यादौ कृत्रिमत्वेन साक्षिवेद्यत्वं कथमिति प्रश्ने चतुर्विधाभिनयप्रकाराणां

नाट्यङ्गानां लोकसिद्धानामेव अभिनयादौ अनुकार्यत्वेन भ्रान्तिकल्पनं न भवति। अथवा तेषां मनोवेद्यत्वमव्याहतमेव। तथाचोक्तमनुव्याख्याने

**''यदि क्वचित् व्यभिचारी स्यात् दर्शनं मानसं हि तत् ''**

इति द्विधाभिधानं व्याख्यातम्।

**विशिष्टाद्वैतदर्शने रसानुभूतिः –**

अस्मिन् दर्शने घण्टावतारैः वेदान्तदेशिकैः न्यायसिद्धाञ्जनग्रन्थे स्थायिभावानां ज्ञानपरकत्वं संसाध्य रसवादपरामर्शः मनाक्कृतः। भगवद्रामानुजैः **प्रीतिः ज्ञानम्** इत्युक्त्वा चित्तवृत्तिधर्मत्वेन रसवादानुयायिनां मतानुसारं प्रेमादीनां ज्ञानत्वमेव आस्थितम्। प्रीतिश्च ज्ञानविशेष एव।

**ननु च सुखं प्रीतिः नार्थान्तरम् , सुखं च ज्ञानविशेषसाध्यं पदार्थान्तरम् इति लौकिकाः इत्युक्त्वा तन्निराकरणेन – ''नैवं, येन ज्ञानविशेषेण तत्साध्यमित्युच्यते स एव ज्ञानविशेषसुखं तज्ज्ञानमेव सुखम्।**

इति प्रीत्यादिजनकविषयज्ञानस्यैव प्रीत्यात्मकत्वम् इति साधितम्।

देशिकैरपि बुद्धिरेव उपाधिभेदात् सुखदुःखेच्छाद्वेषप्रयत्नरूपा। सुखादिजनकतया अभ्युपगतज्ञानातिरेके प्रमाणाभावात् इच्छामि, द्वेष्मि इत्यादिव्यवहारस्य स्मरामीत्यादिवत् ज्ञानविशेषेणैव उपपत्तेः। तथा च न्यायसिद्धाञ्जने पञ्चमे बुद्धिपरिच्छेदे–

**ग्लान्यादयस्तु शरीरावस्थाविशेषाः स्वप्नशब्दस्यापि स्वप्नदर्शनाद्यभिप्रायत्वे बुद्धिविशेषविषयत्वं व्यक्तम्।[7] ( न्या.सि–पृ. 587 )**

**पूर्वस्तीव्रस्तु कामः पर इह भजते तादृशः क्रोधसंज्ञाम्।** इत्यादिवचनैः सुखादीनां ज्ञानरूपत्वे सिद्धे काव्यनाटाकाद्युपनिबद्धविभावादिसंवलितसुखविशेषोऽपि रसपदवाच्यो भवति। अयं च आत्मधर्मः। स चायं लौकिकविषयालम्बनात् लौकिकसुखविशेषः न ब्रह्मानन्दपदवीमधिरोहति।

**नैयायिकवैशेषिकदर्शनमते रसानुभूतिः –**

अनयोः दर्शनयोः

**आत्मा मनसा संयुज्यते मन इन्द्रियेण।**
**इद्रियमर्थेन ततः प्रत्यक्षमुत्पद्यते।।** इति

आत्ममनोयोगघटितायाः विषयसामग्र्याः बलेन काव्यनाटकानुशीलनवशात् शब्दार्थपर्यालोचनतः "अहं सुखी" इति अनुभवसाक्षिकः रत्यादिविषयसंवलनात् विषयज्ञानात् जायते कश्चन विलक्षणः सुखविशेषः ज्ञानरूपः एव आत्मनि।

अत एव श्रीशङ्कुकमते अनुमितिः कल्प्यते। तेन अनुमानेन जायमानं सुखमेव रसः। बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्माणामष्टगुणानामात्मधर्मत्वं नैयायिकैः वैशेषिकैश्च अभ्युपगतम्।

अत्र सुखस्य अनुभवप्रक्रिया प्रशस्तपादभाष्ये या दर्शिता सा रसानुभवेऽपि योजनीया। तत्रोक्तम् –

**अनुग्रहलक्षणं सुखं स्त्रगाद्यभिप्रेतविषयसान्निध्ये सति इष्टापन्नधीन्द्रियार्थसन्निकर्षात् आत्ममनसोः संयोगात् अनुग्रहाभिष्वङ्गनयनादि रसादिजनकमुत्पद्यते। तत्सुखमिति**

**काव्यनाटकादिषु उपनिबद्धानां विषयाणामतीतत्वेऽपि। शब्दप्रतिपाद्यानां तेषामेव विभावादीनां सुखप्रयोजकत्वमक्षतमेव।**

एवमत्र रसानन्दात्मकसुखविशेषस्य मानसिकसाक्षात्काररूपत्वं, परगतसुखस्य तु नयनविकासमुखप्रसादादिना पर्यवस्यति।

**सांख्यदर्शनानुसारं रसानुभूतिप्रक्रिया-**

अत्र रसानुभवे अन्तःकरणप्रतिबिम्बितपुरुषसम्बद्धोऽभिमानात्मकः अहंकारमूलः **"अहं सुखी"** इत्यनुभवसाक्षिकः अन्तःकरणपरिणामरूप एव। अयं च सत्त्वोद्रेकमूलः।

सत्त्वोद्रेकमूलतया मनसोऽवस्थाने विभावादिसंवलितरत्यादिविषयकधारा-वाहिकानन्दप्रचुरान्तःकरणपरिणामे भोगरूपसाक्षात्कारात्मको रसपदवाच्यः।

**योगदर्शने रसानुभूतिप्रक्रिया-**

इदं दर्शनम् अनागतं दुःखमपाकरोति। तथा च सूत्रम् –

**"हेयं दुःखमनागतम् "।**

साहित्यदर्शनं तु वर्तमानं दुःखमपाकरोति। एतद्द्वयमपि परस्परपूरकम्। तथाचोक्तं भरतेन-

**दुःखार्तानां श्रमार्तानां शोकार्तानां तपस्विनाम्।**
**विश्रान्तिजननं काले नाट्यमेतद्भविष्यति।।**

अत्र चित्तस्य पञ्चवृत्तयः प्रतिपादिताः तासु एकाग्रा वृत्तिरन्यतमा। एकाग्रं मनः चतुरः विषयाननुगच्छति। वितर्कविचारान्दास्मिताः। तत्र काव्यनाटकोपनिविष्टविभावादयः सहृदयहृदयं प्रविष्टाः विभावादिसंवलितरत्यादिसाक्षात्कारजन्यमानन्दं जनयन्ति ते। सामाजिकः तमेव रसमनुभवति। इयमवस्था एव सद्यः परनिर्वृतिः इति कथ्यते। अतएव विश्वनाथः कथयतिः **पुण्यवन्तः प्रमिण्वन्ति योगिवद्रसन्ततिम्। इति।**

एवमास्तिकदर्शनेषु रसानुभूतिप्रक्रियां संक्षेपेण निरूप्य नास्तिकदर्शनेषु रसास्वादप्रक्रिया निरूप्यते।

**चार्वाकदर्शने रसानुभूतिप्रक्रिया-**

चार्वाकाः शरीरमेव आत्मानं मन्वते। तेषामन्यत्सुखं शारीरिकसुखात् नातिक्राम्यति। अतएव स्रक्चन्दनानुलेपनादिजन्यविशेषवत् काव्यरसास्वादोऽपि आध्यात्मिकसुखविशेष एव नान्यः। तदुक्तं श्रीवत्सलाञ्छनभट्टाचार्येण काव्यामृतग्रन्थे-

**एतदपेक्षया कामिनीकुचमण्डलस्पर्शे चन्दनानुलेपनादिना इव नाट्यदर्शनात् सुखविशेषो जायते। स एव रसः इत्येवं वक्तुमुचितम्।** अयमेव वादः सिद्धचन्द्रगणिना अपि काव्यप्रकाशस्य खण्डनात्मके ग्रन्थे न्यरूपि।

**बौद्धदर्शने रसानुभूतिप्रक्रिया-**

अत्र तावत्

**चित्तं चैत्तमिति द्वेधा चित्तं विज्ञानसन्ततिः।**
**रागद्वेषादिकं चैत्तं तन्मिथ्येत्यपरे विदुः।।**

इत्युक्तप्रकारेण साहित्यशास्त्रनिरूपितानां चित्तवृत्तिधर्माणामपि चैत्तत्वाविशेषात् मिथ्यात्वमेवेति काव्यनाटकप्रतिपादिततत्तच्चित्तवृत्त्यनुभवजन्यस्य का वार्ता मिथ्यार्थतायाम्।

एवं चैत्तविशेषाणां रागद्वेषादीनामपि प्रेमरागद्वेषादीनामिव प्रेमभयशोकादीनमपि मिथ्यात्वे तच्चर्वणाजन्यरसानन्दस्य अपि मिथ्यात्वमेव। अभिनवगुप्तेनापि रसानुभवस्य मिथ्यात्वनिराकरणादेव अयं वादः निरस्तः रसानुभवविरुद्धत्वात्। किन्तु विद्यते एव।

तच्चोक्तं तत्त्वमुक्ताकलापे रागद्वेषादिमिथ्यात्वभङ्गवादे–

**चित्तं स्तोत्रस्मृतीनां चिदवधिकतया चैत्तसङ्केतभाजाम्**
**रागद्वेषादिकानामभिदधतु कथं भावमस्थेमभावाः।**
**एतेषां हेतुसाध्यक्रमनियतिमतां सर्वचित्तसाक्षिकाणां**
**कथ्येताथ्यभावे कथमिव कथकद्वन्द्वयुद्धावतारः।।** त.मु.क. 69 इति।

एवं दर्शनान्तररसानुभूतिप्रक्रियाः अत्र संक्षेपेण प्रतिपाद्य अभिनवरसानामपि विषये स्थालीपुलाकन्यायेन यथामति प्रस्तूयते–

**अभिनवरसनिरूपणम् –**

भरतमतानुसारं रसाः अष्टौ एव भवन्ति। तथापि आनन्दवर्धनाचार्यः शान्तरसमपि नवमं नवं रसं स्थापितवान्, तस्य व्याख्यानमपि कृतमभिवगुप्तेन। ततः स्थायिभावमपि निर्दिश्य मम्मटाचार्यः **''निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः''** इति नवमं रसं स्थापयामास। इतरेऽपि शान्तरसप्रतिष्ठापने महतः प्रयासानकार्षुः। केचित् तस्य खण्डने तत्पराः।

**वत्सलरसः–**

नवमरससंस्थापनेन लब्धोत्साहः विश्वनाथः दशमं वत्सलरसं दर्शयित्वा मुनीन्द्रसम्म्मतिमपि कथयति–

मुनीन्द्रसम्मतो वत्सलः इति अवतरणिकां कृत्वा तृतीये परिच्छेदे–

**स्फुटं चमत्कारितया वत्सलं च रसं विदुः।**
**स्थायी वत्सलतास्नेहः पुत्राद्यालंबनं मतम्।।**
**उद्दीपनानि तच्चेष्टाः विद्याशौर्यदयादयः।**
**आलिङ्गनाङ्गसंस्पर्शशिरश्चुम्बनमीक्षणम्।।**
**पुलकानन्दवाष्पाद्याः अनुभावाः प्रकीर्तिताः।**
**संचारिणोऽनिष्टशङ्काहर्षगर्वादयो मताः।।**
**पद्मगर्भच्छविर्वर्णो दैवतं लोकमातरः।** इति।

उदाहृतं च रघुवंशीयं पद्यम् –

**यदाह धात्री प्रथमोदितं वचः तया तदीयामवलम्ब्य चाङ्गुलिम्।**
**अभूच्च नम्रः प्रणिपातशिक्षया पितुर्मुदं तेन ततान सोऽर्भकः।।** इति

**भक्तिरसः –**

तदनु तस्यामेव परम्परायां रूपगोस्वामी उज्ज्वलनीलमणौ, भक्तिरसामृतसिन्धौ च भक्तिरसं

मधुररसं वा संस्थाप्य तत्प्रधानतया विदग्धमाधवं ललितमाधवं च प्रणिनाय।

**पाण्डित्यसत्यक्षमाबलवीराः-**

ततः जगन्नाथः अपि रसगङ्गाधरे शृङ्गारस्येव वीरस्यापि नैके रसाः समुद्भाविताः यथा पाण्डित्यवीरः, सत्यवीरः, क्षमावीरः, बलवीरः इति। पाण्डित्यवीरान् इत्यादीन् उद्भाव्य उदाहरणान्यपि प्रादात्।

**अर्वाचीनरसाः-**

अर्वाचीने संस्कृतसाहित्ये रसप्रधाना नैके काव्यविशेषाः निर्मीयन्ते यत्र च राष्ट्रभक्तिः प्रधानतया लक्ष्यते यथा सार्वभौमसंस्थाप्रतिष्ठापकानां वासुदेवद्विवेदिनाम् -

**सादरं समीहताम् वन्दना विधीयताम्** इत्यादिषु गीतेषु।

**क्रीडारसः-**

एवं क्रीडाविषयेऽपि यदि कश्चन कविः काव्यं लिखति तत्र को वा रसः भवति इति विचिकित्सायां कालिदास एव लिखति सः क्रीडारसः इति यथा-

**मन्दाकिनीसैकतवेदिकाभिः सा कन्दुकैः कृत्रिमपुत्रकैश्च।**
**रेमे मुहुर्मध्यगता सखीनां क्रीडारसं निर्विशतीव बाल्ये।।**

अत्र क्रीडारसशब्देन सह निर्विशतीति शब्दः प्रयुक्तः निर्वेशशब्दस्य भोगः इति अर्थोऽपि वर्तते। "**निर्वेशो भृतिभोगयोः इत्यमरः**" (अ.को.3- नानार्थवर्गः) योऽयं भोगार्थकः निर्वेशशब्दः भट्टनायकस्य भुक्तिवादं स्मारयति। ततः च क्रीडारसोऽपि कविकुलगुरुसम्मतः इति अङ्गीकार्यम्।

तस्य स्थायी भावः कः इति चेत् क्रीडारतिः इत्यवगम्यते। अत एव कालिदासेन रेमे इति रमु क्रीडायामिति धातोः रूपं प्रायोजि। अयं च स्त्रीपुरुषालम्बनकचित्तवृत्तेः रतिस्थायिभावात् भिन्न एव।

तथाच साक्षात्परब्रह्मस्वरूपिणः रसस्य आनन्त्यात् अनेके रसाः विभावनीया इति निवेद्य व्यरंसिषम् इति शम्।

**संदर्भा :-**

1. उत्तररामचरितम् - 1/36
2. दशरूपक - च.प्र.
3. अभिनव भारती पृ.692
4. नाट्यशास्त्रम् - 7/6
5. ना.शा. -1/9
6. अभि. मा. 692
7. न्याय सिद्धाञ्जने 692 पृ.587
8. तत्त्वमुक्ताकलापे - 69



# संस्कृतजैनपुराणसाहित्यस्य वैशिष्ट्यम्

- प्रो. गङ्गाधरपण्डा

*(प्रस्तुत गवेषणात्मक निबन्ध में संस्कृत जैन पुराणसाहित्य का वैशिष्ट्य एवं महत्व पर विस्तार से प्रकाश डाला गया है। संस्कृतपुराणवाङ्मय में अठारह महापुराणों के साथ उप और औपपुराणों का उल्लेख मिलता है किन्तु श्रवण परम्परा में जैनपुराणवाङ्मय में ऐसा नहीं है। वहाँ उपपुराणों का उल्लेख नहीं प्राप्त होता हैं। जैनसंस्कृत पुराणों के अध्ययन के बिना भारतीय इतिहास एवं संस्कति का ज्ञान अपूर्ण रह जाता है। इस निबन्ध में जिनसेन प्रणीत आदिपुराण, गुणभद्र विरचित उत्तरपुराण, अपरजिनसेन रचित हरिवंश पुराण, रविषेणाचार्य विरचित मर्यादापुरुषोत्तम रामचरित प्रतिपादक पद्मपुराण का और असगनामक कवि द्वारा शान्तिनाथ का पुराण परिचय साङ्गोपाङ्ग प्राप्त होता है। जैनपुराणों में विविध आख्यानोपाख्यान-गाथा भी संस्कृत पुराणों की तरह ही उपलब्ध है। इस तरह संस्कृत एवं जैनपुराणों का उपादान प्राय: अपनी परम्परानुरूप सामान्यतया समानता रखते हैं ऐसा इस लेख का निष्कर्ष है।)*

भारतीयपरम्परायां विद्याया धाराद्वयं सुरधुनिवत्प्रवहति। एका धारा वैदिकपरम्परा अपरा च श्रमणपरम्परा। वैदिकपरम्परायां चतुर्दशविद्यास्थानानि।

अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः।
धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश।।

अस्मात् चतुर्दशविद्यासु वेदानामुपवृंहकत्वेन पुराणानां महत्त्वं सुस्पष्टं भाति। एतत्पुराणवाङ्मयं स्वकलेवरमेधमानं महा-उप-औप-उपौपपुराणनाम्ना प्रत्येकम् अष्टादशधा शोभते। सूत्रात्मकं पद्यमिदं महापुराणानां नामानि सूचयति।

मद्वयं भद्वयं चैव ब्रत्रयं वचतुष्टयम्।
अनापलिंगकूस्कानि पुराणानि प्रचक्षते[1]।।

मद्वयेन मत्स्यं मार्कण्डेयं, भद्वयेन भविष्यं भागवतं, ब्रत्रयेण ब्रह्म ब्रह्माण्डं ब्रह्मवैवर्त्तं, वचतुष्टयेन वायुं वामनं वराहं विष्णुं, च ज्ञायन्ते। अवर्णात् स्कपर्यन्तं अग्निनारदलिङ्गगरुड-कूर्मस्कन्दपुराणानि सन्ति। आहत्य संख्या भवति अष्टादश। पुराणेन साकमितिहासोऽविनाभावेन सम्बद्धः। द्वयोर्मध्ये भेदं दर्शयितुमालङ्कारिको राजशेखरो ब्रूते-

परिक्रिया पुराकल्प इतिहासगतिर्द्विधा।
स्यादेकनायका पूर्वा द्वितीया बहुनायका[2]।।

अनेन पद्येन एकनायकप्रधानमार्षकाव्यं रामायणं परिक्रिया, बहुनायकप्रधानमार्षकाव्यं महाभारतं च पुराकल्पम्। अस्माज्ज्ञायते यत् पुराणेभ्य आर्षकाव्यद्वयमधिकमितिवृत्तं व्यनक्ति। वैदिकपरम्परानुरूपं श्रमणपरम्परायां पुराणवाङ्मयं वैपुल्येन लभ्यते। भारतस्य य इतिहासः स च जैनसंस्कृतपुराणेषु वास्तविकतां धत्ते। तत्र यद् वर्णितं तत्प्रमाणयितुमपि जैनपुराणे साक्ष्यं प्रभूतं लभते। संस्कृतपुराणानां यत्सामान्यलक्षणं तदैव जैनपुराणानाम्। तद्यथा-

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितं चैव पुराणं पञ्चलक्षणम्[3]।।

यथा संस्कृतपुराणे उपपुराणादीनि लभ्यन्ते तथा नास्ति जैनसंस्कृतपुराणेषु। जैनसंस्कृतपुराणानामध्ययनं विना भारतीयसंस्कृतेः तत्कालीनेतिहासस्य ज्ञानं नितरामपूर्णम्। जैनपुराणेषु न केवलं तीर्थङ्कराणामपि तु चक्रवर्तीनां नारायणानां प्रतिनारायणानां शलाकापुरुषाणां च वर्णनपुरः सरं तेषामितिहासो लभ्यते। अत एव जैनसंस्कृतपुराणानां वैशिष्ट्यं संस्कृतसाहित्यस्य कलेवरविवर्धनाय पुराणेतिहाससाहित्यिकदृष्ट्या चैतेषां महत्त्वं विज्ञापयितुं शोधपत्रेऽस्मिन् यत्नो विधीयते।

## आदिपुराणम्

नवमशताब्द्यां लब्धजन्मा जिनसेनः प्रथमतीर्थङ्करम् ऋषभदेवं तत्कलावतंसं भरतचरितञ्चाधिकृत्य भारतीयसंस्कृतिमितिहासं च मण्डयन् लिखितञ्चकारेदं जैनसंस्कृतपुराणरत्नं यत्खलु श्रवणपरम्परायामादिपुराणनाम्ना प्रथितम्। इदं पुराणं महाकाव्यत्वेनापि गणयितुं शक्यते यत्र धर्मशास्त्रं राजनीतिशास्त्रं सिद्धान्तशास्त्रं च भृशं प्रतिपादितमस्ति।

महापुराणनाम्ना सङ्कल्पितमिदं काव्यं जिनसेनस्य जीवनावधौ न समाप्तम् , तदनु तच्छिष्येण गुणभद्रेण उत्तरपुराणनाम्ना एतत्पूरितम्। अतो विद्वांसः प्रथममादिपुराणं पूर्वपुराणत्वेन द्वितीयं च उत्तरपुराणपदेन व्यपदिशन्ति।

## कथावस्तु

नायकस्तीर्थङ्कर आदिनाथस्त्रिषष्टिशलाकापुरुषरूपेण वर्णितः, यस्मिन् 24 तीर्थङ्कराः, 12 चक्रवर्तिनः, 9 नारायणाः, 9 बलभद्राः, 9 प्रतिनारायणाः विराजिताः सन्तः 63 शलाकापुरुषत्वं सार्थकयन्ति। आदावेव धरित्री भोगभूमिरासीत्। यदा भोगभूमितः कर्मभूमिः संजाता, तत्सन्धिकाले जनिरभूद् ऋषभदेवस्य प्रथमतीर्थङ्करस्य। कुलकरमनुर्नाभिराजोऽयोध्यां शशास यस्य धर्मपत्नी मरुदेवीगर्भोत्पन्नः ऋषभः। आजन्म असौ प्रतिभावान् धार्मिकश्चासीत्। तस्मिन् दुर्भिक्षपीडितान् जनान् ऋषभो धर्ममुपदिदेश यस्मिन् षट्कर्म प्रमुखमासीत्। तच्च असि-मषी-कृषि-विद्या-वाणिज्यं शिल्पं च।

पितुः नाभिराजस्याग्रहेणासौ कच्छनरेशस्य भगिनीं यशस्वतीं महाकच्छनरेशस्य भगिनीं सुनन्दां चोपयेमे। यशस्वत्यामसौ भरतप्रमुखान् शतपुत्रान् ब्राह्मीं नामिकां कन्यां, सुनन्दायां च बाहुबलिनं शक्तिशालिनं पुत्रं सुन्दरीनामिकां च कन्यां जनयामास। धर्मशास्त्रवर्णितायां

गृहस्थाश्रमव्यवस्थायां स्थित्वा प्रव्रज्यानन्तरमसौ कैवल्यमाससाद। कैवल्यमासाद्य जनान् मोक्षस्योपदेशप्रदानपूर्वकं कैलासे महानिर्वाणं लेभे।

### उत्तरपुराणम्

आदिपुराणस्य पूरकमुत्तरपुराणं गुणभद्रो रचयामास। अस्मिन् द्वितीयतीर्थङ्करात् श्री अजित नाथादारभ्य महावीरं यावत् त्रयोविंशतितीर्थङ्कराणां जीवनचरितमुपदेशं च वर्णितमस्ति। भरतं विहाय एकादशचक्रवर्तीनां बलभद्र–नारायण–प्रतिनारायणानामपूर्वं चरित्रचित्रणं कृतं वर्तते। ग्रन्थस्यारम्भे गुणभद्रः स्वगुरुं जिनसेनं भक्तिपूर्वकं स्तौति। नात्र केवलं तीर्थङ्कराणां चक्रवर्तिनामितिहासः बिरुदावली कीर्तिश्च वर्णिताः, परन्तु साहित्यिकदृष्ट्या छन्दोऽलङ्काराणां चमत्कारो दर्शितः।

ऐतिहासिकानां मतानुसारेणास्य रचना कर्णाटकराज्ये धारवाडसमीपेऽभूत्। समयः शकसंवत् 819। ज्यौतिषस्य उत्सर्पिणी–अवसर्पिणी–कालोऽप्यत्र विशदेन वर्णितः। आत्मानुशासनं जिनदत्तचरितमिति काव्यद्वयमस्य कवेः कृती।

### हरिवंशपुराणम्

आदिपुराणस्य कर्तुः जिनसेनाद् भिन्नोऽपरः कश्चन जिनसेनो हरिवंशपुराणस्य रचयिता। ग्रन्थोऽयं दिगम्बरसम्प्रदायस्य साहित्यं पुष्णाति। जैनपरम्परायामिदं पुराणं कथासाहित्यरूपेण तृतीयस्थानं भजते। प्रथमं रविषेणाचार्यस्य पद्मपुराणं द्वितीयं च जटासिंहनन्दिमहोदयस्य वरांगचरितं ख्यातमासीत्।

जिनसेनः पुन्नाटसंघस्याचार्यत्वेन प्रसिद्धः। पुन्नाटः कर्णाटकस्य प्राचीननाम। अतो जैनमुनीनां संघः पुन्नाटः। गुरुश्चास्य कीर्त्तिषेणः परमगुरुश्च जिनसेनः। गृहत्यागिसंन्यासिनां वंशपरिचयः प्रायो न लभ्यते। तथैव जिनसेनस्य पितृमातृवंशबाल्यजीवनवृत्तानामुल्लेख इदानीं न लब्धः।

### रचनास्थानं कालश्च

अस्य पुराणस्य रचना वर्धमानपुरे सूत्रिता समाप्तिश्च दोस्तटिकायां शान्तिनाथजिनालये अभूत्। वर्धमानपुरं सौराष्ट्रस्य वडवाणम् , दोस्ताडिका गिरिनगरस्य समीपवर्तिस्थानं 'दोत्ताडि' इति विद्वांस आमनन्ति। अन्तः साक्ष्यरूपेणेदं पुराणं 705 शकाब्दे लिखितमासीदिति पुराणेऽस्मिन् षट्षष्ठितमे सर्गे द्वि–त्रिपञ्चाशत्श्लोकयोः सूचितम्।

### स्रोतांसि

यथा सेनसंघीयजिनसेनस्य महापुराणस्य आधारः परमेष्ठिकवेः वागर्थसंग्रहः तथैव विदुषां मतेन तस्य गुरोः कीर्तिषेणस्य मुखात् अविच्छिन्नपरम्परा प्राप्ता। तदनु रविषेणस्य पद्मपुराणं सम्यगालोडितम्। यथा पद्मपुराणे वृत्तानां प्रयोगस्तथैव हरिवंशे 49 अध्याये जिनेन्द्रस्य स्तवने तादृशप्रयोगो दरीदृश्यते। पुनश्च हरिवंशस्य लोकविभागः शलाकापुरुषाणां वर्णनं यतिवृषभाचार्यस्य तिलोयपण्णत्तीकाव्येन सह सामञ्जस्यमस्तीति भाति। द्वादशांगानां वर्णनं तत्त्वार्थवार्तिकानुरूपम। अत्र सङ्गीतशास्त्रस्य वर्णनं भरतस्य नाट्यशास्त्रानुमोदितम्। तत्त्वानां वर्णनं तत्त्वार्थसूत्रसर्वार्थ–

सिद्धिग्रन्थयोरनुकूलम्। एतदनुशीलनेन ज्ञायते यज् जिनसेनः पूर्वसूरिविरचितानेककृतीनामाधारेण ग्रन्थममुं विरचितवान् , परन्तु क्रमविधानं समवसरणं जिनेन्द्रविहारश्चास्य स्वकल्पनाविलासः।

**कथावस्तु**

सनातनपरम्परायां हरिवंशपुराणं महाभारतस्य खिलभागो यत्र कृष्णस्य वंशानुचरितं तस्य लीला सलीलतया वर्णिता। अन्ते च हरिवंशस्य श्रीकृष्णस्य स्वपरमधाम प्रति गमनं सम्यक् प्रपञ्चितम्। अस्मिन् जैनपुराणे द्वाविंशतितीर्थङ्करनेमिनाथ एव मुख्यं चरित्रम्। आजन्म हरिवंशगमनं नाम मोक्षं यावदस्य लीलात्र प्रतिपादिता। प्रसङ्गवशात् आदर्शजीवनयापनसरणी मनुजानां कर्तव्याकर्तव्यं साहित्यिकपुटेन रञ्जितम्। यथा श्रीकृष्णो हरिवंशस्य शलाकापुरुषस्तथैव नेमिनाथो हरिवंशगमनमार्गे प्रकाशमानः सूर्य आसीत्। नेमिनाथस्य वंशजनारायणस्य बलभद्रपदधारिण श्रीकृष्णस्य तथैव बलरामस्य च महती कथा प्रपञ्चिता वर्तते। श्रीकृष्णपुत्रस्य प्रद्युम्नस्यालौकिकी कथाऽत्र सुविस्तरमुपन्यस्तं यस्य साहित्यिकं मूल्यं चमत्कारितां धत्ते।

**पद्मपुराणम्**

पुराणवाङ्मयं विश्वकोशो भवति यत्र समस्तज्ञानराशिः सुसंरक्षिताऽस्ति। न केवलं वेदस्यात्रोपवृंहणमपि तु भारतीयदर्शनं वेदाङ्गं साहित्यशास्त्रमायुर्वेदं प्राचीनविज्ञानं सरलभाषया प्रतिपादितमस्ति। तथैव जैनसंस्कृतसाहित्ये भारतीयविद्या प्राचुर्येण लभ्यते। रामायणकथा यथा अग्निपद्मादिपुराणेषूपबृंहितमस्ति जैनपद्मपुराणेऽपि तथैव किञ्चिद् वैशिष्ट्येन लभ्यते।

भारदे भारताद् बहिरपि रामकथा विस्तृता समादृता च। राम आदर्शराष्ट्रियचरित्रं च। अतो वाल्मीकिर्गायति-

**धर्मज्ञः सत्यसन्धश्च प्रजानां च हिते रतः।**
**यशस्वी ज्ञानसम्पन्नः शुचिर्वश्यः समाधिवान्[4]।।**

अस्य चरित्रस्यादर्शं निभाल्य भारते वैदिक-जैन-बौद्धपरम्परायां विलसन्ति नैकाः कृतयः। महाकाव्यनाटकखण्डकाव्यशतकसाहित्यमपि रामायणमनुसृत्य भृशमुपलभ्यते।

जैनसाहित्ये प्रामुख्येन विमलसूरेः प्राकृतभाषाया "पउमचरिय", संस्कृते रविषेणस्य 'पद्मचरितम्' गुणभद्रस्य 'उत्तरपुराणम्' च ख्यातिं प्राप्तवन्तः। रविषेणाचार्यस्य पद्मपुराणस्य रचना संवत् 1204 तदनुरोधेन विक्रमसंवत् 734 मध्ये जाता।

जैनपरम्परायां मर्यादापुरुषोत्तम रामः त्रिषष्ठिशलाकापुरुषरूपेण वर्णितः। तस्यापरो नाम 'पद्मः'। रामस्योदात्तचरित्रवर्णनपुरःसरं कविना रामस्य समकालीनाः विद्याधरलोक-अंजनापवनंजय-सुकुमाल-सुकौशलप्रभृतयो राजानोऽपि वर्णिताः। पुराणस्यान्यलक्षणानि अत्र सम्यग्रूपेण पालितानि सन्ति। पुराणमिदं षट्भागेषु विभक्तम्।

**(1) विद्याधरकाण्डः-** अस्मिन् काण्डे राज्ञः श्रेणिकस्य गौतमस्वामिनः संवादमाध्यमेन विद्याधर-लोक-राक्षसवंश-वानरवंश-रावणवशानां वंशावली वर्णिता। राक्षसवंशोद्भवो रत्नश्रवा स्वधर्मपत्नीकैकस्यां चत्वारि अपत्यानि जनयामास-रावणः, कुम्भकर्णः, चन्द्रनखा, विभीषणश्च।

पिता यदा प्रथमवारं रावणमपश्यत् तदा तेन रावणस्य कण्ठे शोभिते हारे दशप्रतिबिम्बानि व्यलोकि। तस्मात्तेन रावणस्यापरनाम दशग्रीवः दशाननश्च दत्तम्। तदनु विद्यालाभः, मन्दोदरीप्रभृतिभिः कन्याभिः सह विवाहः, दिग्विजयः, इन्द्रयमकुवेरवरुणादीनामुपरि आधिपत्यविस्तारो वर्णितः। जैनपुराणे एते इन्द्रादयो न देवता अपि तु विद्याधररूपेण पुरस्कृताः।

असौ रावणः नलकूबेरस्य पत्न्याः प्रेम नाङ्गीकृत्य स्वचरित्रादर्शं स्थापयन् जिनेन्द्रस्योपदेशं श्रुत्वा प्रतिज्ञां चकार यत्स कदापि परस्त्रीहरणं न करिष्यति। वानरराजबाली रावणद्वारा पराजितो वैराग्यमवाप। तत्पश्चाद् दिगम्बरीदीक्षां स्वीचकार। रावणः सुग्रीवं किस्किन्ध्यानगरेऽभिषिञ्चयति स्म। अत्र हनुमतः विवाहः अनंगकुसुमया सह, रावणभगिनी-चन्द्रनखाया विवाहः खरदूषणेन सह च वर्णितः।

**( 2 ) रामविवाहः-** अस्मिन् प्रकरणे जनकदशरथयोः वंशावलीं प्रदर्श्य तदनु दशरथस्य विवाहो वर्णितः। आदौ दशरथस्य तिस्रः पत्न्यः- कौशल्या, सुमित्रा, सुप्रभा चासन्। रामायणे सुप्रभास्थाने कैकेयी। रावणेन ज्ञातं यत् तस्य मृत्युर्जनकदशरथसन्तानाभ्यां भविता। अतः तेन तौ व्यापादयितुं विभीषणः प्रेषितः। तत्पूर्वं नारदेन प्रतिबोधितौ एतौ स्ववासगृहे स्वविग्रहं स्थापयित्वा बहिर्गतौ। विभीषणो विग्रहौ व्यापाद्य लवणसमुद्रे क्षिप्तवान्। स्वशत्रुः मृत इति रावणो चिन्तारहितः सुखेन तिष्ठति। अनन्तरं देशाटनसमये दशरथः कैकय्याः स्वयवरं गच्छति। सा च यदा दशरथं पतिरूपेण वरयति तदानीमुपस्थिता राजानो दशरथेन सह युद्धं कृत्वा पराजिता भवन्ति। कैकेयी वीराङ्गना युद्धे च दशरथस्य सहायतां कुर्वती पत्युः हृदयं विजित्य वरद्वयं प्राप्नोति। क्रमेण चतुर्षु पत्नीषु कौसल्यायां रामं, सुमित्रायां लक्ष्मणं, कैकय्यां भरतं, सुप्रभायां शत्रुघ्नं राजा दशरथो जनयति। रामस्य नामान्तरं पद्म इत्यस्मिन् पुराणे उल्लिखितमस्ति।

राज्ञो जनकस्य द्वे अपत्ये। कन्या सीता पुत्रश्च भामण्डलः। असौ भामण्डलः केनचित्पूर्वशत्रुणा प्रसूतिगृहादपहृतः। अनन्तरं स एकस्मिन् गन्धर्वगृहे पालितः। यौवने सति अज्ञानात् सीतां परिणेतुं वाञ्छति। दशरथपुत्राय सीतां प्रदातुं पूर्वमेव वाग् दत्ताऽसीत्। एतन्निशम्य विद्याधरो वदति रामो यदि वज्रावर्तधनुषो गुणं योजयति चेत् सीतामुद्वहेत् अन्यथा स सीतामपहृत्य नेष्यति। एतद्धनुषि गुणवन्धनं कृत्वा रामः सीतामुद्वहति। रामस्य राज्याभिषेकसमये कैकयी सुरक्षितं वरं सम्प्रार्थ्य रामं वनं प्रेषयति।

**( 3 ) वनभ्रमणम् -** मूलरामायणादनेके वृत्तान्ता भिद्यन्तेऽस्मिन् प्रकरणे। यथा रामद्वारा वज्रकर्णस्योद्वारः, राज्ञः अतिवीर्यस्य मानमर्दनम्। लक्ष्मणद्वारा राजकुमारीणां विवाहः। दण्डकवने मुनिभ्यः खाद्यवण्टनम्।

**( 4 ) सीताहरणम् -** अत्रापि मूलरामायणाद् भेदो वर्तते। खरदूषणचन्द्रनखापुत्र-शम्बूकः सूर्यहासखड्गप्राप्तये तपस्तपति। परन्तु तत्पूर्वं लक्ष्मणस्तद् खड्गमासाद्य शम्बूकस्य वधं करोति। अनेन कुपित चन्द्रनखा छलेन रामलक्ष्मणौ प्रेम्णा मोहयितुं यतते। निरालम्बा सती सा पतिं सूचयति। खरदूषणो रावणस्य सहायतां प्रार्थयते। रावणः सीतासौन्दर्येण मोहितः योजनां संरच्य तामपहरति। रामः सुग्रीवेण मैत्रीं कृत्वा सीतामुद्धर्तुमिच्छति। रावणस्य शौर्यं ज्ञात्वा

सुग्रीव आद्यौ एतन्न स्वीकरोति। अनन्तवीर्यकेवलीवचनानुसारेण य कोटिशिलां हस्ते उत्थापयिष्यति स एव रावणं हनिष्यतीति वदति। लक्ष्मणः कोटिशिलां हस्ते उत्थाप्य रावणविजयं प्रमाणयति। अतः विद्याधरवंशोद्भवान् वानरान् नीत्वा सुग्रीवः रामसहायको भवति।

**(5) युद्धम्** - रावणस्य मायाविनी शक्तिः विभीषणस्य सहायतया विनष्टा भवति। रामोऽपि विभीषणं लङ्कापतिं कर्तुं संकल्पयति। लक्ष्मणस्य शक्तिभेदे विशल्याजलेन स्नात्वा सः स्वस्थो भवति। मूलरामायणे सञ्जीवनीद्वारा आरोग्यं लभते। तदनु रावणो लक्ष्मणं व्यापादयितुं चक्रं प्रेषयति। परन्तु तेनैव चक्रेण लक्ष्मणो प्रतिनारायणरूपं रावणं विजयते। रावणश्च मृत्युमवाप्नोति।

**(6) उत्तरचरितम्** - रावणविजयात्परं रामः (पद्मः) अयोध्यामागत्य राज्यं शशास। भरतो विरक्तः सन् संन्यासिदीक्षां स्वीकरोति। तदनु सीतानिर्वासनं भवति। सा निर्वासनसमये वज्रजंघस्याश्रमे निवसति। परन्तु रामायणे सा वाल्मीकिमुनेराश्रमे तिष्ठति। तस्याः दौ पुत्रौ लवण-अङ्कुशौ (रामायणे-लवकुशौ) भवतः। अग्निपरीक्षानन्तरं सीता अयोध्यामायाति। परन्तु दीक्षां स्वीकृत्य आर्यिका भवति। एकस्मिन् दिने द्वौ देवौ नारायणबलभद्रौ लक्ष्मणस्य रामं प्रति स्नेहं ज्ञातुं रामो मृत इति निगदन्तौ लक्ष्मणः श्रवणमात्रेणैव मृत्युं गच्छति। भ्रातृस्नेहेन रामः षण्मासं यावत् लक्ष्मणस्य शवं निर्वहन् भ्रामं भ्रामं तस्य संस्कारं विधाय स्वयं तपसि प्रवृत्तः।

रविषेणाचार्यः स्वगुरुपरम्परां वर्णयति-

**आसीदिन्द्रगुरोर्दिवाकरयति शिष्योऽस्य चार्हन्मुनि-**
**स्तस्माल्लक्ष्मणसेनसन्मुनिरदः शिष्यो रविस्तु स्मृतः[5]।।**

अर्थात् आदौ इन्द्रगुरुः, तच्छिस्यो दिवाकरयतिः, तच्छिस्यः, अर्हन्मुनिः, तच्छिस्यो लक्ष्मणसेनः, तच्छिष्यश्च रविषेणः।

अस्मिन् पुराणे महावीरस्वामिनो निर्वाणप्रसङ्गो वर्णितः-

**द्विशताभ्याधिके समासहस्रे समतीते उर्द्धचतुर्थवर्षयुक्ते।**
**जिनभास्करवर्द्धमानसिद्धे चरितं पद्ममुनेरिदं निबद्धम्[6]।।**

अर्थात् जिनसूर्यमहावीरस्य निर्वाणात् षण्मासाधिक 1203 तमे वर्षे पद्ममुनिचरितं निबद्धम्। तदनुसारेण अस्य रचनाकारः 734 विक्रमसंवत् इति।

पद्मपुराणस्यापि गुरुपरम्परां वर्णयता कविना सूचितम् -

**वर्धमानजिनेन्द्रोक्तः सोऽयमर्थो गणेश्वरम्।**
**इन्द्रभूतिं परिप्राप्तः सुधर्मं धारिणीभवम्।।**
**प्रभवं क्रमतः कीर्तिं ततोऽनुत्तरवाग्मिनम्।**
**लिखितं तस्य संप्राप्य खेर्यत्नोऽयमुद्गतः[7]।।**

अस्यायं क्रमो यथा- आदौ रामचरितं वर्धमानाभिधानगौतमगणधरेणोक्तम्। तदनु वर्धमानात् इन्द्रभूतिः, तत्परं धारिण्याः पुत्रः सुधर्माचार्यः, तत्परं प्रभवः, तत्परं वाग्मीश्रेष्ठः कीर्तिधरः। तत्परञ्च रविषेणार्य इदं साधु रचयामास।

**शान्तिनाथपुराणम्**

षोडशतमथीर्थङ्करशान्तिनाथस्य चरितं महनीयां कीर्तिकलापञ्चोद्दीश्य असगनामककविद्वारा षोडशसर्गैरिदं महत्त्वपूर्णं पुराणं रचितम्। अत्र प्रथमसर्गाद् द्वादशसर्गं यावत् पूर्वभवतीर्थङ्कराणां चरितं साधूपन्यस्तमस्ति। यथा सुवर्णं खननात्परं दहननिर्घषणतापनैर्बहुविधोपायैः तैजसत्त्वं प्राप्नोति तथैव एते तीर्थङ्कराः तपश्चर्ययैव मुनित्वं प्राप्नुवन्ति। इयमेव परिपाटी आसीत् शान्तिनाथस्य। असौ आदौ विदेहक्षेत्रे वत्सकावत्याः प्रभाकरीनगर्यां स्तिमितसागरनामा राजा आसीत्। अनन्तरं तीर्थङ्करोऽभूत्। चक्रवर्ति-कामदेवनामाभ्यामसावपि परिचितः। अस्य जीवनचरितं वैराग्यजनकं शान्तिप्रदायकञ्चास्ति।

असगकवेः प्रथमकृतिः वर्द्धमानचरितमासीदिति अन्तिमसर्गात् ज्ञायते। तद् विरच्य शान्तिनाथपुराणं तेन निरमायि।

**चरितं विरचय्य सन्मतीयं सदलङ्कारविचित्रवृत्तबन्धम्।**
**स पुराणमिदं व्यधत्त शान्तेरसगः साधुजनप्रमोहशान्त्यै[8]।।**

वर्द्धमानचरितं विक्रसंवत् 920 तमे वर्षे लिखितमिति समालोचकाः प्रमाणयन्ति।

**उपसंहारः**

इतिहासपुराणानि पञ्चमं वेदमीश्वरः[9] अस्मात् पुराणं पञ्चमो वेद इति श्रीमद्भावतपुराणाज्ज्ञायते। श्रीमद्भागवतमहापुराणं विहायान्यपुराणेषु पुराणस्य पञ्चलक्षणं प्रपञ्चितमस्ति। श्रीमद्भागवतेऽस्य दशलक्षणम् -

**अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः।**
**मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः[10]।।**

श्रीमद्भागवतस्य दशमस्कन्धेऽपि सामान्यपरिवर्तनेन सह पुराणस्यापरं दशलक्षणं दत्तमस्ति।

**सर्गोऽस्याथ विसर्गश्च वृत्ती रक्षाऽन्तराणि च।**
**वंशो वंशानुचरितं संस्था हेतुरपाश्रयः[11]।।**

परन्तु जैनपुराणानामनुशीलनेन ज्ञायते यदेषु केवलं पञ्चलक्षणमेव संगच्छते।

पुराणं चतुर्भिस्तत्त्वैरूपादानैर्वा निर्मीयते। यथा विष्णुपुराणे-

**आख्यानैश्चाप्युपाख्यानैर्गाथाभिः कल्पशुद्धिभिः।**
**पुराणसंहितां चक्रे पुराणार्थविशारदाः[12]।।**

जैनपुराणेषु विभिन्नाख्यानोपाख्यानकथानक-लोकपरम्परा गाथाः सन्निविष्टाः। श्रीमद्भागवतस्य टीकाकारः श्रीधरस्वामी आख्यानोपाख्यानयोर्भेदं दर्शयन् ब्रूते-

**स्वयं दृष्टार्थकथनं प्राहुराख्यानकं बुधाः।**
**श्रुतस्यार्थस्य कथनमुपाख्यानं प्रचक्षते।।**

जैनपुराणेषु पुराणकारः स्वसमस्यानुभूतिमाधारीकृत्य यल्लिखति तदाख्यानम्। पूर्वसूरीणां मतानि स्मृत्वा यः प्रमाणयति तदुपाख्यानम्। तीर्थङ्कराणामुत चक्रवर्तिनां च यां गाथामुद्धरति

लोकपरम्परां चाश्रयते सा गाथा। जैनधर्मस्यानुशीलनं कल्पशुद्धिर्भवितुमर्हति। एवमुभयसंस्कृतजैनपुराणयोरुपादानं प्रायः स्वपरम्परानुरूपं सामान्यं भजते।

पुराणेषु ऐतिहासिकतत्त्वेन साकमन्यचमत्कारकपोलकल्पितातिप्राकृतघटनाः वर्णिताः सन्ति येषां प्रमाणमिदानीं गवेषकैरनुसन्धातुं कष्टमनुभूयते। परन्तु जैनपुराणे कतिपयविषयान् त्यक्त्वा सर्वे पक्षाः ऐतिहासिकाः येषां पुरातात्त्विकताम्रलिपिशिलापट्टादीनि प्रमाणानि बाहुल्येन प्राप्यन्ते।

सर्वेषां जैनपुराणां शलाकापुरुषाः तीर्थङ्करादयो नायका भवन्ति। तेषां नाम्ना पुराणानि नामितानि सन्ति। परन्तु संस्कृतपुराणानां नामकरणं विषयदृष्ट्या, वक्तृश्रोतृनाम्ना च वर्तन्ते। केषांचन जैनपुराणानां श्रोतांसि संस्कृतपुराणानि सन्ति।

सात्त्विकराजसिकतामसिकदृष्ट्या क्रमशः वैष्णवब्रह्मशैवपुराणानि यथाक्रमं वर्तन्ते। एतानि विहाय शाक्त-सौर-गाणपत्य-स्थलपुराणानि बहूनि सन्ति। जैनपुराणानां तथा विभाजनं नास्ति। पुराणानां तथा संख्यादृष्ट्या बाहुल्यं नास्ति।

इदानीं यावद् द्वयोः पुराणपरम्परयोः तुलनात्मकमध्ययनं तथा न जातं यत्तु शीघ्रं करणीयम्। एतादृशयत्नो विधेयः सर्वकारैः स्वपरम्परासंपोषकैराचार्यैश्च।

यथा संस्कृतपुराणेषु कानिचन उप-औपपुराणानि शिवधर्म-बारुण-मारिचादीनि इदानीमपि प्राकाश्यमपेक्ष्यन्ते तथैव जैनसंस्कृतपुराणानां दशा वर्त्तन्ते। तादृशमहत्वपूर्णजैनपुराणानि सन्ति, येषामेका सूची परिशिष्टे दत्ताऽस्ति भाविशोधकर्मणे।

**सन्दर्भाः**


1. विष्णुपु.-3/6/24 2. काव्यमीमांसा-1 3. विष्णुपु. 3/6/24
4. मूलरामायणम् -12 5. जैनपद्मपु.123/16 6. जैनपद्मपु. 128/181
7. जैनपद्मपु. 1/42-42 8. शान्तिनाथपुराणम् , 16/7 9. भागवतपु. 3/12/37
10. भागवतपु. 2/10/1 11. भागवतपु. 10/7/9 12. विष्णुपु. 3/6/15


**परिशिष्टम्**

| | | | |
|---|---|---|---|
| 1. | अजितपुराणम् | अरुणमणिः | 1716 |
| 2. | आदिपुराण (कन्नड) | कवि पंप | -- |
| 3. | आदिपुराणम् | भट्टारकचन्द्रकीर्तिः | 17 ख्री. |
| 4. | आदिपुराणम् | भट्टारक सकलकीर्तिः | 15 ख्री. |
| 5. | उत्तरपुराणम् | भ. सकलकीर्तिः | 15 ख्री. |
| 6. | कर्णामृतपुराणम् | केशवसेनः | 1608 |
| 7. | जयकुमारपुराणम् | ब्र.कामराजः | 1555 |
| 8. | चन्द्रप्रभपुराणम् | अगासदेवः | -- |
| 9. | चामुण्डपुराण (क.) | चामुण्डराय | श.सं. 980 |

| | | |
|---|---|---|
| 10. धर्मनाथपुराण (क.) | कवि बाहुबली | -- |
| 11. नेमिनाथपुराणम् | ब्र. नेमिदत्तः | 1575 |
| 12. पद्मनाभपुराणम् | भट्टारकशुभ | 17 ख्री. |
| 13. पउमचरिउ (अपभ्रंश) | चतुर्मुख देव | -- |
| 14. पउमचरिउ | स्वयंभूदेव | -- |
| 15. पद्मपुराणम् | भ. सोमतेनः | -- |
| 16. पद्मपुराणम् | भ. धर्मकीर्तिः | 1656 |
| 17. पद्मपुराण (अपभ्रंश) | कवि रइधू | 15-16 ख्री. |
| 18. पद्मपुराणम् | भ. चन्द्रकीर्तिः | 17 ख्री. |
| 19. पद्मपुराणम् | ब्रह्मजिनदासः | 13-16 ख्री. |
| 20. पाण्डवपुराणम् | भ. शुभचन्द्रः | 1608 |
| 21. पाण्डवपुराण (अपभ्रंश) | भ. यशकीर्ति | 1497 |
| 22. पाण्डवपुराणम् | भ. श्रीभूषणः | 1658 |
| 23. पाण्डवपुराणम् | वादिचन्द्रः | 1658 |
| 24. पार्श्वपुराण (अपभ्रंश) | पद्मकीर्ति | 989 |
| 25. पार्श्वपुराणम् | कवि. रइधू | 15-16 ख्री. |
| 26. पार्श्वपुराणम् | चन्द्रकीर्तिः | 1654 |
| 27. पार्श्वपुराणम् | वादिचन्द्रः | 1658 |
| 28. महापुराणम् | आचार्यमल्लिषेणः | 1104 |
| 29. महापुराण (अपभ्रंश) | महाकवि पुष्पदन्त | -- |
| 30. मल्लिनाथपुराण (क) | कवि नागचन्द्र | -- |
| 31. पुराणसारः | श्रीचन्द्रः | -- |
| 32. महावीरपुराणम् (वर्धमानचरितम्) | असगः | 910 |
| 33. महावीरपुराणम् | भ. सकलकीर्तिः | 15 ख्री. |
| 34. मल्लिनाथपुराणम् | सकलकीर्तिः | 15 ख्री. |
| 35. मुनिसुव्रतपुराणम् | ब्रह्मकृष्णदासः | -- |
| 36. मुनिसुव्रतपुराणम् | भ. सुरेन्द्रकीर्तिः | -- |
| 37. वागर्थसंग्रहपुराणम् | कविपरमेष्ठी | -- |
| 38. शान्तिनाथपुराणम् | भ. श्रीभूषणः | 1659 |
| 39. श्रीपुराणम् | भ. गुणभद्रः | -- |
| 40. हरिवंशपुराण (अपभ्रंश) | स्वयंभूदेव | -- |

| | | |
|---|---|---|
| 41. हरिवंशपुराणम् | तदैव | -- |
| 42. हरिवंशपुराणम् | ब्रह्मजिनदासः | 15-16 ख्री. |
| 43. हरिवंशपुराणम् | तदैव | 1507 |
| 44. हरिवंशपुराणम् | भ. श्रुतकीर्तिः | 1552 |
| 45. हरिवंशपुराणम् | महाकवि रइधू | 15-16 ख्री. |
| 46. हरिवंशपुराणम् | भ.धर्मकीर्तिः | 1671 |
| 47. हरिवंशपुराणम् | कविरामचन्द्रः | 1560 |



# धर्मशास्त्रं जातीयसंहतिश्च

– प्रो. ललितकुमारसाहुः

*(इस गवेषणात्मक निबन्ध में आधुनिक भारतीय समाज के एक महत्वपूर्ण विषय 'जातीय संहति' अर्थात् राष्ट्रीय एकता पर विचारों का विस्तार से वर्णन किया गया है। भिन्नता, विविधता वाले इस देश में अनेक भाषा, जातियाँ, उपजातियाँ, धर्म, मत, सम्प्रदाय, तथा संस्कृतियाँ हैं। अतः इस देश में राष्ट्रीय एकता तथा जातिवाद, प्रान्तवाद, सम्प्रदायवाद, भाषावाद, राजनीतिक अस्थिरता, आर्थिक विषमता आदि समस्याओं के निराकरण में स्मृतियों अर्थात् धर्मशास्त्र का किस तरह का तथा कितना अवदान है इसको विविध स्मृतिवचनों का उद्धरण देते हुए विवेचित किया गया है।*

*आचार-व्यवहार एवं प्रायश्चित्तादि विषयों का प्रधान रूप से वर्णन करने वाले मनुयाज्ञवल्क्यादि प्रणीत विभिन्न स्मृतियाँ प्रायः सर्वत्र स्पष्टतया राष्ट्रीय एकता एवं जातीय संहति के संरक्षण एवं संवर्द्धन के लिए तथा विश्वबन्धुत्व की भावना के विकास के लिए प्रेरणा देती हैं। पारस्परिक विरोध-भावना के परित्याग की प्रेरणा भी देती है। इन्हीं तथ्यों को लेखक ने यहाँ विस्तार से उपस्थापित किया है।)*

जातीयसंहतिः समाजाय साम्प्रतमेको महत्त्वपूर्णविषयः, यश्च विषयः सर्वासां क्रियाकलापानामाधारो विवेचितः। भिन्नताया देशो भारतवर्षमिदम्, अस्मिन् अनेकाः जातयः, उपजातयः, भाषाः नैके धर्माश्च प्राप्यन्ते। परन्तु केषाञ्चन विदुषामिदमेव मतं यद्विद्यमानासु भिन्नतास्वपि भारते आधारभूता संहतिः विद्यते। अत्र भौगोलिक-सामाजिक-भाषा-परम्परा-धर्मेषु स्थितासु विभिन्नतास्वपि जीवितस्य संहतिरस्ति। इयं संहतिः भारतस्य चरित्रस्य सामान्य-व्यक्तित्वस्य चास्ति। अस्याः संहतेराधारः सांस्कृतिकी एकतैव। इयञ्च विभिन्नैः तत्त्वैः विघटिकता नैव स्यात्। अनया संहत्या प्रभावितः सन् स्मिथ्महोदयेनोक्तम्[1] – भारतवर्षे निस्संदेहं नीचैः (गभीरतमप्रदेशे) आश्रिता आधारभूता संहतिरस्ति।

**जातीयसंहतेरर्थः-**

जातीयसंहतिरेका मनोवैज्ञानिकी स्थितिस्तथा एकीकरणस्य भावना, या सर्वस्याः सङ्कीर्णतावादप्रवृत्तेरुपरि तिष्ठति। इयं संहतिः देशभक्तेः प्रगतेश्च कृते कार्यं करोति। वस्तुतः जातीयसंहतिः सर्वेषां नागरिकाणां हृदयेषु ऐक्यस्य, सुदृढतायाः, देशप्रेम्णः, देशभक्तेश्च भावनाया विकासो भवति। संहतिरियं समाजस्य, एकतायाः भ्रातृत्वस्य सामूहिकतायाश्च भावना अस्ति।

भारतवर्षेऽस्मिन् जातीयसंहतेः उदात्तस्वरूपस्य प्रकटीकरणं तदा जातं यदा देशस्य निवासिनां सङ्कीर्णस्वार्थैः, आर्थिकविषमतया, सामाजिकासमतादिकारणैः च उत्पन्नां भिन्नतां विस्मृत्य, विदेशिशासक-शोषणात् परित्राणाय राष्ट्रियान्दोलनाय सत्यसंकल्पः कृतः, तथा स्व-रक्तस्य जीवनस्य च आहुतिपूर्वकं संकल्पस्य ज्योतिः प्रज्वालितम्। विषयेऽस्मिन् डॉ. श्रीमालिमहोदयेनोक्तम्[2] यथा- "स्वतन्त्रताप्राप्तेरनन्तरं पुनः भिन्नताया भावना समुत्पन्ना इति।"

जातीयसंहत्या जनानां हृदयेषु एकतायाः, संगठनस्य सन्निकटतायाः भावनायाः सामान्यनागरिकताया भावनायाः, राष्ट्रं प्रति भक्तेः भावनायाः विकासो क्रियते। किञ्च डा. जे. वेदीजमहोदयेनाप्युक्तं [3]यत् - संहतिः एकतायाः अर्थः-देशस्य विभिन्नराज्यानां व्यक्तीनाम् आर्थिक-सामाजिक-भाषाविषयक-वैभिन्नानां सीम्नि संरक्षणम्, तस्मिन् च देशस्य समावेशकरणम्।

**जातीयसंहतौ बाधाः-**

जातिवादः, साम्प्रदायिकता, प्रान्तीयता, राजनीतिकास्थिरता, भाषासम्बन्धिविरोधः, राजनैतिकमार्थिकञ्च कारणमित्येतानि संहतेः विकासावरुद्धेः विघ्नानि विचारितानि[4]।

**बाधानां दूरीकरणे धर्मशास्त्रीया उपायाः-**

वेदानामनन्तरं प्रचीनैर्मुनिभिः प्रणीता स्मृतिः धर्मशास्त्रमिति निगदिता। ततो मनुयाज्ञवल्क्यादीनामुपदेशसम्बलितग्रन्था आचार-व्यवहार-प्रायश्चित्ताख्याः समुपलब्धाः। यैश्च जातीसंहतेरवबोधो भवति।

सदाचारो जातीयसंहतेः हेतुरस्ति, कारणं सदाचारः मानवजीवनस्य शुद्धं परिष्कृतं चाचरणं तथा च संहतेः मूलं कथितः। मानवस्योन्नतिः तस्याचरणस्योपरि निर्भरशीलता, सदाचारेण समुन्नतिः संहतिश्चोभयं सम्भवति, दुराचारेण अधःपतनं भवति। अतः सदाचारः पालनीयः इति मनोर्मतम्[5]-

आचाराद्विच्युतो विप्रो न वेदफलमश्नुते।
आचारेण तु संयुक्तः सम्पूर्णफलभाग्भवेत्।।

जीवनस्य सार्वभौमिको नियमो धर्म एवास्ति। जीवने संहत्यैः धर्मस्य (कर्मणः) ईश्वरस्य वा ज्ञानमत्यन्तमावश्यकम्। तदर्थमेव धर्मशास्त्राणां निर्माणं संस्कृतेः चरमोन्नतेः सूचकमस्ति। स्मृतिषु-पौराणिक-दार्शनिक-वैदिकवर्णनात् स्मृतीनां परमं लक्ष्यं सामाजिकी सुव्यवस्था तथा व्यक्तेः शारीरिक-मानसिक-बौद्धिकमतानां क्रमिकविकाशमाध्यमेन संहतिलाभः।

धर्माचरणं मानवजीवनं विशेषभावेन प्रभावयति। साक्षाद्धार्मिकानुभवः ईश्वरविषयक-धार्मिकज्ञानस्य महत्त्वपूर्णं स्रोतो मन्यते। धर्मशास्त्रीयविचारधाराया आधारः पुरुषार्थचतुष्टयमस्ति। एषु अर्थकामयोः भौतिकविकासाय प्रमुखं स्थानमस्ति। धर्मस्तु समाजस्य मुख्यं साधनम्। पुरुषार्थचतुष्टये भौतिकाध्यात्मिक-जीवनयोः समन्वयोऽस्ति। एषां सन्तुलनं सेवनञ्चैवाभिष्टम्।

धर्मशास्त्रे प्रतिपादित आचारः सदाचाररूपेणोक्तः। स चापि सदाचारः सदाचरणकर्मनाम्ना वाऽभिधीयते। स चापि धर्मत्वेन निगदितः, यत उक्तमस्ति 'आचारः परमो धर्मः'[6] इति।

अयं चापि परमो धर्मः परिपाल्यते चेदात्मोन्नत्या सह समाजस्य जातेः देशस्य विश्वस्य चापि कल्याणं सम्भवति। अन्यथा इदानीं यथा सम्पूर्णे विश्वेऽशान्तिः परिव्याप्ता तथा जातीयसंहतेः विनाशो जातस्तदर्थमेव दुराचारो दायी। अतः सर्वहितेच्छुः नित्यमाचारे युक्तः सन् सदाचारवान् भवति चेदवश्यमेव जातीयसंहतेः समुन्नतिः स्यात्।

जातीयसंहतेः द्वितीयमुदाहरणम् आश्रमव्यवस्था अस्ति। तत्रापि प्रथमाश्रमो ब्रह्मचर्याश्रमः, यस्मिन् प्राप्तस्य ज्ञानलोकस्य प्रकाशे जीवनयात्रा रमणीया भवति। किञ्च अस्मिन्नेव सः सततश्रमेणैवात्मनः सर्वोच्चसुखमभ्युदयञ्च साधयति। ज्ञानस्य शाश्वतं सार्वत्रिकं च फलं लभते।

भारतीयचिन्ताधारानुसारं ज्ञानाधीनं हि दैवत्वम्। विद्वांसो हि देवा इति शतपथ ब्राह्मणादपि[7] ज्ञायते। उपनिषत्सु ब्रह्मज्ञानमेव ब्रह्मत्वप्राप्तिः संदिष्टा[8]। यो विद्यया तपसा जन्मना वा वृद्धः सः पूज्यो भवति। मनुः[9] वेदाध्ययनेन ब्राह्मणत्वं प्रतिपादयति। स्नातकस्तु सर्वोच्चपुरुषो मतः। तदनुसारं ब्रह्मभूता एव जीवनकाले ब्रह्मतत्त्वज्ञाः निगदिताः। स्त्रीशूद्राणां समेषां विद्याधिकारः प्रदत्तः।

विद्याध्ययनाय विद्यालयस्तु शाश्वतरूपेणाचार्याणां गृहमभवत्। तस्मिन्नाचार्यगृहे विद्यार्थिनः आचार्यपुत्रैः सह निवसन्तः पठन्ति स्म। ब्रह्मयज्ञे सर्वेषां विदुषां ब्राह्मणानामध्यापनमेव नित्यकर्म मनुना कथितम्। महाभारतकाले तक्षशिला-विश्वविद्यालये भारतस्य विभिन्नप्रदेशेभ्यः उच्चशिक्षार्थं छात्राः समागताः। पाणिनिः कौटिल्यश्च सम्भवतो विश्वविद्यालयेऽस्मिन् शिक्षितौ। अहिंसा परमो धर्मः[10] इतीयं शिक्षाऽपि गुरोः सकाशात् विद्यालयात् शिक्ष्यते। अतो आश्रमेषु ब्रह्मचर्याश्रमो जातीयसंहतेरेकं मूलभूतं कारणं ज्ञातमित्यपि अनस्वीकार्यम्।

गृहस्थाश्रमस्य सम्बन्धोऽपि जातीयसंहत्या अवर्त्तत, इदानीमपि वर्त्तते, यतो हि स्मृतिकालादेव गृहस्थानां जीवनविधिर्विविधैः कर्मभिः पूर्णो विद्यते। प्रथमं तावत्पञ्चमहायज्ञानां परिपालनमस्ति। येन गृहस्था देवतां मानवं च प्रति कर्त्तव्यं सम्पादयन्ति। यज्ञस्तु त्यागवाचकः शब्दः। महायज्ञेषु सर्वेषां पोषणाय विविधप्रकाराणां त्यागादीनां विधानमस्ति। अत एव मनुना एषां स्वरूपमुक्तम्[11]-

**अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।**
**होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्।।**

ब्रह्मयज्ञेन स्वाध्यायप्रवचनयोः निर्देशः दत्तः। अनेन दीनहीनानामपि विद्यार्थिनां शिक्षा समभवत्। स्वाध्यायविषया वेदवेदाङ्गेतिहासपुराणादय आसन्। ब्रह्मयज्ञे व्यक्तिगतकल्याणेन समष्टिकल्याणमपि अभूत्। येन जातीयसंहतेरपि कार्यं साधितम्।

दैवयज्ञे देवप्रीत्यर्थं स्तुतिः हवनादिको यज्ञश्च संपाद्यते। तदा जना देवानामनुग्रहेण आत्माभ्युदयं मन्यन्ते स्म। देवाश्च सत्यपरायणा उदाराः पराक्रमसम्पन्नाः सहायशीलाश्च सन्ति। मानवा अपि देवासान्निध्येनैषां गुणानामात्मनि प्रतिष्ठां कृतवन्तः, यैश्च जातीयसंहतेरभ्युदयो जातः।

पितरस्तु देवा एव परमोदाराः। सर्वे सुखिनः सन्तु इति हिन्दूनां धारणा सनातनी विद्यते। भूतयज्ञेन सर्वेषां प्राणिनां परितृप्तये नित्यमेव बलिरदीयत। मनुर्बलिवैश्वदेवद्वारा सर्वेषां परितृप्तये

विधानमेतन्निर्दिशति। अतिथियज्ञेन सांस्कृतिकमभ्युथानं प्रतिपादितम्, येन सर्वजनसम्पृक्तिः परिलक्षिता। अत एतैः पञ्चमहायज्ञैः गृहस्थोऽपि संहतेः कार्यं सम्पादयतीति स्पष्टम्।

भारतीयधर्मशास्त्रमतीव विशालमस्ति। तत्र प्रतिपादितेषु विषयेषु व्यवहारो महत्त्वपूर्णः परिलक्ष्यते, कारणं तत्र व्यवहारभागे विधिशास्त्रं सम्यक्तया आलोचितम्। मनुयाज्ञवल्क्य-प्रभृतिभिर्धर्मशास्त्रकारैः राजधर्मप्रसङ्गे राज्ञः प्रजापालनं परमो धर्म[12] इति प्रतिपाद्य दुष्टानां निग्रहं विना शिष्टानां प्रजानां परिपालनं न सम्भवति इति हेतोः दुष्टानां निग्रहोऽपि नैव कर्त्तुं शक्यते। अतो दण्डस्य हि भयात् सर्वे स्वकीयं धर्मं (कर्म) सुचारुरूपेण परिपालयन्ति। स्वधर्माद्विच्युता न भवन्ति[13]। दुष्टाश्च प्रजाजनान् न पीडयन्ति। एवं प्रकारेण समाजे साधु चलितुं नियमानुसारेण कर्त्तव्यं परिपालयितुं परान् नैव पीडयितुं भारतीयैः मुनिभिः मन्वादिभिः शास्त्राणि निर्मितानि, यान्यनुसृत्य जनाः संसारे सुखेन तिष्ठन्ति।

अतः सुखसहावस्थानमेव जातीयसंहतेः सुस्थं वातावरणमिति वक्तुं शक्यते, यदेव व्यवहारेण सम्भवति। ऋणादानानि अष्टादशव्यवहारपदानि[14] मनुना प्रतिपादितानि, यानि जातीयसंहतेः परकाणीति प्रतिपादयितुमुदाह्रियन्ते कानिचित् पदानि।

ऋणादानेन जातीयसंहतिः सम्भवपरेति आलोचयितुं शक्यते, कारणं संसारे सर्वे धनिनो दरिद्रा वा न सन्ति। अत आवश्यकतानुसारं निर्धनः ऋणं नीत्वा स्वसंसारं चालयति। ऋणादानस्य नियमानुसारं यदि ऋणं गृहीत्वा परिशोधः क्रियते तर्हि उभयोः दातृग्रहित्रोरुपकारो भवति। इत्थं राज्येषु देशेषु आवश्यकीयस्थले ऋणं गृहीत्वा प्रजानामभावपूर्तिः चेत् क्रियते, आपदि गतायां ऋणं परिशोध्य सुखिनो भवेयुः, तर्हि तेन संहतेराशा उज्जीविता भवेत्।

एवं सीमाविवादसमाधानेन, सेवया, सुश्रूषया, सम्भूयसमुत्थानादिभिः संहतेः सम्भावना अस्तीति अभिप्रायः। कारणमेतैः व्यवहारपदैः समाजे नराः सुखेन कालं यापयितुं समर्था भविष्यन्ति, येन च शान्तिः मिलिष्यति। शान्त्या सहावस्थानेन परस्परं संहतेः मार्गानुसरणं ते करिष्यन्ति।

प्रायश्चित्तेनापि संहतेः परिकल्पना सम्भवपरा, यतो हि मानवोऽवश्यमेव ज्ञानवशतोऽज्ञान-वशतो वा किमपि असत्कर्म करोति चेत्तदर्थं तस्माद् मुक्तये सामाजिकव्यवहाराय च प्रायश्चित्तमावश्यकम्। यतो[15] याज्ञवल्क्येनोक्तम् –

विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति।।

तस्मात्तेनेह कर्त्तव्यं प्रायश्चित्तं विशुद्धये।
एवमस्यान्तरात्मा च लोकश्चैव प्रसीदति।।

प्रायश्चित्तेन सामाजिकी अर्हता आगच्छति। मानसिकी शान्तिरपि मिलति। येन चापि सहावस्थानाय मार्ग उन्मुक्तः तिष्ठति। यद्यपि प्रायश्चित्तशब्दोऽयं पापक्षयाय नैमित्तिके कर्मविशेषे

रूढः, तथापि कृते प्रायश्चित्ते अन्तरात्मा शुद्धतया प्रसीदति लोकश्च संव्यवहर्तुं प्रसीदति। अतो मनुनोक्तम्[16]–

चरितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये।। इति

इत्थं विशुद्धः सन् सत्कर्मप्रवृत्तो भवति चेत् आत्मकल्याणेन साकं जगतः कल्याणमपि कश्चित् विदधाति, येन जनाः प्रभाविताः सन्तः विश्वकल्याणाय प्रयत्नशीला भविष्यन्ति। एतच्च सर्वविधं हितकरं कर्म व्यक्तिकैन्द्रिकं न भवति, अपि तु सामूहिकम् एवानिवार्यम्, यदर्थं संहतेरावश्यकता सुतराम् अनिवार्या।

अनेन ज्ञायते धर्मशास्त्रमाध्यमेन जातीयसंहतेरुपलब्धिं कर्तुं शक्यत इति। यया च सांप्रतिकासहिष्णुतायाः दूरीकरणं सम्भवपरं भवेदिति।

**सन्दर्भाः**

1. Vincent smith- The Oxford History of India- pg-07
2. "National integration is a psychological and educational process involv ing the development of a feeling of unity, solidarity and cohesion in the hearts of people, a sence of common citizenship and a feeling of locality to the nation."

   (National integration conference report, 1961)
3. "National Integration means bringing about economic, social, cultural and linguistic differences among the people of various stats in the coun try within tolerable range and imparting to the people a feeling of the oneness of India"

   (Dr. J.S. Bedi: current problems of Indian Education-p217)
4. शिक्षा के सिद्धान्त (राष्ट्रीय एकता के लिए शिक्षा) पृ. 72-77.
5. म.स्मृ.- 1/109
6. आचारः परमो धर्मः श्रुत्युक्तः स्मार्त एव च।

   तस्मादस्मिन् सदा युक्तो नित्यं स्यादात्मवान् द्विजः।। म.स्मृ- 1/108
7. श.ब्रा. 3.07.03.10
8. मण्डुकः- 3.2.9
9. मण्डुकः- 3.2.9
10. अहिंसा एव भूतानां कार्यं श्रेयोऽनुशासनम्।। म.स्मृ- 02/151
11. म.स्मृ- 03/70.
12. मि.पृ.- 161

13. देवदानवगन्धर्वा रक्षांसि पितनोरगाः।
तेऽपि भोगाय कल्पन्ते दण्डेनैव निपीडिताः।। म.स्मृ–7/23

14. म.स्मृ– 8/47

15. या.स्मृ– 3/119-120

16. म.स्मृ– 11/53



# धर्मशास्त्रनिरूपितानि लोककल्याणकराणि मानवमूल्यानि

– प्रो. रामकृष्णपाण्डेयः 'परमहंसः'

*(लोककल्याणपरक मानवमूल्यों की चर्चा यद्यपि सम्पूर्ण संस्कृतवाङ्मय में दृष्टिगत होती है तथापि स्मृतिवाङ्मय में उसकी सर्वाधिक चर्चा है, इसमें कोई सन्देह नहीं है। वर्तमान में भी हम देखते हैं कि शास्त्रीय व्यवस्था या सामाजिक नियमों के अतिक्रमण से लोकजीवन संकटापन्न हो जाता है। अतः धर्मशास्त्र का अध्ययन, अनुशीलन तथा तदनुकूल आचरण हमें लोक कल्याणकारी मानव जीवन हेतु दिग्दर्शन करता है। इस निबन्ध में विविध स्मृतियों के उद्धरणों, वचनों एवं प्रमाणों को उद्धृत करते हुए लोककल्याणप्रद मानवमूल्यों के सम्बन्ध में सम्यक् सारगर्भित विश्लेषण किया गया है।)*

प्रसङ्गेऽस्मिन् किन्नाम् धर्मशास्त्रम्, कश्च लोकः, किञ्च कल्याणम् इति प्रथमं विवेचनीयम्।। तत्र धर्मः शिष्यते अनेन, धर्मं शास्ति उपदिशति वा यत् शास्त्रं तत् धर्मशास्त्रमिति उच्यते। 'शासु अनुशिष्टौ' इति घातोः ष्ट्रन् प्रत्ययेन निष्पन्नः शास्त्रशब्दो व्यवस्थाविघायकार्थं प्रतिपादयति। अर्थाद् यत्र लोकानां कल्याणस्य कृते नियमाः धर्माः निर्दिश्यन्ते अथवा कर्तव्याकर्तव्य–नियम–निर्देशविधानेन येन लोकानां शासनम् अनुशासनं वा भवति तदेव धर्मशास्त्रमिति निर्वक्तुं शक्यते।

लोक्यते यः, लोक्येते येन यत्र वा शब्दार्थौ इति लोकः। लोकृ दर्शने इत्यस्माद्धातोर्घञ्प्रत्ययेन निष्पन्नो लोकशब्दो विविधव्यवहारपरं–शिष्टव्यवहारपरं वा अर्थम् अवबोधयति। यथोक्तम्–

**लोक्येते येन शब्दार्थौ लोकस्तेन स उच्यते।**
**व्यवहारोऽथवा वृद्धव्यवहर्तृपरम्परा।।**

'कल्ये प्रातः काले अन्यते शब्द्यते यत् तत् कल्याणम्।

'अण शब्दार्थे, इति धातोर्घञ्प्रत्ययेन निष्पन्नः कल्याणशब्दः सुखम्, आनन्दम्, अभ्युदयम्, सौभग्यं च बोघयति।

लोकव्यवहारे एवं दृश्यते यत् कानिचित् कार्याणि शास्त्रोचितानि क्रियन्ते, परं बहूनि कार्याणि स्वेच्छयैव सम्पाद्यन्ते। स्वेच्छया सम्पादितैः कार्यैर्न केवलं परार्थहानिः, अपि च कदाचित् स्वार्थहानिरपि सम्भाव्यते। यथा अर्जुनं सहसा युद्धान्निर्वेदभावमापन्नं संवीक्ष्य भगवान् श्रीकृष्णः उपदिशति यत् त्वया स्वेच्छाचारो नैव विधेयः, किं च शास्त्रानुसारेणैव वर्तितव्यम्, यतोहि शास्त्रानुसारं कार्यविधानेन मानवाः सुखं समृद्धिं च विन्दन्ति, नान्यथेति। तथा च -

**यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः।**

**न स सिद्धिमवाप्नोति न सुखं न परां गतिम्।। श्रीमद्भगवद्गीता 16/23**

एवञ्च विधिनिर्दिष्टं धर्मशास्त्रव्यवस्थापरीक्षितं कार्यं न केवलम् आत्मनः कल्याणम्, अपि च समग्रस्य लोकस्य कल्याणाय प्रभवति। तत्प्रतिकूलाचरणेन च लोकस्य लोकहितस्य वा हानिर्भवतीति सर्वथा अनुभवसिद्धमेतत् तथ्यं वर्त्तते। यस्मिन्नाचरणीये कार्ये सन्देहः सञ्जायते तत्र इदं कार्यम् अकार्यम् वा इत्यस्य संशयस्य शमनार्थं धर्मशास्त्रमेव प्रमाणं भवति। ययोक्तं भगवता श्रीकृष्णेन कार्याकार्यव्यवस्था-सम्पादनार्थं संशयदोलाधिरुढम् अर्जुनं प्रबोधयता -

**''तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ''**

इदं कार्यम् इष्टसाधनम्, इदं चानिष्टसाधनम् इत्येषा व्यवस्था धर्मशास्त्रेषूपदिष्टा दृश्यते। व्यवस्थानुकूलं, नियमानुशासितं वा लोकजीवनं यदा न प्रवर्त्तते, तदा लोकल्याण वार्तापि नैवश्रूयते। प्रत्युत धर्मशास्त्रव्यवस्थानां नियमानां वाऽतिक्रमणेन लोकजीवनं संकटापन्नम् उच्छिन्नं च भविष्यतीति स्पष्टं ज्ञातुं पार्यते। अतः धर्मशास्त्रस्याध्ययनम्, अनुशीलनम्, तदनुकूलमाचरणं च लोककल्याणाय सर्वथा प्रभवतीति मदीयं सुदृढमतमस्ति। तत्र लोककल्याणस्य कृते बहुविधाः हेतवः, विधयः, उपदेशाः सूक्तयः, आचाराः विचाराश्चोपलभ्यन्ते।

धर्मशास्त्रस्य एतन्महद्वैष्ट्यमस्ति यदत्र भौतिकसुखापेक्षया आध्यात्मिकसुखस्य, पारलौकिकसुखस्य, इहलोकापेक्षया परलोकस्य, अर्थकामापेक्षया धर्ममोक्षयोः, स्वार्थपेक्षया परार्थस्य च समधिकं महत्त्वं प्रतिपादितमस्ति। एतदर्थं मानवस्य सर्वाङ्गीणविकासाय मानवतायाः संरक्षणाय मूल्याधृतायाः गुणाधृतायाश्च शिक्षायाः व्यवस्था वेदेषु, पुराणेषु, धर्मशास्त्रेषु अन्यासु च अष्टादशविद्यासु निरूपिता विद्यते।

धर्मशास्त्रे एतानि मानवमूल्यानि क्वचित् गुणपदेन, क्वचन धर्मशब्देन, अन्यत्र च नीतिपदेनापि उपन्यस्तानि सन्ति। ये गुणाः मानवं सत्पथे, धर्मे, कल्याणमार्गे नयन्ति तस्य सर्वाङ्गीणविकासं कुर्वन्ति, तस्य यशः प्रतिष्ठां च संवर्द्धयन्ति, ते एव लोककल्याणकराः मानवगुणाः कथ्यन्ते। मूल्यरहितः मानवः न भवितुमर्हति मानवः कदापि। मूल्यरहितः नरः दानवः अर्थपिशाचो वा भवति। अत एव अस्माकं पूर्वजैः महर्षिभिः शास्त्रकारैश्च अहिंसा-सत्य-अस्तेय-शौच-अपरिग्रह-धृति-क्षमा-दम-अक्रोध-त्याग-सदाचार-दयाप्रभृतिगुणानां

सर्वाधिकं महत्त्वं शास्त्रेषु प्रतिपादितम्। एतस्मादेव कारणात् अस्माकं प्राचीनभारतीयसमाजः अतीव सुव्यवस्थितः, सम्पन्नः, समृद्धः आदर्शभूतश्च आसीत्।

किन्तु अस्माकं महद्दौर्भाग्यं यत् पाश्चात्यसंस्कृतेः प्रभावेण अद्य या शिक्षा व्यवस्था प्रचलति, तस्यां भोगवादस्य शारीरिकसुखवादस्य, भौतिकवादस्य च प्राधान्यं दृश्यते। येन सर्वत्र अशान्तिः, कोलाहलः संघर्षः हिंसा, आतङ्कः विरोधभावश्च दृष्टिपथमायाति। आधुनिकी शिक्षापद्धतिः व्यवसायोन्मुखी वर्त्तते। येन-केनापि प्रकारेण साधनेन वा अधिकाधिक-द्रव्योपार्जनमेव अस्याः उद्देश्यमस्ति। लोककल्याणकारकत्वसम्पादकानां मानवमूल्याणां गुणानां च अत्र सर्वथा उपेक्षा दृश्यते। अत एव अद्य सर्वत्र हिंसा-हाहाकार-युद्ध-अशान्ति-वैमनस्यादिना परितः आक्रान्तः मानवसमाजः अनुदिनं विनाशपथारूढो दृश्यते। अतो मानवतायाः संरक्षणाय अस्माकं प्राचीनैः शास्त्रकारैः लोककल्याणाधृतशिक्षायाः व्यवस्था वेदादिशास्त्रेषु विहितास्ति। एतया शिक्षया दुर्जनः सुजनो भवति, दानवो मानवो भवति मानवश्च देवत्त्वं व्रजति।

अस्माकं स्मृतिकारैः मनु-याज्ञवल्क्य-वशिष्ठ-नारद-बृहस्पति-प्रमुखैः लोककल्याणाश्रित-शिक्षां प्रति अर्पूवं योगदानं कृतमिति विविधस्मृतिग्रन्थानामध्ययनेन स्पष्टी भवति। "श्रुतिस्तुवेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः" मनुवचनानुसारं धर्मशास्त्रस्यैव स्मृतिरिति अपरा संज्ञा। सर्वप्रथमं शिक्षायाः मुख्यं मूलं च उद्देश्यं धर्मार्थ-काम-सेवनद्वारा परमपुरुषार्थस्य मोक्षस्य प्रप्तिरिति स्मृतिकारैः निगदितम्। यथोच्यते "सा विद्या या विमुक्तये"। अर्थकामौ न साध्यौ, अपितु परमपुरुषार्थस्य मोक्षस्य साधनभूतौ इमौ। अतः धर्मसम्मतमार्गेण जीवनयात्रार्थमर्थोपार्जनं कामसेवनं च विधाय अन्ते मोक्षप्राप्तिः शिक्षायाः समेषां शास्त्राणां च प्रमुखमुद्देश्यमस्तीति स्मृतिकाराणां मतम्। यथोक्तम् - "परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ", "धर्माविरुद्धो लोकेऽस्मिन् कामोऽस्मि भरतर्षभ" इत्यादि। अत एव धर्मलक्षणं निरूपयता महर्षिकणादेन उक्तम् - "यतोऽभ्युदय-निःश्रेयशसिद्धिः स धर्मः"। एतावता प्रतिफलति यत् ऐहलौकिकाभ्युन्नतिद्वारा पारलौकिकसुखस्य मोक्षरुपस्य परमपुरुषार्थस्य प्राप्तिः लोककल्याणाधृतशिक्षायाः परममुद्देश्यमस्ति स्मृतिकाराणां मते।

स्मृतिषु अहिंसा-सत्यास्तेयादीनामादर्शगुणानां, सदाचारस्य, विश्वकल्याणभावनायाश्च निरूपणं विस्तरेण विहितमस्ति। मानवजीवने सदाचारस्य, सच्चरित्रतायाः समधिकं महत्त्वं निगदन्ति स्मृतयः। मावनस्य विकासाय वित्तापेक्षया वृत्तस्य, चरित्रस्य, सदाचारस्य च अधिकं महत्त्वमिति प्रतिपादयन्ति धर्मशास्त्रकाराः। वस्तुतस्तु सदाचारैरेव सद्विचाराणामुत्पत्तिः संभवति।

सर्वोत्तमलोककल्याणकारकस्य 'सत्यस्य' प्रतिष्ठां प्रतिपादयन्तः शास्त्रकाराः स्पष्टमुद्घोषयन्ति -

**सत्यमेवेश्वरो लोके, सत्ये धर्मः सदाश्रितः।**
**सत्यमूलानि सर्वाणि सत्यान्नास्ति परं पदम्।।** वा.रा., अयोध्या. 109/13

"नहि सत्यात् परो धर्मः", "सत्यमेवजयते नानृतम्" इत्यादि। स्मृतिषु अहिंसा-सत्यमस्तेयब्रह्मचर्यापरिग्रहाः यमाः, शौच-सन्तोष-स्वाध्यायेश्वरप्रणिधानानि च नियमाः विस्तरेण वर्णिताः। एतेषां लोककल्याणकारकाणां मानवमूल्यानां सेवनमत्यावश्यकं मानवस्य कृते इति उपदिशति अस्मान् मनुः-

**यमान् सेवेत सततं न नित्यं नियमान् बुधः।**

**यमान् पतत्यकुर्वाणो नियमान् केवलान् भजन्।।** मनु.-4/204

स्पष्टतः नियमापेक्षया यमानां स्थानम् उच्चतरं प्रदत्तम्। समेषामपि मानवानां सामान्यधर्मान् निरूपयन् निगदति भगवान् मनुः -

**अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः।**

**एतत् सामासिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः।।** मनु.-10/63

श्लोकेऽस्मिन् सामान्यधर्मपदेन वस्तुतः लोककल्याणकराणि मानवमूल्यानि एव प्रतिपादितानि। एषु अहिंसा नाम सर्वदा सर्वथा सर्वभूतानामनभिद्रोहः। अर्थात् मनसा, वाचा कर्मणा सर्वभूतानां क्लेशाजननमेव अहिंसा। सा च परमधर्मत्वेन समुपवर्णिता स्मृतिकारैः। यथोक्तम्- 'अहिंसा परमो धर्मः' 'अहिंसार्थाय भूतानां धर्मप्रवचनं कृतम्', यः स्यादहिंसासम्पृक्तः स धर्म इति निश्चयः" इत्यादि। अतः विश्वशान्तये, त्रासनिवृत्तये, विश्वभ्रातृत्वसाधनाय, लोककल्याणाय च अहिंसा समाश्रयणीया एव। अत एव गौतमबुद्ध-महावीर-ईसामसीह-महात्मागान्धिप्रभृतयोऽपि अहिंसायाः महत्त्वं मुक्तकण्ठेन स्वीकुर्वन्ति समाजे लोककल्याणाय। 'अस्तेयं' मानवस्य अत्युत्तमः गुणः। अस्तेयस्य लक्षणं यथा-"स्तेयमशास्त्रपूर्वकं द्रव्याणां परतः स्वीकरणम्, तत्प्रतिषेधः पुनरस्पृहारुपमस्तेयमिति"। धर्मशास्त्रे स्तेनानां कृते अतिकठोरं दण्डविधानं विहितम्। एवमेव मानवस्य मानवसमाजस्य च सम्यक् विकासाय एवं लोक-कल्याणाय च शौचमनिवार्यमिति अनुमतम्। तच्च शौचं बाह्याभ्यन्तरभेदाभ्यां द्विविधम्। तत्र आभ्यन्तरशौचं हि चित्तशुद्धिः। निर्मले, शुद्धे हि चित्ते सत्यमुद्भासते, सत्कर्मधीश्च प्रजायते। शौचनिरूपणप्रसङ्गे मनुः अर्थशौचस्य अत्यधिकं महत्त्वं प्रतिपादयति। तथा च -

**सवैषामेव शौचानामर्थशौचं परं स्मृतम्।**

**योऽर्थे शुचिर्हि स शुचिर्न मृद्वारि शुचिः शुचिः।।** मनु.- 5/106

विविधविषयेभ्यो इन्द्रियसंयमः ब्रह्मचर्यव्रतपालनादिरूपः इन्द्रियनिग्रह उच्यते। अपरिग्रहः अल्पधनञ्चयः जीवनरक्षणाय न तु भोगाय। भोगवादप्रधानेऽस्मिन् कलियुगे सहस्रपतिः लक्षपतिः भवितुमिच्छति, लक्षपतिश्च कोटिपतिः भवितुमिच्छन् सदैव असन्तुष्टः व्यग्रश्च तिष्ठति। फलतः समाजः अनुदिनं दूषितो भवति। अतः लोककल्याणाय अपरिग्रहस्य महत्त्वं निरूपयन् निगदति

मनुः-

**यात्रामात्रप्रसिद्ध्यर्थं स्वैः कर्मभिरगर्हितैः।**

**अक्लेशेन शरीरस्य कुर्वीत धनसञ्चयम्।।** मनु.-4/3

किञ्च-

**यावद्भ्रियेत जठरं तावत् स्वत्वं हि देहिनाम्।**

**अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति।।**

एवमेव मानवगुणस्य सन्तोषस्य महत्त्वमुपवर्णयन् भणति मनुः -

**न जातु कामः कामानामुपभोगेन शाम्यति।**

**हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते।।** इत्यादि मनु.-2/94

वस्तुतस्तु समस्तेऽपि स्मृतिवाङ्मये लोकल्याणकराणि मावनमूल्यानि गुणाश्च धर्मपदेनाभिहिताः अतिविस्तरेण च समुपवर्णिताः। उदाहरणार्थं धर्मलक्षणं निरूपयन् मनुः प्रतिपादयति षष्ठाध्याये-

**धृतिः क्षमा दमोऽस्तेयं शोचमिन्द्रियनिग्रहः।**

**धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्।।** मनु.-6/92

एते दश सामान्यधर्माः न केवलं भारतीयानां सनातनधर्मावलम्बिनामेव कृते वा लाभप्रदाः अपितु एते सम्पूर्णमानवमात्रस्य धर्माः सार्वत्रिकाः, सार्वकालिकाः सार्वदेशिकाश्च। एतेषां धर्माणां, लोककल्याणकराणां, मानवमूल्यानां वा परिपालनेनैव मानवः आदर्शमानवः, मानवतायाः संरक्षकश्च भवितुमर्हति। अन्यथा मानवः दानवो भूत्वा मानवतायाः विनाशक एव भविष्यति।

निष्कर्षरूपेण एतदेव उच्यते यत् लोककल्याणनिरूपणे समस्तस्यापि संस्कृतवाङ्मयस्य तत्रापि विशेषरूपेण स्मृतीनां योगदानम् अत्यधिकं सर्वाधिकञ्च विद्यते इत्यत्र नास्ति संशीतिलेशोऽपि। शोधपत्रेऽस्मिन् इमे एव विषयाः विविधस्मृतीनाम् उद्धरणानि, वचनानि च समुद्धृत्य लोककल्याणस्य परिप्रेक्ष्ये विस्तरभयात् समासेन विवेचिताः इति शम्।

**सन्दर्भग्रन्थसूची-**

1. मनुस्मृतिः- मोती लाल बनारसीदास (दिल्ली)
प्रथमसंस्करण-1983

2. श्रीमद्भगवद्गीता (यथारूप)

भक्तिवेदान्त बुकट्रष्ट हरेकृष्णधाम, जुहु, मुम्बई
(द्वितीय हिन्दी संस्करण)

3. वाल्मीकिरामायणम्- (अयोध्याकाण्ड)
प्रकाशक- गीताप्रेस गोरखपुर



# ब्रह्म-पद्म-स्कन्द-नारदीयपुराणेषु जगन्नाथस्वरूपविमर्शः

- प्रो. मिनति रथः

*(भगवान् जगन्नाथ को परमेश्वर के रूप में निरूपित किया है, ऐसा शास्त्रों में उल्लेख मिलता है। भक्तों के कल्याण के लिए वे दारुब्रह्म शरीरधारण कर नीलाचल में निवास करते हैं। उस नीलगोत्राधिपति जगन्नाथ के दर्शन के लिए और उनके विषय में जानने के लिए गवेषक एवं विद्वज्जन बहुविध प्रयास करते है। शावर- जैन- बौद्ध- शाक्त एवं वैष्णव - मतानुयायी लोग अपने अपने मतों, वादों और पन्थों के अनुसार उनका स्वरूप निरूपित करते हैं। वेदों में यद्यपि श्री जगन्नाथ का स्पष्ट उल्लेख नहीं प्राप्त होता है तथापि वेदमूलक पुराणों में श्री जगन्नाथ परब्रह्म के रूप में वर्णित हैं। गरुड, कूर्म, मत्स्य, वामन, अग्नि, विष्णु पुराणों मे श्री जगन्नाथ तत्व संक्षिप्तरूप में उपलब्ध है। कपिल, नीलमत एवं कालिकादि उपपुराणों मे भी जगन्नाथ तत्व प्रतिपादित है। परन्तु ब्रह्म, पद्म, स्कन्द एवं नारदीय पुराणों में श्री जगन्नाथ विषयक तत्त्व विस्तार से वर्णित है और इन चारों महापुराणों के सम्यक् अवलोकन से ही जगन्नाथ विषयक ज्ञान पूर्ण होता है, ऐसा लेखिका का निष्कर्ष है।)*

नीलाद्रिनाथं जगतामधीशं चिदंशरूपं शरणैकनाथम्।
श्रीनीलगोत्राधिपतिं वरेण्यं सुरेन्द्रवन्द्यं प्रणतोऽस्मि नित्यम्।।[1]

वेदप्रतिपाद्यः पुरूषोत्तमः दारुब्रह्मजगन्नाथस्वरूपेण एव उत्कले नीलाचलधाम्नि निवसन् मानवीयलीलां कुरुते। शिव-राम-कृष्ण-बुद्ध-कर्तृ-कर्म-अर्हन्त्वेन सः परमेश्वरः शास्त्रादिषु बहुचर्चितः। जगन्नाथस्वरूपेण स एव परमेश्वरः भक्तानां कृते अभयदः मोक्षदश्चास्ति। तस्य स्वरूपमतीव रहस्यमयं विद्यते। तथापि विद्वांसः तद् भेदयितुं निरन्तरं प्रयासं कुर्वन्ति। शास्त्रेषु काव्यनिचयेषु च श्रीजगन्नाथस्य स्वरूपं बहुभावेन समुपस्थापितं विद्यते। वेदेषु यद्यपिश्रीजगन्नाथस्य स्पष्टोल्लेखःनैव प्राप्यते तथापि तन्मूलकेषु पुराणेषुश्रीजगन्नाथः परबह्मरूपेणाभिवन्दितः। रूद्रयामल-तन्त्रयामलादिषु तन्त्रग्रन्थेषु श्रीजगन्नाथस्य चर्चा विस्तरतः विद्यते। तन्त्रशास्त्रे श्रीजगन्नाथः भैरवत्वेनाभिहितः।

नैषधीयचरित-प्रबोधचन्द्रोदय-वेणीसंहार-अनर्घराघवादिषु च श्रीजगन्नाथः पुरूषोत्तमत्वेन स्वीकृतः। संस्कृतकाव्येषु नाटकेषु च तस्य भगवत्त्वं सुस्वीकृतम्। कविशेखरः श्रीजयदेवः श्रीजन्नाथस्य महान् भक्तः आसीत्। श्रीकृष्णरूपिणं जगन्नाथं नायकत्वेन स्वीकृत्य गीतगोविन्दनामकं सुमहत् गीतीकाव्यं तेन विरचितम्।

श्री गीतगोविन्दे दशावतारवर्णने "जगदीश" इति पदं जगन्नाथमेव सङ्केतयति। कपिलसंहिता-शून्यसंहिता-वामदेवसंहितादिषु संहिताग्रन्थेषु नीलाद्रिमहोदयादिषु च ग्रन्थेषु जगन्नाथतत्त्वं भूरिशः प्रतिपादितम्।

गरुड-कूर्म-मत्स्य-वामन-अग्नि-विष्णु-पुराणेषु जगन्नाथतत्त्वं संक्षिप्तरूपेण प्रकाशितमस्ति। कपिल-नीलमत-कालिकादिषु उपपुराणेषु चजगन्नाथतत्त्वं प्रतिपादितं विद्यते। परन्तु ब्रह्म-पद्म-स्कन्द-नारदीयपुराणेषुश्रीजगन्नाथस्य तत्त्वं स्वरूपन्च विस्तरतः प्रकाशितं वर्तते। एतेषा चतुर्णां महापुराणानां सम्यगवलोकनेन एव श्रीजगन्नाथविषयकं ज्ञानं पूर्णतामेति। अतोऽत्र प्राथम्येन ब्रह्म-पद्म-स्कन्द-नारदीयपुराणेषु श्रीजगन्नाथस्य तत्वं स्वरूपञ्च विचार्यते।

**विषयप्रकारः- (क)**

**आद्यं सर्वपुराणानां पुराणं ब्राह्ममुच्यते।**
**अष्टादशपुराणानि पुराणज्ञाः प्रचक्षते।।**[2]

विष्णुपुराणानुसारम् अष्टादशपुराणेषु ब्रह्मपुराणमाद्यं धर्मकामार्थमोक्षदं भागद्वयसमन्वितं सर्वसौख्यप्रदायकं वैष्णवपुराणमस्ति। यस्य श्लोकसंख्या पद्म-लिङ्ग-कूर्मपुराणानां मतानुसारेण त्रयोदशसहस्राणि भवितुमर्हति। महर्षिमरीचिमुद्दिश्य ब्रह्मणा प्रोक्तमिदं पुराणं पुराणपञ्चलक्षणं सम्यक् समन्वेति। पुराणेऽस्मिन् भारतवर्षस्य तीर्थयात्राप्रसङ्गें बहुतीर्थक्षेत्राणां वर्णनं प्राप्यते। पुराणस्यास्यादिभागे (28-63) एकचत्वारिंशदध्यायेषु जगन्नाथक्षेत्रस्य महन्महत्त्वं प्रकाशितं विद्यते। पुरूषोत्तमक्षेत्रवर्णने तत्रस्थितानां लक्षीयसां तीर्थानामुत्कृष्टो महिमा तत्र निरूपितः कोणार्कक्षेत्रस्य महती प्रशंसा तत्र कृता विद्यते तथाच गुण्डीचायात्रायाः महिम्नः ललामगानं प्राप्यतेऽस्मिन् महापुराणे। गुण्डिचायात्रा पुराणेऽस्मिन् गुण्डिवायात्रेति प्रोक्ता-

**गुण्डिवामण्डपं यान्तं ये पश्यन्ति रथे स्थितम्।**
**कृष्णं बलं सुभद्रां च ते यान्ति भवनं हरेः।।**

जगन्नाथतत्त्वपरिपूर्णेऽस्मिन् सुप्राचीने पुराणे जगन्नाथतत्त्वनिरूपणे बहुनि रोचकानि नवीनानि च तथ्यानि सम्मुखमायान्ति येषां पठनेन मनसि जगन्नाथतत्त्वस्य स्वरूपस्य च वास्ताविकतायाः ज्ञानं जायते। जगन्नाथस्वरूपनिरूपणप्रसङ्गे पुराणेऽस्मिन् वर्णितं यत् तस्मिन् क्षेत्रवरे पुण्ये श्रीपुरूषोत्तमे बहुप्राचीनकालात् श्रेष्ठाइन्द्रनीलमयी सार्वकामिकी प्रतिमा पूजिता भवति स्म। तां दृष्ट्वा मानवाः मोक्षं प्राप्नुवन्ति। अनेन स्वकीयं व्यापारनाशं विज्ञाय वैवश्वतः यमः भगवन्तं सर्वं निवेदयामास। तद् निशम्य स भगवान् सिकताभिः आत्मनः प्रतिमां गोपयामास।

परमवैष्णवः इन्द्रद्युम्नः नीलामाधवदर्शनार्थं क्षेत्रं प्रति आगत्य प्रतिमायाः अदर्शनविषयं ज्ञात्वा तत्र जगत्पतेः विष्णोःआराधनार्थमुपायमचिन्तयत्। तदर्थं प्राथम्येन प्रासादनिर्माणार्थं तेन प्रयासः विहितः प्रासादनिर्माणार्थमिन्द्रद्युम्नस्य राज्ञामाह्वानं पुराणस्यास्य निजस्वं वैशिष्ट्यमभिव्यनक्तिः। राज्ञः प्रेरयित्वा तेनोक्तम् -

**गच्छध्वं सहिताः सर्वे शिलार्थे सुसमाहिताः**
**गृहीत्वा शिल्पिमुख्यांश्च शिल्पकर्मविशारदान्।।**

विन्ध्याचलं सुविस्तीर्णं बहुकन्दशोभितम्
निरूप्य सर्वसानूनि च्छेदयित्वा शिलाः शुभाः।।
संवाह्यन्तां च शकटैर्नौकाभिर्मा विलम्बथ।[3]

इन्द्रद्युम्नेनाहूताः भूपाः तथैव चक्रुः, धनरत्नैश्च ववृषुः इति ब्रह्मपुराणस्याभिमतम्।

अस्मात् ज्ञायते यत् विन्ध्याचलशिलाभिः प्रासादनिर्माण-कार्यमभूत्। तथाच प्रासादनिर्माणकार्यं प्रागेव जातमनन्तरञ्चप्रतिमोप्तत्तिःजाता।

प्रतिमानिर्माणविषये चात्र प्रदत्तं तथ्यं नवीनं प्रतीयते यत् रात्रौ स्वप्नदर्शनात् प्रभाते स्वप्नानुसारं हस्ते परशुमादाय स महीपतिः सागरे स्नात्वा पौर्वाह्णिकं कृत्वा एकाकी स महावेलां प्रविश्य जलान्तिकं महाकायं तेजस्वन्तं महाद्रुमं नामजातिविवर्जितं सान्द्रमञ्जिष्ठावर्णाभं तद् अनिर्वचनीयं वृक्षं विलोक्य स राजा परशुना शातयामास। यदा स वृक्षं द्वैधीकर्तुमुद्यतोऽभूत् तदा विप्ररूपधरौ ज्वलमानौ महाभागौ तत्रागत्य उक्तवन्तौ-

तावुचतुर्महाराज किमत्र त्वं करिष्यसि
किमर्थं च महाबाहो शातितश्च वनस्पतिः।।
असहायो महादूर्गे निर्जने गहने वने
महासिन्धुतटे चैव कथं वै शातितो द्रुमः।।[4]

'देवदेवमनाद्यन्तमनन्तं जगतां पतिमाराधयितुं तस्य प्रतिमां च निर्मातुं मम मतिरस्ति' नृपतेः एतादृशं वचनं निशम्य स विप्ररूपधृक् विष्णुः विश्वकर्मणा प्रतिमानिर्माणं भविष्यतीति राजानमाश्वासयामास। तत्रोपस्थिताय शिल्पिमुख्याय च प्रतिमानिर्मातुमादिदेश। प्रतिमानां स्वरूपं स्वयं भगवता विष्णुना यदुक्तं श्रीब्रह्मपुराणे-

कृष्णरूपं परं शान्तं पद्मपत्रायतेक्षणम्।
गौराङ्गक्षीरवर्णाभं द्वितीयं स्वस्तिकाङ्कितम्
लाङ्गलास्त्रधरं देवमनन्ताख्यं महाबलम्।
देवदानवगन्धर्वयक्षविद्याधरोरगैः ।
न विज्ञातो हि तस्यान्तस्तेनानन्त इति स्मृतः।
भगिनीं वासुदेवस्य रुक्मवर्णां सुशोभनाम्।
तृतीयां वै सुभद्रां च सर्वलक्षणलक्षिताम्।।[5]

महापुराणेऽस्मिन् श्रीजगन्नाथस्य स्वरूपविषये तथ्यद्वयं समुपलभ्यते। प्रथमतया पुराणेऽस्मिन् चतुर्व्यूहोपासनायाः प्रभावः न परिलक्ष्यते येन सुदर्शनस्य वर्णनमत्र प्रदत्तं नास्ति। केवलं त्रिमूर्त्तिधरस्य जगन्नाथस्य प्रतिपादनमुपलभ्यते। अनेन पुराणस्यास्य प्राचीनत्वञ्च सिद्ध्यति। सुदर्शनस्योपासना कालान्तरे संयोजिता इति अनुमीयते। द्वितीयतः नानामतवादैः जगन्नाथस्य स्वरूपमत्र क्लिष्टं न दृश्यते। श्रीजगन्नाथः विष्णोः अवतारभूतः श्रीकृष्णः इति पुराणस्यास्याभिमतम्। श्रीब्रह्मपुराणे षट् चत्वरिंशदध्याये जगन्नाथः स्वयं श्रीकृष्ण इति प्रतिपादितः तद्यथा-

वटस्य दर्शनं चैव व्यष्टिं तस्य च भो द्विजाः।
दर्शनं बलदेवस्य कृष्णस्य च विशेषतः।।

तस्याग्रजः बलभद्रः रोहिणीनन्दनः अनन्तस्यांशविशेष; तथा च आदिशक्ति; योगमाया रोहिणीगर्भसम्भूता सुभद्रा कृष्णबलभद्रयोः भगिनीरूपेणात्र अवतरिता। अन्यत्र सुभद्राविषये बहुमतवादाः दृश्यन्ते येन सुभद्रायाः स्वरूपविषये मनसि भ्रान्ति उत्पद्यते। स्कन्दपुराणस्य स्थलविशेषे सुभद्रा लक्ष्मीरितिसम्भावना व्यक्तीकृताऽस्ति।

परन्तु तादृशं मत-मतान्तरं पुराणेऽस्मिन् नोपलभ्यते। श्रीजगन्नाथः न सुभद्राकान्तः अपितु लक्ष्मीकान्तः रमाकान्तः एवेति दृढनिश्चयः पुराणस्यास्य महिमानं गरिमानञ्च द्रढयतीति नास्ति संशयलेशः।

**पद्मपुराणे श्रीजगन्नाथः- ( ख )**

अष्टादशपुराणेषु कलेवरदृष्ट्या स्कन्दपुराणानन्तरं पद्मपुराणं द्वितीयं स्थानमधिकरोति। पुराणस्यास्य श्लोकसंख्या 55 सहस्राणि सन्तीति ब्रह्मवैवर्तपुराणस्याभिमतम् -

पञ्चोनषष्टिसाहस्रं पाद्ममेव प्रकीर्तितम्।[6]

पञ्च (मतान्तरे सप्त) खण्डात्मकमिदं पुराणं विष्णुभक्तिसम्बलितं साहित्यदृष्ट्या अतीवसमृद्धञ्चास्ति।

तथाचात्यन्तोपयोगिनां विषयाणाञ्चोपस्थापनं विधाय पुराणमिदं मानवजातेः बहुविधं कल्याणं साधयति। विष्णुतत्त्वसम्बलितेऽस्मिन् पुराणे श्रीजगन्नाथस्य सम्पूर्णं स्वरूपं तत्त्वञ्च निरूपिते विद्येते। पद्मपुराणानुसारेण जगन्नाथः स्वयं पुरूषोत्तमः विष्णुः पुराणेऽस्मिन् पातालखण्डे यद्यपि जगन्नाथ-बलभद्र-सुभद्रा-सुदर्शनानां नामोल्लेखः न विद्यते तथापि खण्डेऽस्मिन् भगवतः पुरूषोत्तमस्य तथाच तस्य क्षेत्रस्य महन्महत्त्वं प्रतिपादितम्।

सुमतिशत्रुघ्नयोः संवादमाध्यमेन पुराणेऽस्मिन् पुरूषोत्तमदर्शनेन काञ्चीनरेशस्य रत्नग्रीवस्य मोक्षप्राप्तिवृत्तं वर्णितं विद्यते, यत् प्राचीनकाले काञ्चीप्रान्ते रत्नग्रीवनामकः परमोदारः प्रजावत्सलः नरपतिः धर्मेण प्रजाः पालयति स्म। कालान्तरे तस्य मनसि मोक्षप्राप्तिकामना जज्ञे। रात्रो स्वप्ने स कमपि जटिलब्राह्मणं ददर्श। तादृशमेकं ब्राह्मणं प्रभाते राजसभामध्येविलोक्य स राजा चकितो बभूव। तस्य पूजनं कृत्वा स्वाभिलाषप्राप्तये ब्राह्मणं च पप्रच्छ-

कोदेवो गर्भनाशाय किं तीर्थञ्च विज्ञाय स राजा पुरुषोत्तमक्षेत्रं गन्तुमुद्यतोऽभूत्। तत्र गन्तुं स्वबान्धवान् चादिश्य तेनोक्तं यत् -

**गच्छन्तु त्वरितालोकाः राज्ञा सह महागिरिम्।**
**दृश्यतां पापसंहारी पुरूषोत्तमनामधृक्।।**
**क्रियतां सर्वसंसारसागरो गोष्पदं पुनः।**
**भूष्यतां शङ्खचक्रादिचिन्हैः स्व स्व तनुर्नरैः।।[7]**

अनन्तरं काञ्चीनरेशः सकुटुम्बः सामात्यपरिजनः तीर्थयात्रायां पुरूषोत्तमक्षेत्रं प्रति आयाति। गण्डकीनद्यां स्नात्वा तर्पयित्वा ततः गङ्गासागरसङ्गमे स्नानं करोति। तत्रैव जटिलब्राह्मणमुखात् नीलपर्वतस्यावस्थितिं विज्ञाय स राजा नीलपर्वतं द्रष्टुम् उद्यमं करोति। परन्तु नीलपर्वतः तेन न दृष्टः। नीलपर्वतं भगवन्तं पुरूषोत्तमञ्च न दृष्ट्वा अतीव शोकाविष्टः स राजा जटिलब्राह्मणं

नीलपर्वतस्यावस्थितिं पृच्छति। परन्तु कण्टकदुर्गमे तत्स्थले नीलपर्वतस्य स्थितिं ज्ञातुं सोऽपि ब्राह्मणः समर्थो नैव भवति। तद्यथा पद्मपुराणे–

**स्वामिन्वद कियद्दूरे नीलाख्यः पर्वतो महान्।**
**पुरूषोत्तमसंवासः सुरासुरनमस्कृतः।**
**तदा श्रुत्वा महद्वाक्यं रत्नग्रीवस्य भूपतेः।**
**स्थातव्यं तावदेवात्र यावन्नीलो न दृश्यते।।**
**गीयते पापहा देवः पुरूषोत्तमसंज्ञितः।**
**करिष्यते कृपामाशु भक्तवत्सलनामधृक्।।[8]**

तदनन्तरं पुराणेऽस्मिन् रत्नग्रीवस्य भूपतेः स्वप्ने नीलपर्वतदर्शनं वर्णितम्। भूपतेः परया भक्त्या तुष्टः भगवान् पुरूषोत्तमः नीलपर्वतेन सह तत्रैव चात्मानं प्रकटयामास। तस्य दर्शनेन नैवेद्यभक्षणेन च रत्नग्रीवः परं मोक्षमवाप।

पुराणेऽस्मिन् पातालखण्डे पुरूषोत्तमक्षेत्रस्य भगवतः पुरूषोत्तमस्य च प्रसिद्धेः सूचना प्राप्यते परन्तु क्षेत्रस्यास्य अवस्थितिविषये अपि च जगन्नाथदेवस्य स्वरूपविषये चात्र स्पष्टं चित्रं नैव अवाप्यते। परन्तु खण्डेऽस्मिन् जगन्नाथश्रीरामचन्द्रश्रीकृष्णश्चेतेषां मध्ये ऐक्यं स्थापितम्। भगवतः विष्णोः स्वरूपभूतोऽस्ति श्रीजगन्नाथइति पुराणस्यास्याभिमत्। अनेनास्या प्राचीनत्वं सिद्ध्यति।

पद्मपुराणस्य क्रियायोगसारखण्डेऽपि जगन्नाथतत्त्वं वर्णितं विद्यते। खण्डेऽस्मिन् जगन्नाथ–बलभद्र–सुभद्रा–चैतासां देवतानां नामोल्लेखो विद्यते। पुरूषोत्तमक्षेत्रस्याप्युल्लेखः तत्रैव प्राप्यते। अन्येषां क्षेत्रस्थितानां तीर्थानां

यात्राणाञ्च वर्णनं तत्र प्रदत्तम्। गुण्डिचायात्रायाः महत्त्वपूर्णं वर्णन तत्रैव वर्तते। रथयात्रायाः महत्त्वं तत्र यथाचोक्तं–

**गुण्डिचामण्डपस्थं च कृष्णं पश्यति यः पुमान्।**
**बलभद्रं सुभद्रां च स याति परमं पदम्।।[9]**

इत्थं पद्मपुराणस्य क्रियायोगसारखण्डः त्रिमूर्त्तेः पुरूषोत्त्मजगन्नाथस्य स्वरूपं तत्त्वञ्च स्पष्टमुद्घोषयति।

**स्कन्दपुराणे श्रीजगन्नाथः- ( ग )**

स्कन्दपुराणनुसारं रम्ये कैलासशिखरे भगवान् शङ्करो देवीं पार्वतीं स्कन्दपुराणं प्रोक्तवान्। देवी पार्वती स्कन्दं चात्रिकुमाराय, तेन च व्यासाय, व्यासेन सूताय, तेन च ऋषिभ्यो पुराणमिदं प्रकथितमभूत्। नारदीयपुराणे उक्तं यत् कार्तिकेयेन यत्र माहेश्वरधर्माः प्रकाशिताः, तदस्ति स्कन्दपुराणं यस्य श्लोकसंख्या एकाशीति सहस्राणि सन्ति। तत्र सप्तखण्डाश्च वर्तन्ते। तद्यथा–

**स्कन्दाह्वयस्यात्र खण्डाः सप्तैव परिकल्पिताः।**
**एकाशीतिसहस्त्रं तु स्कान्दं सर्वाद्यकृन्तनम्।।**

यः श्रृणोति पठेद्वापि स तु साक्षात्छिवः स्थितः।
यत्र माहेश्वराः धर्माः षण्मुखेन प्रकाशिताः।।
कल्पे तत्पुरूषे वृत्ताः सर्वसिद्धिविधायकाः।[10]

शिवपुराणानुसारेण स्कन्दपुराणस्य वक्ता साक्षान्महेश्वरः तथा च श्रोता स्वयं स्कन्दः एवास्ति। तस्य श्लोकसंख्या एकाशीति सहस्त्राणि निगद्यते–

यत्र स्कन्दः स्वयं श्रोता वक्तासाक्षान्महेश्वरः।
तत्तु स्कान्दं समाख्यातमाशीति सहस्त्रकम्।।[11]

तत् यत् किमपि भवतु स्कन्देन सम्बन्धितमिदं पुराणं सप्तषु खण्डेषु विभक्तमस्ति। (1) माहेश्वरखण्डः (2) वैष्णवखण्डः (3) ब्रह्मखण्डः (4) काशीखण्डः (5) अवन्तीखण्डः (6) तापीखण्डः (नागरखण्डः) (7) प्रभासखण्डश्चेति। तत्र द्वितीये वैष्णवखण्डयोत्कलखण्डे जगन्नाथमन्दिरपूजाविधि– प्रतिष्ठातत्सम्बन्धिनामाख्यानानां संग्रहः तथा नारदोपदेशेन इन्द्रद्युम्नद्वारा जगन्नाथोपासनोपक्रमः विस्तृतरूपेण प्रवर्णितो विद्यते। जगन्नाथपासनोपक्रमे श्रीजगन्नाथस्यस्वरूपं तत्र सुष्ठुतयोपस्थापितम्। नीलमाधवोपासनायाः वर्णनंतत्र प्राथम्यं भजते। यतः नीलमाधवो भवति श्रीजगन्नाथस्य प्राग्रूपम्। नीलमाधवस्य स्वरूपं यथास्कन्दपुराणे–

सर्वाशाद्योतको देवो नीलाद्रेरूपरि स्थितः।
भक्त्या प्रणम्य दृष्ट्वाऽयंदेहबन्धात्प्रमुच्यते।।
वामपार्श्वगतालक्ष्मीराश्लिष्टापद्मपाणिना।
वल्लकीवादनपरा भगवन्मुखलोचना।।
सर्वलावण्यवसतिः सर्वालङ्कारभूषिता।
तावपयं हि जगतः पितरावच्चलस्थितौ।।
तूष्णीभूतौस्मेरदृशाऽनुगृह्णन्तौ च पश्यतः।
सजीवौ तावबुधं भो दीनानुग्रहकारणात्।।
छत्रीभूतफणावृन्दः शेषः पश्चादवस्थितः।।
अग्रे व्यवस्थितं दृष्टं वपुर्बिभ्रत्सुदर्शनम्।
एवमद्भुतरूपन्तं दृष्ट्वा साक्षाच्छ्रियः पतिम्।।
चेतो रज्जुभिराकृष्टामिव तत्रैव धावति।[12]

जगन्नाथपुर्याः प्राचीनेतिहासवर्णनं खण्डस्यास्य वैशिष्ट्यमभिव्यनक्ति। श्रीस्कन्दमहापुराणे वैष्णवखण्डे पुरूषोत्तमक्षेत्रमाहात्म्ये भगवतः जगन्नाथस्य सम्पूर्ण स्वरूपं पूजाविधानं यात्राविधिकथनं तथाच पुरूषोत्तमक्षेत्रस्यापि सम्पूर्ण विवरणं प्रकाशितं विद्यते। उत्कलदेशस्थितानां तीर्थानामपि विवरणमत्रैव प्रकाशितम्। जगन्नाथस्य स्वरूपविषये श्रीस्कन्दपुराणे स्पष्टचित्रं प्राप्यते। तत्र जगन्नाथः दारुमयब्रह्मविग्रह इति अभिहितः –

एवं दयाम्बुधिरसौ तस्मिन्नीलाचले वसन्।
दीनानाथानुग्रहाय दारुव्याजशरीरवान्।।

**न हि काष्ठमयी मोक्षं ददाति प्रतिमा क्वचित्।**
**आकृतेह्यपवर्गस्तु कृताद् वा दारुणः कथम्।।[13]**

स्कन्दपुराणे उत्कलखण्डे श्रीजगन्नाथः स्वयं ब्रह्मेति निरूपितः-

**पुरूषोत्तमाख्यं सुमहत्क्षेत्रं परमपावनम्।**
**यत्राऽऽस्ते दारवतनुः श्रीशो मानुषलीलया।**
**दर्शनान्मुक्तिदः साक्षात्सर्वतीर्थफलप्रदः।।[14]**

न केवलं जगन्नाथस्य तस्य क्षेत्रस्यापि महन्महत्त्वं पुराणेऽस्मिन् प्रतिपादितमस्ति। नीलामाधवोपासनानन्तरं श्रीस्कान्दे महापुराणे श्रीजगन्नाथदेवस्योपासनाक्रम; निरूपितो विद्यते। अनन्तरं पुराणेऽस्मिन् मालवनरेशस्येन्द्रद्युम्नस्य श्रीक्षेत्रागमनं वर्णितं विद्यते। तत्रागत्य श्रीनीलमाधवस्यान्तर्धानसम्वादं विज्ञाय नारदेनोपदिष्टः इन्द्रद्युम्नः शतहयमेधेन भगवन्तं विष्णुमाराधयामास। भोजनेन दानेन चाप्यायिताः सर्वे इन्द्रद्युम्नाय शुभाशिषं दत्तवन्तः। रात्रौ स्वप्ने इन्द्रद्युम्नः श्वेतद्वीपपतिं विष्णुं ददर्श। प्रभाते अवभृतस्नानोद्यतः स नृपतिः सेवकेभ्यो विज्ञापितोऽभूत् यत् महोदधेः तटभूमौ स्नानवेश्मसमीपे मञ्जिष्ठवर्णः सर्वत्र शङ्खचक्राङ्कितः प्लवमानः अत्यद्भुतः देववृक्षः आविर्भूतः इति। तद् निशम्य स राजा नारदेन सह वेलेश्वरसमीपं गत्वा दारूदर्शनस्य कारणं नारदं पप्रच्छ। तदा नारदेनोक्तम् -

**उपस्थितं ते तद्भाग्यं स्वप्ने यद् दृष्टवान् पुरा।**
**श्वेतद्वीपे विश्वमूर्त्तिर्दृष्टो योविष्णुरव्ययः।।**
**तदङ्गस्खलितं रोम तरुत्वमुपपद्यते**
**अंशावतारः स्थाणुर्यः पृथिव्यां परमेष्ठिनः।।[15]**

चतुः शाखं चतुर्भुजं भगवदद्रुमं विलोक्य नारदवचसा राजा महावेद्यां तद् स्थापयामास। पूजावसाने राजा विष्णोः कीदृशी प्रतिमा निर्मिता भवेत्? कश्च पुनः प्रतिमां घटयिष्यतीति चिन्ताकुलोऽभूत्। तदा अशरीरा वागभूत् यत् -सुगुप्तायां महावेद्यां स्वयं सोऽवतरिष्यति।

**प्रच्छाद्यतां दिनान्येषायावत्पञ्चदशानि वै।**
**उपस्थितोऽयं यो वृद्धशस्त्रपाणिस्तु वर्द्धकिः।**
**एनमन्तः प्रवेश्यैवद्वारं बध्नन्तु यत्नतः।।[16]**

तदनुसारं वृद्धवर्द्धकिना पञ्चदशदिनाभ्यन्तरे कृष्ण-बलदेव-सुभद्रा-सुदर्शनानां प्रतिमाः निर्मिताः। इथं चतस्रो मूर्तयः प्रकाशिताः अभवन्। स्कन्दपुराणानुसारं श्रीजगन्नाथः चतुर्मूर्त्तिधरोऽस्ति। श्रीजगन्नाथः साक्षात् विष्णुः। सोऽपि नृसिंहः रामः प्रतिपादितः। सा च कृष्णावतारे रोहिणीगर्भसम्भवा साक्षात् सुभद्रा एवाऽऽसीत्। पुराणेऽस्मिन् सुभद्रायाः कृते श्रीः लक्ष्मीःइति शब्दानां प्रयोगाः प्राप्यन्ते ये प्रायशः अन्येषु पुराणेषु नैव प्रयुक्ताः विद्यन्ते। तान्त्रिकतायाः अयं प्रभावः इति समालोचकैः अनुमीयते। पुराणस्यास्य सप्तविंशाध्याये सुभद्रायाः स्वरूपप्रतिपादनम् आदिशक्तिजगन्मातृरूपेणाऽपि कृतं विद्यते। तद्यथा-

**कार्यकारणकर्त्रीत्तं शर्वशक्त्यै नमोऽस्तुते।**
**सर्वस्य हृदि सम्विष्टेज्ञानमोहात्मिके सदा।।[17]**

तथाच-

**जय भद्रे! सुभद्रे ! त्वं सर्वेषां भद्रदायिनि।**
**भद्राभद्रस्वरूपे त्वं भद्रकाली नमोऽस्तु ते।।**[18]

सुदर्शनस्यापि विष्णुचक्रत्वेन पुराणेऽस्मिन् महन्महत्त्वं प्रकाशितं वर्तते। इत्थं चतुर्मूर्तेः भगवतः जगनाथस्य स्वरूपं प्रकाशितं श्री स्कान्दे महापुराणे वैष्णवखण्डे पुरुषोत्तममाहात्ये।

(घ) नारदीयपुराणे श्रीजगन्नाथः - वैष्णवमतसम्बलिते नारदीयपुराणे उत्तरखण्डे 52 अध्यायात् 61 अध्यायं यावत् जगन्नाथतत्त्वं प्रतिपादितम्। पुराणेऽस्मिन् उत्तरखण्डस्य 52 अध्याये दक्षिणसमद्रस्य तीरे उत्कलदेशे पुरूषोत्तमे सुभद्रा-बलभद्र-कृष्णञ्चाराध्य इन्द्रद्युम्ननृपतेः परमपदप्राप्तिवृत्तान्तं वर्णितम्। 53 अध्याये अश्वमेधयज्ञावसरे इन्द्रद्युम्नकृता भगवत्स्तुतिः वर्णिता। 54 अध्याये नरपतेः स्तवेनसन्तुष्टस्य भगवतः स्वप्ने इन्द्रद्युम्नकृते आश्वासनावाक्यैः प्रवोधनं तथाच सिन्धुकूलाश्रितं वृक्षमुत्पाट्य तेन दारुणा मूर्त्तिनिर्माणार्थमाज्ञाप्रदानञ्चोपस्थापितें पुराणमुनिना। ततः प्रभाते भगवतः निर्देशानुसारेएण राजा समुद्रतीरं प्रति गत्वा वृक्षमुत्पाट्य तत्र विष्णुं विश्वकर्माणं च साखात्कृत्य भगवतः निर्देशेन देवतानां मूर्ति निर्माय शुभे मुहूर्ते च प्रतिष्ठां चकार। अनन्तरं पुराणेऽस्मिन् भगवतः दर्शनेन नृपतेः मोक्षप्राप्तिवृत्तान्तश्च प्रवर्णितो विद्यते।

55 अध्याये ज्येष्ठशुक्लैकादश्यां पुरूषोत्तमक्षेत्रगमनं तत्र मार्कण्डेयह्लदे शिवं प्रणस्य अनन्तरं वटवृक्षं परिक्रम्य पुरूषोत्तदर्शनं तत्र नृसिंहस्याराधनञ्चेते विषयाः वर्णिताः विद्यन्ते। 56 अध्याये अनन्तमत्स्यमाधवदर्शनमाहात्म्यं तथा ज्येष्ठा नक्षत्रे समुद्रे स्नानयोगविधानन्च प्रदत्तम्। 57 अध्याये समुद्रतटे मङ्गलाचरणपूर्वकं मङ्गलघटमध्ये भगवत् पूजनविधानं प्रवर्णितमस्ति। 58 अध्याये पुरूषोत्तमक्षेत्रे समुद्रे स्नान-दान-पितृश्राद्धस्य फलञ्ज निरूपितं विद्यते। अध्यायेऽस्मिन् गोलोकराधाकृष्णयोश्च तत्त्वं प्रकाशितम्। 60 अध्याये ज्येष्ठशुक्लदशमीतः पूर्णिमां यावत् रामसुभद्रा कृष्णञ्चावालोक्य महायात्राफलं लभेदिति प्रतिपादितम्।61 अध्याये पुरूषोत्तमक्षेत्रमाहात्म्ये तथा च क्षेत्रयात्राफलञ्चोल्लिखिते।

वसुमोहिनीसम्वादमाध्यमेन तीर्थयात्रावर्णनेपुराणेऽस्मिन् पुरूषोत्तमजगन्नाथस्य महन्महत्त्वं प्रकाशितम्। तत्र श्री जगन्नाथः निर्गुणब्रह्मणः सगुणावतारः इति निरूपितः-

**एकस्त्वं हि हरे व्यापी चित् स्वभावो निरञ्जनः।**
**पुरूषोत्तमविष्णोस्तु क्षेत्रमुक्तिविधायकम्।।**
**श्रुयते हि पुराणेषु वर्णितं मुनिभिर्द्विजैः।**
**आस्ते तीर्थवरं देवी विख्यातं पुरूषोत्तमम्।**
**न तेन सदृशं किञ्चित्त्रिषु लोकेषु विद्यते।।**[19]

नारदप्रोक्तमिदंपुराणं वैष्णवधर्मस्य प्रचारकं प्राचीनं पुराणमस्ति। इत्थं चतुर्षु महापुराणेषु वर्णितं जगन्नाथतत्त्वंस्वरूपञ्चात्र प्रमुखतयाविचारितम्। जगन्नाथतत्त्वज्ञानाय एतानि पुराणान्येवप्रमुखसाधननि भवन्ति। तानि विहायान्यत्र जगन्नाथतत्त्वसम्बलितमेतादृशं प्रामाणिकं

तथ्यं नैवोपलभ्यते। एषु पुराणेष्वेव जगन्नाथविषयकं सम्पूर्ण तत्त्वं प्रदत्तं विद्यते। यत् तत्त्वजिज्ञासूनां तथाच भक्तानां कृते अतीवोपादेयं वर्तते–

ये नीलमूर्तिं विमलाम्बराभं ध्यायन्ति विष्णुं पुरुषोत्तमस्थम्।
ते क्षीणबन्धाः प्रविशन्ति पुरं हि यत् प्राप्य न शोचतीह।।[20]

इति शम्

**सन्दर्भा :-**

1.–वा.सं. 1.1
2. ब्रह्मपुराणम–66/9
3. ब्र.पु. 50.26.28
4. ब्र.पु. 50/43-46
5. ब्र.वै. 3/13/11
6. प.पु.पा.ख. 29 /44-45
7. प.पु. पा.ख. 21/6-8/10
8. कि.यो.सा.ख. 13/44
9. ना.पु.104/ 3-5
10. शि.पु.उ.सं.44/133
11. वै.ख.उ.ख 10/18, 31-36
12. 2 वै.ख, उ.ख. 45/16
13. 2 वै.ख, उ.ख. 1/2-3
14 स्क.पु.वै.ख.उ.ख 18-12,13
15. स्क.पु–वै.ख.उ.ख. 18 / 38-36
16. स्क.पु–वै.ख.उ.ख. 27 / 53
17. स्क.पु–वै.ख.उ.ख. 27 / 56
18– नारदीयपुराणे 52/56
19. स्क.पु.वै.ख.उ.ख. 10/411.–वा.सं. 1.1
20.

**सहायकग्रन्थसूची-**

1. अग्निपुराणम् – चौखम्बासंस्कृतसंस्थानम् , वाराणसी–1966
2. अथर्ववेदः – रामकुमाररायः, चौखम्बा, वाराणसी, 1976
3. अष्टादशपुराणदर्पणम् – ज्वालाप्रसादमिश्रः, नाग्पब्लिसर्स, जवाहरनगर, दिल्ली, .990
4. ऋग्वेदः– श्रीपाददामोदरः, स्वाध्यायमण्डल, पारश्री, 1995
5. पद्मपुराणम् – गोविन्दभवनकार्य्यालय, गीताप्रेस, गोरखपुर।

6. पुराणपर्यालोचनम् – चौखम्बासुरभारतीयप्रकाशनम् , वाराणसी, 1965
7. पुराणविमर्शः– चौखम्बाविद्याभवन, वाराणसी, 1963
8. ब्रह्मपुराणम् –नागपब्लिसर्स, दिल्ली, 1985



# स्वातन्त्र्योत्तरोत्तरप्रदेशीयसंस्कृतमहाकाव्येषु ध्वनितत्त्वम्

- प्रो. प्रभुनाथद्विवेदी

*(भारत में संस्कृत महाकाव्यों की परम्परा आदिकविवाल्मीकि से लेकर अद्य पर्यन्त अबाधगति से चली आ रही है, जो आज भी विविध विषयों पर आधारित गुणालङ्कारध्वनियुक्त काव्यों का नित्य नूतन सृजन कवियों द्वारा किया जा रहा है। कवि श्रेष्ठ आचार्य राजेन्द्र मिश्र जी के शब्दों में "स्वातन्त्र्योत्तर काल अर्वाचीन संस्कृत वाङ्मय का स्वर्णयुग है"। इस काल में अबतक प्रायः पांच सौ काव्यों की रचनायें हुई हैं, जिसमें सौ से अधिक रचनायें तो केवल उत्तर प्रदेश की हैं और यह काव्य प्रणयन की उदात्त परम्परा उत्तर प्रदेश में अविच्छिन्न रूप से आज भी प्रवहमान है। वस्तुतः स्वातन्त्र्योन्तर उत्तरप्रदेशीय संस्कृत काव्यों में ध्वनि की दृष्टि से समीक्षा एक बृहद्शोध परियोजना का विषय है, किन्तु इनमें से किसी एक काव्य की भी समीक्षा की जा सकती है। इसी दृष्टि से आचार्य उमाशंकर शर्मा त्रिपाठी विरचित 'छत्रपतिचरितम्' महाकाव्य की ध्वनितत्त्व परक विस्तृत समीक्षा प्रस्तुत शोध-आलेख में की गई है।)*

काव्यात्मने नमस्तस्मै ध्वनये व्यङ्ग्यरूपिणे।
यस्य स्वरूपमाख्यातुं प्राज्ञाः सन्ति कृतश्रमाः।।1।।
आचार्याः काव्यकाराश्च रसिकाः सुधियस्तथा।
स ध्वनी रोचते येभ्यस्तेभ्यो मेऽस्तु नमो नमः।।2।।
प्रथमे ये तु विद्वांसः स्फोटरूपोह्ययं ध्वनिः।
स्वीकुर्वन्ति सदैवेत्थं शाश्वतं पदमव्ययम्।।3।।
विज्ञाः शब्दार्थमर्मज्ञाः प्रतिभाभ्याससंयुताः।
ध्वनिकाव्यं विनिर्मान्ति सुधियः कवितल्लजाः।।4।।
न केवलं पुराकालेऽधुनापि काव्यसर्जने।
काम्यमेवास्ति सर्वेषां ध्वनितत्त्वं मनोहरम्।।5।।
स्वातन्त्र्योत्तरकाले यन्महाकाव्यानि संस्कृते।
विनिर्मितानि तत्रापि ध्वनितत्त्वं महीयते।।6।।
तत्रोत्तरप्रदेशेऽपि रससिद्धैः कवीश्वरैः।
महाकाव्यानि नैकानि कृतानि ध्वनिवर्त्मना।।7।।
तत्र तेषां ध्वनेर्योगात्काव्यशोभा विजृम्भते।
लुब्धाः सहृदयाः सन्ति सुप्रीताः रसनिर्भराः।।8।।

कथां शुभां क्षत्रपतेर्निपीय
कृतं मनोज्ञं महनीयकाव्यम्।
यच्छ्रीमता शर्ममहोदयेन
प्रस्तूयते तस्य ध्वनेः प्रसादः।।9।।

"सरस्वती श्रुतिमहती महीयतामि"ति कविकुलगुरोर्मनीषाऽधुनाऽपि संस्कृतसाहित्ये यशोभाविनीं सुप्रतिष्ठां भजते। प्रसन्नवदना विशदशब्दार्थविग्रहा निरन्तरं विजयते कवेर्भारती। अर्धनारीश्वर इव दृश्यश्रव्यरूपेण द्विधा विभक्ता वाग्देवता नित्यं नृत्यति कवीनां रसनाग्रप्राङ्गणे। तस्या विलसितमेव कवीनां काव्यमिति प्रसिद्ध्यति। भिन्नरुचिरपि सहृदयलोकस्तत्र निर्भरमानन्दमेवावाप्तुमभिलषति। चेतसि चमत्कृतेराविर्भाव एवानन्दस्य मूलम्। इयं चमत्कृतिः कुत आयातीत्यत्रास्ति विपश्चितां वैमत्यम्। तत्र कोऽप्यलङ्कारं वृत्यते, कश्चिद्रीतिमुररीकरोति, कश्चन रसं मनुते कश्चिच्च धुर्यमितिमत्वा ध्वनिं धुनोति। अत्र पत्रमर्यादां विचिन्त्यासु वैमत्यधारास्ववगाहनं नाभिमतं किन्त्यवेतदवश्यमेव कथनीयं वर्तते यद् व्यञ्जनावादिनो 'ध्वनिः सर्वं समाप्नोति', अतो ध्वनि एव वरमिति स्वीकुर्वन्ति।

परम्परावाहिनि खल्वस्मिन् संसारे आदिकविवाल्मीकेः प्रारभ्य संस्कृतमहाकाव्यस्य परम्पराऽजस्रं प्रचलति। अधुनापि महाकाव्यानि नानारसमयानि गुणालङ्काररीतिध्वनियुतानि नित्यनूतनानि विविधविषयचरिताश्रितानि कविप्रतिभाविद्योतितानि विनिर्मितानि दृश्यन्ते। आधुनिकसंस्कृतरचनाधर्मिणां प्रतिनिधिभूतः सरस्वत्या अग्रदूतः कविसहृदयाचार्योऽभिराजराजेन्द्रमिश्रः कथयति– "स्वातन्त्र्योत्तरकालो मयाऽर्वाचीनसंस्कृतवाङ्मयस्य 'स्वर्णयुगमि'ति स्वीकृतः यतो हि संस्कृतरचनाधर्मिताया या समृद्धिरस्याः वैविध्येन पौष्कल्येन चास्मिन् कालखण्डे विद्योतिता सा त्वभूतपूर्वैव।" मन्ये, यद्यद्यपर्यन्तं विरचितानां केवलं संस्कृतमहाकाव्यानां गणना क्रियेत, सा पञ्चशतसंख्यामतिक्रम्य स्थास्यति। शताधिकानि महाकाव्यानि तूत्तरप्रदेशीयानि सन्तीति प्रायशोऽनुमीयते। महाकाव्यप्रणयनस्येयमुदात्तपरम्पराऽविच्छिन्नतयोत्तरप्रदेशेऽग्रेसरति। केचन महाकवयस्तु कालसरणिमनुसरन्तः स्वकीये महाकाव्ये विषयसम्बद्धघटितं घटमानास्तद्विकासोन्मुखान्नवनवान् सर्गान् विरचितुं सन्नद्धा दृश्यन्ते। नवीनानां महाकाव्यानां निर्माणस्य तु कथैव का?

'स्वातन्त्र्योत्तरोत्तरप्रदेशीयसंस्कृतमहाकाव्येषुध्वनितत्त्वमि'ति विषयमधिकृत्य काचिद्बृहच्छोधपरियोजना सञ्चालनीया। नायं खलु कस्यचिल्लघुशोधनिबन्धस्य विषयः। यद्येवं स्यात्तर्हि प्रदत्तविषयेण सह न्यायो न। अतस्तेषु महाकाव्येषु किमप्येकमङ्गीकृत्य तत्र ध्वनितत्त्वस्यानुसन्धानं कर्तव्यमिति धिया स्थालीपुलाकन्याय एवाचरणीयः। निश्चप्रचमेष विमर्शः सहृदयैरनुमोदितः प्रीतये मे मनसोऽलम्। एतद् विचिन्त्य तान्युत्तरप्रदेशे स्वातन्त्र्योत्तरकाले विरचितान्यथ चोपलब्धानि संस्कृतमहाकाव्यानि निरीक्ष्य, तत्र दर्शं दर्शं काव्यप्रकर्षं चितं समुचितमेकं महाकाव्यं विरचितं डॉ. उमाशङ्करशर्मत्रिपाठिमहानुभावेन 'क्षत्रपतिचरितं' नाम। अतोऽस्य महाकाव्यस्य संक्षिप्तपरिचयपुरस्सरं ध्वनि तत्त्वमनुसन्धाय प्रस्तोतुमत्रोत्सहे।

उत्तरप्रदेशस्य देवरियामण्डले कुशीनगरमुप 'सिंगहा' इतिग्रामे लब्धजन्माऽयं महाकविर्वाराणस्यां काशी विद्यापीठमिति विश्वविद्यालये आङ्ग्लभाषायाः प्राध्यापक आसीत्। अस्य पिता पण्डितरामनरेशमणित्रिपाठी आसीत् संस्कृतस्य मूर्धन्यो विद्वान्। महाकविरयमाशैशवात् पितृचरणकमलयोः समुपविश्य संस्कृतविद्यामधीतवान्। अयं कृती संस्कृतहिन्दीआङ्ग्लभाषासाहित्ये सफलस्वाध्याय आसीत्। संस्कारस्वभावतः पितृचरणप्रभावतश्च डॉ. त्रिपाठिवर्यः काव्यप्रतिभायाः परां कोटिमारुरोह। आङ्ग्लभाषासाहित्ये कृतविद्यस्याऽप्यस्यभारतीया संस्कृतिः संस्कृतञ्चेति द्वे प्रतिष्ठे आस्ताम्। अतोऽनेन विरचितं 'क्षत्रपतिचरितं' नाम महाकाव्यमेव प्रमाणीकरोतीदमवितथं तथ्यम्।

अस्त्येवैकोनविंशसर्गेषु विभक्तं 'क्षत्रपतिचरितं' नाम राष्ट्रकाव्यम्। महाकाव्यस्य सर्वलक्षणोपेतेऽस्मिन् क्षत्रपतिचरिते सनिदर्शनं भव्यं दर्शनं संस्कृतेर्धर्मस्य समाजस्य च परमोत्कर्षमयं सज्जीकृतं विभाव्यते। अस्मिन्ननुस्यूता राष्ट्रचेतना नितान्तमनवद्यां हृद्यां प्रसीदत्यलङ्कर्तुं कविभारतीम्। स्वातन्त्र्यगौरवं गातुमेव विलसत्यस्य काव्यसौन्दर्यम्। भारतराष्ट्रे न्यायप्रिय उदारचेता निर्भयमना महासत्त्वः क्षत्रपतिशिवाजीमहाराजः प्रजावत्सलः, स्वराज्यसंस्थापक स्वातन्त्र्यवीर इति प्रथितयशस्कोऽस्ति। अतस्तं देवोपमं महापुरुषं राष्ट्रनायकं साधु विचिन्त्य महाकविः स्वकीयस्यास्य महाकाव्यस्य नायकं परिकल्पितवान्।

क्षत्रपतिशिवाजीमहाराजस्य प्रख्यातं चरितमाश्रित्य विरचितस्यास्य महाकाव्यस्य जीवातुरस्ति स्वातन्त्र्य बोधः। अतो नास्त्यत्रैतिहासिकताया अपलापः नाप्यत्र घटनावर्णनेष्वतिरञ्जितानि वृत्तानि। नेयं चाटूक्तिमयी काचिद्विरुदावली, अपितु कमनीयकाव्यकलया कलिता तस्य राष्ट्र निर्मातुर्यथार्थमीमांसा। एतन्महाकाव्यं सौष्ठवेन क्षत्रपतिचरितवर्णनेन वाल्मीकिकालिदासयोर्यशस्विनीं काव्यपरम्परां पुष्णाति। अस्य महाकाव्यस्य प्रसन्नगम्भीरपदा सरस्वती वैदर्भीरीतिवृत्तिसंवलिता नानारसभावसम्प्लुताऽऽवर्जयति सहृदयानां मनांसि। रुचिरालङ्कारभूषितेऽस्मिन् महाकाव्ये ध्वनेरपि काचिदपूर्वा विच्छित्तिर्विशदयति कवेर्भावितार्थाभिव्यक्तिम्। अतः परं तदेव तत्र प्रयोजनं ध्वनेरुन्मीलनमिति।

सहृदयश्लाघ्यस्य ध्वनेः सन्ति गणनातीता भेदाः[1] समुद्भावितास्तैस्तैरानन्दवर्धनाचार्य मम्मटाचार्यप्रभृतिभिः कृतश्रमैः काव्यशास्त्रिभिः। तान् सर्वानुदाहर्तुमभिधातुं वा न तेऽपि पार्यन्ते। अतो ये विशिष्टा मुख्यभेदास्तु एवाख्यातुं सम्भवन्ति। ध्वनेस्ते भेदा अभिधामूला लक्षणामूला वा वस्त्वलङ्काररसविधा विविधाः। व्यञ्जनाव्यापारस्य तत्र सर्वत्रैवानुप्रवेशो यतो हि व्यञ्जनावृत्तिस्तु भित्तिरेव ध्वनेः। एवं दिशाऽत्र क्षत्रपतिचरितमहाकाव्यमवगाह्यते।

महाकाव्यस्य प्रथमे सर्गे प्रस्तावनायां ध्वनेः नैके प्रसङ्गाः सन्ति यत्र महाकविरात्मनिवेदनं कुर्वन् ध्वनिपथा महाकाव्यस्य वैशिष्ट्यं प्रस्तौति। यदा कविः कथयति यदस्मिन् संसारे कियन्तः सन्ति कवयो ये प्रतिभावन्तः सिद्धसारस्वताः रसज्ञाः हृदयस्पर्शिनः सन्तः शब्दार्थयोः समुचितं पदं निर्वहन्ति?[2] तदात्राऽयं ध्वनिर्यदास्मिन् काव्ये समुचिता पदशय्या विराजतेऽपि च काव्यानुशीलनेनास्य कर्तुः गणाः स्वयमेव विभाव्यन्ते। इदमपि निबन्धनमवधेयम् –

ज्योतिर्धाम्नि सरस्वत्याः सहस्रकृतिनन्दिनि।
सतां क्षणविनोदाय मादृशोऽपि स्खलद्गिरः।।[3]

अत्रास्मि वच्मि, नेदं केवलमात्मविनयप्रदर्शनम्। इदं तु स्वकृतेवैशिष्ट्यप्रकाशनम्। 'तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतव' इति कालिदासगिरां सारं येऽवबुध्यन्ते त एव जानन्त्यत्र यादृशो ध्वनिः। नायं कविः स्खलद्गिरः। सुवर्णघटनोज्ज्वला सरस्वती त्वत्र विभात्येव। अतः सहृदयहृदयानन्दोल्लासं कर्तुममन्दमिदं काव्यमिति निश्चप्रचम्।

एवमेव-

सुकुमारपदन्यासा सुवर्णभारिताम्बरा।
सुरलक्ष्मीरिवेष्टार्था देववाणी यशस्विनी।[4]

इति पद्येन क्षत्रपतिचरितमहाकाव्यस्य भाषावैशिष्ट्यं ध्वन्यते पुनरपि कविस्त्रिभिःपद्यैरात्मदोषं निदर्शयन् सहृदयान् निवेदयति-

''काव्यानन्दसमाधिस्थं मत्परुषोक्तिचञ्चलम्।
ध्रुवं गूढस्मितैरम्बा हंसं विस्मापयिष्यति।।
पीयूषस्तन्यनिष्यन्दि सहजाह्लादनिर्भरम्।
किमपत्येषु वात्सल्यं सूक्तिबन्धमपेक्षते।।
परिस्खलत्पदन्यासा तदेषा मुग्धविभ्रमा।
भारती स्निग्धवात्सल्यमाधुर्यं स्वदतां कृतिः।।[5]''

हंसा विवेकिनो विद्वांसो भवन्तु नामोद्विग्नाः ममास्मिन् काव्ये दोषान् दृष्ट्वा किन्तु सरस्वती मदीयानेन विकलवचसा प्रसादमेष्यति। यतो हि शिशोरविशदवचनैर्मातुःवात्सल्यं पूर्वतोऽप्यधिकतरं समुदेति। अतो यथा शिशुः पदे-पदे परिस्खलन् बालसुलभचेष्टाभिः हार्दमाह्लादं प्रयच्छन् स्वजनानां वात्सल्यमाधुर्यं वर्धयति तथैव नानादोषान्वितमप्येतत्काव्यमम्बायाः सरस्वत्याः समुदारवात्सल्यमनुभवतु। एवमेतत् क्षत्रपतिचरितं नाम महाकाव्यं सहृदयहृदयानन्दोल्लासायाऽलमिति कवेः विनयप्रदर्शने ध्वनिः। इदं महाकाव्यं प्रख्यातोत्पाद्यवस्तुमयं शोभाढ्यमनवद्यं भविष्यत्येव काव्यरुचिकृतां मानसविलासितमित्यपि ध्वनिरत्र सुतरां विभाति।

ध्वनेरध्वनि विन्यस्तपदस्यास्य महाकवेः काव्यकृतौ ध्वनितत्त्वं नवं नीतं नवनीतमिवाभाति। वाच्यादतिशयिनि व्यङ्ग्ये ध्वनेश्चमत्कारश्चमत्करोति सहृदयान्। अनुभवन्तु वचोभङ्गीं व्यङ्ग्यमुख्यामत्र भवन्तः-

''प्रधानसेनापतिपीठलुब्धा रिपून् जयन्तोऽपि पराजितास्ते।
लक्षार्धवीराहुतिमाजिवह्नौ दत्त्वाऽर्यभूपा जगुरात्मकीर्तिम्।।[6]''

अत्र, 'आत्मकीर्तिं जगुः' इत्यस्मिन्नत्यन्ततिरस्कृतवाच्यध्वनिर्विद्यते। यज्ञो वै श्रेष्ठतमं कर्म। अतो यज्ञकर्तारः कीर्तिं लभन्ते। अस्मिन् पद्ये स्वीयैः दुष्कृतैः आर्यभूपतीनां पराजयस्योल्लेखो वर्तते। अस्मिन् पराजयपरे प्रतिरोधहीने युद्धे पञ्चाशत्सहस्रवीराणां रणाग्नौ हृदयविदारिणी जीविताहुतिरुल्लिखिता।

इयं तु आर्यभूपानां कृते गर्हिता लज्जास्पदा च। अत एव 'कीर्तिरत्राऽपकीर्ति'रित्युदीर्यते (व्यज्यते)। अस्मिन् प्रसङ्गे भारतभूपतीनां यावत्यपि निन्दा क्रियेत, सा तू न्यूनैव।

अत्यन्त तिरस्कृतवाच्यध्वनेरन्यदुदाहरणम् –

"वचोभिरार्यावनिजातकोऽपि कथम्मुधा बोधभरस्त्रियामाम्।
कदर्थयस्याग्रहघूर्णिताक्षीं विवेकगर्ते पतितोऽसि कच्चित्।।
मा भैरवे वर्त्मनि साधुचारे मनोरथं दुर्ललितं बधान।
न भारतानामधुना स्वदेशे सुषुप्तिवर्जं परमस्ति पन्थाः।।[7]"

अत्र 'विवेकगर्ते पतितः' इति 'परमस्ति पन्थाः' इति च विपरीतलक्षणया अत्यन्ततिरस्कृतवाच्यध्वनिरूपौ व्यङ्ग्यार्थौ प्रकटयतः।

एवमेव,

'ब्रह्मन्! स्वयं भैक्ष्यचरोऽपि भोगानुपाहरन् कामदुधान् द्विषद्भ्यः।
यद् दृश्यते त्यागपथे स्वदेशस्तत्क्षात्रतेजोऽर्हति साधुवादम्।।[8]'

अस्मिन् पद्येऽपि वर्ततेऽत्यन्ततिरस्कृतवाच्यध्वनिः। 'तत्क्षात्रतेजोऽर्हति साधुवादम्' इत्यस्य व्यङ्ग्यार्थो भवति– 'तत् क्षात्रतेजः साधुवादं नार्हति।' वस्तुतः क्षात्रतेजसाऽनेन भ्रष्टेन देशोऽयं पतनगर्ते निष्करुणं पतितः। अत इदं क्षात्रतेजः सर्वथा गर्हणीयं न तु प्रशंसनीयम्। अपरमपि निर्दशनं ध्वनेरुद्भावनम् –

'निशाचरिष्णुश्चरणैकवाहनो दयाद्वितीयो विनयास्त्ररक्षितः।
क्षमोऽसि नूनं पयसः कृते व्रतिन्! ज्वलच्छिखाग्रेः पटबन्धलीलया।।
करालजृम्भादिकचास्यदन्तुरप्रभांशुराजद्रसनां दधानया।
तवाञ्जलीकृत्य करौ निवेदनं तयाऽपि धीमन्नुररी करिष्यते।।[9]'

'ज्वलच्छिखाग्नेः पटबन्धलीला' तु न केवलं दुष्कराऽपि तु सर्वथाऽसम्भवा नाम। सिंहनीदुग्धस्य प्राप्तिरपि निश्चप्रचमसम्भवैव तदपि रिक्तकरेणाऽसहायेन पुरुषेण। 'धीमन्' इत्यस्य व्यङ्ग्यर्थोऽत्र भवति 'मूर्ख।' सा सिंहनी हिंस्रजन्तुः क्रूरस्वभावा। सा "दुग्धं देही"ति तव साञ्जलिनिवेदनं स्वीकरिष्यती' त्यहो ते मूर्खत्वम्। अतो नियतिमुपेक्ष्य वनाटनेन रात्रावलम्। अत्राप्यत्यन्ततिरस्कृतवाच्यध्वनिः।

अस्य ध्वनेरन्यच्चैकमुदाहरणम् –

'धर्मराज विरमात्मगौरवात्कौतुकं त्वमपि वेत्सि पद्धतिम्।
आत्मनाऽपि चरितं त्वयास्ति किं मत्कृते यदभिधीयते गुरो।।[10]'

अत्र वक्तृबोधव्यवैशिष्ट्याद् ध्वनेः प्रसङ्गः। वक्ताऽस्ति क्षत्रपतिशिवाजीमहाराजस्य विश्वस्तः सैन्यनायकस्तानाजी। बोधव्योऽस्ति मुगलपादशाहस्य दुर्गाध्यक्षो नरकलङ्क उदयभानुः। अत्र 'धर्मराज' 'गुरो' चेति पदद्वयेन वाच्यातिशयोऽर्थो व्यज्यते। 'धर्मराज' इत्यस्य 'अधर्मराजो नराधमः' तथा च 'गुरो' इत्यस्य शैक्ष्यबालमूर्ख इति व्यङ्ग्यार्थः। अथास्मिन्नत्यन्त-तिरस्कृतवाच्यध्वनिः। स त्वेवम् "आत्मश्लाघी विकत्थनपरोऽसि। त्वं त्वधर्मपद्धतिं जानासि

न तु धर्मपद्धतिम्। धिङ् मूर्ख! परोपदेशात्पूर्वं स्वयमाचरेत्। विधर्मिणां पादलेहनान्नराधमोऽसी"।

**एवमेवान्यान्यप्युदाहरणान्यत्यन्ततिरस्कृतवाच्यध्वनेरस्मिन् महाकाव्ये सन्त्येव।**[11]

अतः परमर्थान्तरसङ्क्रमितध्वनेरुदाहरणम् –

**'अपयातमवेक्ष्य वाहिनीशं हसतोऽरातिभटांश्च वीक्ष्य कोपात्।**
**शयिताश्वसुतो ह्रियं विवर्णां निजकण्ठक्षतजारुणां व्यधत्त।।**[12]**'**

लज्जया मुखवर्णमारक्तं भवतीति स्वभावः। शायिस्ताखानस्य पुत्रः भीरोः सेनापतेः पलायानादपमानं सोढुं न शशाक। लज्जा तु सेनापतेः क्लीबत्वेन स्वयं सातङ्कापीतवर्णा जाता। अतः शायिस्ताखानस्य पुत्रो रणोद्यमे निधनं प्राप्य कण्ठक्षतजेन तां लज्जां पुनः रक्तार्णां व्यदधात्।

अपरमप्येकमुदाहरणम् –

**''जनार्तिनाशाय समर्प्यजीवितं तदेव हर्तुं यतसेऽधुना कथम् ?।**
**अनल्पतापाकुललोककल्पना स्वसिद्धये प्राणितु कुत्र वा वद।।**
**''शरीरभाजां महदिष्टसाधनं व्रतं विधात्रा भुवने प्रकल्पितम्।**
**मुनेः कृते त्यक्तुमना महीयसीं धुरं ध्रुवं तत्कलुषीकरिष्यसि।।**[13]**''**

अत्र 'वद' इति पदमर्थान्तरे 'स्मर' इत्यस्मिन् सङ्क्रमितम्। अथ च, 'पूर्वं प्रदत्ते वस्तुनि प्रदातुः कुत्र भवत्यधिकारस्तदेव पुनः प्रदातुमि'ति वस्तु वस्तुना (वाच्यार्थेन) ध्वन्यते। अपरमपि 'महत्तमं प्रयोजनमुपेक्ष्य सामान्येभ्यो भावनात्मककार्येभ्योऽस्य साधनभूतस्य शरीरस्य विनाशो नोचित' इति वस्तु, वर्णितवस्तुना व्यज्यते ध्वन्यते वा।

क्षत्रपतिचरित्रमहाकाव्यस्याऽशेषोऽपि सप्तदशः सर्गो व्यङ्ग्यार्थपरो ध्वनिप्रधानः। अस्य प्रायेण सर्वेषु पद्येषु वस्तुना वस्त्वलङ्कारो वा ध्वन्यते। कानिचिदुदाहरणान्यत्र प्रस्तूयन्ते प्रथमं तावत् ,

**'विपक्षपातार्हकृपाणकर्मणा निरुध्य चेतः प्रणयं दयां कुलम्।**
**निजेतरानेकमना विभावयन् मतोऽधिकं गोत्रभिदोऽप्यरिन्दम।।**[14]**'**

अत्र श्लिष्टशब्दप्रयोगतो वस्तुना ध्वन्यतेऽलङ्कारः। अथ च, अलङ्कारेणाप्यलङ्कारो ध्वन्यते। स शब्दोऽस्ति 'गोत्रभित्'। अनेन वर्णितवस्तुना व्याजस्तुतिरलङ्कारो ध्वन्यते। अपि च, श्लेषमूलेन व्यतिरेकेण (अरिन्दम, गोत्रभिदोऽप्यधिकं मतः) व्याजस्तुतिर्व्यज्यते।

अतः परम् –

**'प्रमाथिकर्मोन्मथितात्मपद्धतिं विविक्तवासोपचितेष्टवर्त्मनि।**
**नियोज्य तातं परमार्थवेदिना प्रकाशिता पुत्रपदस्थितिस्त्वया।।**[15]**'**

विज्ञा इतिहासविदो जानन्त्येव यदौरङ्गजेब सिंहासनमधिरुह्य पादशाहपदवीमभिलभ्य स्वकीयं पितरं शाहजहाँ नामधेयं मृत्युपर्यन्तं कारायामेकाकिनं निरुध्य चणकमुष्टिकया पालयन्नतिक्रूरमाचरितवान्। एतदालक्ष्यैव व्यङ्ग्यभङ्ग्याऽत्र वर्णयति महाकविः। पद्ये प्रयुक्तं 'पुत्र' इति पदं विशेषतो व्यज्यते। अत्रापि वस्तुना अलङ्कारध्वनिः। प्रशंसामुखेन व्याजस्तुतिः। अत्रायं ध्वनिः– 'शासनाधिकारलिप्सया परमस्वार्थवृत्तिपरेण त्वया स्वकीयेन जनकेन सह यन्नृशंसमाचरितं, तस्य यावती भर्त्सना क्रियेत, सा तु न्यूनैव। त्वया खलु पुत्रनामैव कलङ्कितम्।'

एवमेव,

**'सृजन् तुरुष्कान् नवलानजोपमः समर्थ चक्रीव भरन् स्वधर्मिणः।**
**हरन्निवान्यानपरोऽध्वराहितः त्रिमूर्तिकल्पः किलकल्प्यसे कलौ।।[16]'**

अत्रायं ध्वनिः- त्रिमूर्तयो ब्रह्मा-विष्णु-महेशास्तु पृथक्पृथग्विग्रहाः सृष्टि-पालनसंहाररूपानधिकाराननुष्ठीयमाना अदृश्यरूपेण शोभन्ते। त्वं तु सर्वथा दृश्योऽसि। अपि चैकाकी एव तेषां त्रयाणां नियतकर्माणि दक्षतया करोसि। अतस्तानतिक्रम्य वर्तसे इति व्यतिरेकालङ्कारः। अथवा, क्रूरं हठवादिनं पक्षपातिनं त्वां धिगिति व्याजस्तुतिः।

अथाऽपरमुदाहरणम् -

**'उपप्लवेऽप्यात्मगुरुत्वरक्षिणा विलङ्घितोद्दामबले समन्ततः।**
**वसुन्धराधारणसंस्तवोऽप्यसौ गिरिर्गुरूणाम[17] धरीकृतस्त्वया।।[18]'**

राजा पर्वतश्च द्वावपि 'भूभृत् ' इति शब्देनोच्येते। अत्र औरङ्गजेबो हिमालयश्च द्वावपि समकक्षौ। किन्तु तैस्तैः गुणैः स औरङ्गजेबः हिमालयं (गिरीणां गुरूम्) अतिशेते इत्यत्र व्यतिरेकोऽलङ्कारो व्यज्यते। अपि च, हिमालय इव औरङ्गजेबोऽपि जड एवेति व्याजस्तुतिः। प्रशंसाव्याजेन निन्दारूपत्वात्।

अथ रसध्वनेरुदाहरणानि-

**'अनन्तशर्माम्बरशोभिविग्रहा यशः प्रसादा निरुपद्रवाश्रमा।**
**त्रिवर्गलक्ष्मीर्जगतीजुषां कृते तवासितेजोमुकुरे प्रकाशताम्।।**
**कृशावताराः परिकुण्ठिता धृतिः समाकुलन्यायतुलाऽबलो विधिः।**
**सशङ्किताशाश्च लसन्तु निर्भयं त्वयि स्थिरार्था भुजविक्रमौकसि।।**
**त्वदुग्रधामानिलभिन्नशत्रुताऽम्बुदोपरोधोद्धृतभारताम्बरे।**
**विभातु भूयो जगदिष्टवैभवो नयार्जवस्यन्दननन्दनो रविः।।[19]'**

इत्यत्र सर्वत्र वीररसो ध्वन्यते। प्रथमे पद्ये 'असितेजः', द्वितीये पद्ये 'भुजविक्रमः' तृतीये च पद्ये 'उग्रधाम' इत्येभिः पदैः विशेषतया वीररस ध्वनिः प्रतीयमानतामायाति।

ध्वनेरेकं ध्वनिसिद्धान्तपुष्टिकरं प्रशंसितमुदाहरणम् -

**'अलिगुणाः कुसुमोद्गमरीतयो हरिदलङ्कृति पल्लवितं तरोः।**
**परभृतेन समीक्ष्य सदर्थतां ध्वनिकृता निकृता गुणधर्मिणः।।[20]'**

द्रुतविलम्बितछन्दसा निबद्धेऽस्मिन् यमकविच्छित्तिपरे रसभरे पद्ये श्लेषानुप्राणितो ध्वनिर्विराजते। कल (सुमधुर) ध्वनिः कोकिलः सदर्थतां (सद् वस्तुनः प्रतिष्ठां) विविच्य स्पर्धिभूतान् भ्रमरगुणान् , कुसुमचयान् , हरिद्वर्णभूषितान् नवपल्लवान् निराकृतवान्। अथ च, ध्वनिकारः (आनन्दवर्धनः) परभृतवत् (पूर्ववर्त्तिभिराचार्यैरनुप्राणितस्येव) सत्तत्वस्य ध्वनेर्यथार्थमीमांसां विधाय रीतिगुणालङ्काराणां ध्वनितत्त्वविरोधिनां निराकरणं कृतवान् 'ध्वनिसिद्धान्तं संस्थाप्य पूर्वकृतान् तान् सर्वानिवापाकृतवान् ' इति ध्वनिः।

एवमत्र क्षत्रपतिचरितमहाकाव्ये नैकानि ध्वनितत्त्वनिदर्शनानि प्रस्तुतानि। ध्वनिहृदयाः सहृदया एव प्रमाणमस्यमहाकाव्यस्य ध्वनिमयत्वे[21] इत्यलं विस्तरेण।। शममितिशम्।।

**सन्दर्भः**


1. (क). एवं ध्वनेः प्रभेदाः प्रभेदभेदाश्च केन शक्यन्ते।
   संख्यातुं दिङ्मात्रं तेषामिदमुक्तमस्माभिः।। अनन्ता हि ध्वनेः प्रकाशः। – ध्वन्यालोकः, 3.45।
   (ख). सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया।
   वेदरवान्धिवियच्चन्द्राः (10404) शरेषुयुगखेन्दवः (10455)।।– काव्यप्रकाशः, 4.44।
   (ग). वेदरवाग्निशराः (5304) शुद्धैरिषुबाणाग्निसायकाः (5355)।।– साहित्यदर्पणः, 3.12।
2. प्रतिभासिद्धवचसो रसज्ञा हृदयस्पृशः। प्रायेण विरला लोके पदार्थस्थितिवेदिनः।। – क्षत्रपतिचरितम्, 1.52।
3. क्षत्रपतिमहाकाव्यम् 1.23.
4. तत्रैव, 1.44।
5. क्षत्रपतिचरितम् , 1.89–91.
6. तत्रैव, 4.104.
7. तत्रैव, 4.17–18.
8. तत्रैव, 7.60.
9. तत्रैव, 11.52–53
10. तत्रैव, 16.62.
11. तत्रैव, द्रष्टव्यम् – 13.38, 60; 14.42, 44, 48.
12. तत्रैव, 10.62.
13. तत्रैव, 11.60–61.
14. तत्रैव, 17.27.
15. तत्रैव, 17.31.
16. तत्रैव, 17.35.
18. तत्रैव, 17.39.
17. 'गिरिगुरूणाम्' इत्यपपाठः। शुद्धपाठस्तु– 'गुरूर्गिरीणाम्' इति। (मन्ये, पाठशोधने प्रमा दवशादयमपपाठः।)
19. क्षत्रपतिचरितम् , 11.33–35.
20. तत्रैव, 6.30,
21. तत्रैव, 4.40, 108, 121, 146, 166; 6.44; 7.60; 8.76; 9.72; 11.111; 13.61, 62, 140–42; 13.23, 75, 83, 101; 14.51, 156; 17.7, 8, 26; 18.84; 19.64 इत्यादयः।




# द्वादशविधपुत्रास्तेषां दायाधिकारश्च

– डॉ. हिमांशुशेखर त्रिपाठी

*(इस निबन्ध में विविध स्मृतियों के आधार पर धर्मशास्त्रोक्त द्वादशविध पुत्रों की चर्चा विस्तार से की गई है। लेखक ने क्रमशः औरस, क्षेत्रज, दत्तक, कृत्रिम, गूढोत्पन्न, अपविद्ध, कानीन, सहोढज, क्रीत, पौनर्भव, स्वयंदत्त एवं शौद्र पुत्रों में प्रथम छः प्रकार के पुत्रों को मनु के मतानुसार "दायादबाधवाः" के अन्तर्गत रखा है। इन द्वादशविध पुत्रों में औरस पुत्र को श्रेष्ठ एवं इसके अतिरिक्त अन्य एकादशविध पुत्रों को गौणपुत्र के रूप में प्रतिपादित किया है। लेखक ने दायविभाग के प्रसङ्ग में पितृधन में भगिनी (बहन) को कितना अंश और किस प्रकार का अधिकार प्राप्त है इस विषय में विज्ञानेश्वर, जीमूतवाहन प्रभृति निबन्धकारों के मतोपस्थापन पूर्वक समुचित विचार निरूपित किया है।)*

साधारणतया पितुर्मरणानन्तरं तस्य यो निकटतमसंबन्धी स धनभाक् भवति। तत्र प्रथमतः पुत्रो भवति निकटतमसम्बन्धी। धर्मशास्त्रे द्वादशविधाः पुत्राः दृश्यन्ते। तेषु दायादबान्धवाः षट् अदायादबान्धवाश्च षट्विधाः भवन्ति। प्रसंगेऽस्मिन् मनुना[1] प्रतिपादितं यत् –

**औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च।**
**गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट्।।**
**कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा।**
**स्वयं दत्तश्च शौद्रश्च षडदायादबान्धवाः।।**

एषु पुत्रेषु औरसपुत्रो भवति सर्वेषां पुत्राणां मध्ये श्रेष्ठः। तर्हि औरसपुत्रः प्रथमतः पितुरुत्तराधिकारिरूपेण धनं प्राप्नुयात्। औरसपुत्रव्यतिरेकेण अन्ये एकादशविधाः पुत्राः गौणाः भवन्ति। ते पुत्राः यथा–क्षेत्रजः, दत्तः, कृत्रिमः, गूढजः, अपविद्धः, कानीनः, सहोढः, क्रीतः, पौनर्भवः, स्वयंदत्तः, शौद्रश्च। द्वादशविधपुत्रेषु औरसपुत्र एव प्रथमं स्थानं लभते, यतः औरसपुत्रः भवति धार्मिकपुत्रः। अस्मिन्नेव प्रसंगे योगीश्वरेण[2] प्रतिपादितं यत् –

**औरसः धर्मपत्नीजस्तत्समः पुत्रिकासुतः।**
**क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा।।**
**गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः।**
**कानीनः कन्यकाजातो मातामहसुतो मतः।।**
**अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः।**
**दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत्।।**

क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात् स्वयंकृतः।
दत्तात्मा तु स्वयंदत्तो गर्भे विन्नः सहोढजः।।

एषु द्वादशविधपुत्रेषु औरसपुत्रः श्रेष्ठः। पुत्रिकापुत्रः औरससमः भवति इति मनुना[3] कथितं यथा-

पुत्रिकायां कृतायां तु यदि पुत्रोऽनुजायते।
समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः।।
अपुत्रायां मृतायां तु पुत्रिकायां कथंचन।
धनं तत्पुत्रिकाभर्त्ता हरेतैवाविचारयन्।।
अकृता वा कृता वापि यं विन्देत्सदृशात्सुतम्।
पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम्।।

इति मनुवचनानुसारेण क्षेत्रजादीनां पुत्राणां पूर्वपूर्वाभावे चतुर्थांशभागित्वमंगीक्रियते। अर्थात् औरसपुत्रे विद्यमाने अपि क्षेत्रजदत्तकादिसवर्णपुत्राः चतुर्थांशभागिनः भवन्ति। तत्रापि कानीनप्रभृतयः केवलं ग्रासाच्छादनमात्रं प्राप्नुवन्ति इति विज्ञानेश्वरेण प्रतिपादितम्।

इदानीं सर्वेषु पुत्रेषु मुख्यामुख्यपुत्रानुक्रमेण औरसादीनां दायग्रहणे क्रम उच्यते। दायभागे जीमूतवाहनेन ब्राह्मणस्य कृते चतस्रः, क्षत्रियस्य कृते तिस्रः वैश्यस्य कृते द्वे, तथा शूद्रस्य कृते एका भार्या शास्त्रानुसारेण ग्रहणयोग्या इति अभिहितम्। विवाहसंस्कारेण संस्कृतासु उत्पन्नाः पुत्राः औरसाश्च श्रेष्ठाः। अन्येऽपि ये क्षेत्रजादयः पुत्राः पुत्रप्रतिनिधिरूपाः ते च पुत्राभावे स्वीक्रियन्ते। दायभागकाले तेषामौरसपुत्रेण सह विभागः जायते। पितुः सवर्णः क्षेत्रजादीनामौरसपुत्रः। उत्तमवर्णः पुत्रिकापुत्रः, क्षेत्रजः, कानीनः, गूढजः, अपविद्धः, सहोढजः, पौनर्भवः, दत्तकः, स्वयंदत्तः, कृत्रिमः क्रीतः इत्येते पुत्राः औरसपुत्रभागस्य तृतीयांशं भागं प्राप्नुवन्ति।

औरसपुत्रस्याभावे एतेषां पुत्राणां ग्रहणं भवति। यत्र पितृहीनवर्णाः अन्ये पुत्रा औरसपुत्राश्च उत्तमवर्णाः ते औरसपुत्रस्य पंचमं स्वीकुर्वन्ति। विना नियोगमुत्पन्नः क्षेत्रजपुत्रः यस्य सकाशात् उत्पन्नः तस्यैव धनं प्राप्नोति। मनुः[4] प्रसंगेऽस्मिन् कथयति यत् -

ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम्।
भजेरन्पैतृकं रिक्थमनीशास्ते हि जीवतोः।।

एवञ्च द्वादशविधपुत्रेषु स्वक्षेत्रे संस्कृतायामुत्पादितः औरसपुत्रः प्रथमः तदभावे परक्षेत्रे उत्पादितः क्षेत्रजः द्वितीयः, पुत्रिकापुत्रस्तृतीय इति। किन्तु मतमिदं मित्रमिश्रेण उक्तं यथा[5]-

एक एवौरसः पित्र्ये धने स्वामी प्रकीर्तितः।
तत्तुल्या पुत्रिका प्रोक्ता भर्त्तव्यास्त्वपरे सुताः।।

पुत्रिकायां प्रथमे पुत्रे जाते तदनन्तरं यदि औरसपुत्रस्योत्पत्तिः स्यात्, तर्हि पुत्रिकापुत्रस्य न ज्येष्ठत्वम्। मनुना[6] प्रसंगेऽस्मिन् तदेवोक्तम्-

अकृता वा कृता वापि यं विन्देत्सदृशात्सुतम्।
पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम्।।

पुत्रिका हि पुत्रस्तत्पुत्रः अतो दौहित्रोऽपि पौत्रस्तदा तेन पौत्री भवति। मनुविरोधेन तस्य

गौण्यपिण्डदातृत्वनिमित्तपुत्रत्वाभिप्रायकत्वात् पुत्रिकायाः पुत्रस्य पौत्रत्वात्। यथा गौणं पुत्रपदप्रतिपाद्यत्वं तथा अन्यपुत्रस्यापि पुंस्त्वे सत्यपि जन्यत्वाभावात्। औरसाभावे दत्तकस्याखिलधनहरणार्थं मनुना[7] पृथगुक्तं यत् –

**उपपन्नो गुणैः सर्वैः पुत्रो यस्य तु दत्त्रिमः।**
**स हरेतैव तद्रिक्थं सम्प्राप्तोऽप्यन्यगोत्रतः।।**

यद्यपि औरसक्रमात् समभागभागो च क्षेत्रजस्य तथापि वाक्यविरोधे प्रक्रमस्य बाध्यत्वाद् बीजिसमभागित्वपरं तदिति बोध्यम्। अत एवोत्तरवचने पितुर्बीजिनः प्राधान्यमुपन्यसति। सोऽपत्यं भ्रातुरुत्पाद्य इत्यनेनापि यस्य क्षेत्रजस्तदीयधनं तस्मै दद्यात् इति। भ्रातृस्थानीयत्वात् स्वसमभागितां प्रतिपादयति। एवमन्यान्यानप्युच्चावचभागान् क्षेत्रजादीनां प्रतिपादयति।

अत्रौरसे सतीति सर्वत्र ज्ञेयम्। "पूर्वाभावे परः परः" इति वचनात् पूर्वमेव विषयव्यवस्था वर्णिता। अन्येषामपि गुणतारतम्येन देशाचारानुसारेण यथा व्यवस्था द्रष्टव्या। यद्यपि मनुना पुत्राणां षट्कद्वयमुक्त्वा पूर्वषटकस्य दायादबान्धवत्वमुत्तरषटकस्य चादायादबान्धवत्वमुक्तम्।

**औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च।**

इति तदपि स्वपितृसपिण्डसमानोदकानां सन्निहितरिक्थाभावे पूर्वषट्कस्य तद्रिक्थहरत्वमुत्तरषट्कस्य तु तन्नास्ति। पितृरिक्थहरत्वं तु सर्वेषामपि पूर्वपूर्वाभावे समानमिति। तद्दायादादायादत्वविभागेनोपद्यते। "पूर्वाभावे परः परः" इति वचनात्।

**''एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः[8]''** इत्युक्तम्।
**''न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः[9]।''**

इति वचनस्य गौणपुत्राणामभावे सर्वेषां पितृरिक्थहारित्वप्रतिपादनपरत्वाच्च। दायादशब्दस्य 'दायादानपि दापयेत्' इत्यादौ पुत्रव्यतिरिक्तरिक्थहारित्वेन प्रचुरप्रयोगाच्च बान्धवत्वं सपिण्डसमानगोत्रत्वाभ्यामुदकदानादिकार्यकरत्वं षट्कद्वयस्यापि समानमेवमप्येतदर्थम्। परन्तु मित्रमिश्रः औरसपुत्राणामभावे शूद्रापुत्रो धनभाक् भवतीति उक्तवान्।

आत्मजत्वादिकं परिगणितेषु यथायथं स्पष्टमेव न विद्यते। औरसो यस्य तस्येति बहुब्रीहिः। **मनुना[10] यथा–**

**श्रेयसः श्रेयसोऽलाभे पापीयान्रिक्थमर्हति।**
**बहवश्चेत्तु सदृशाः सर्वे रिक्थस्य भागिनः।।**

**हारीतः–** **शूद्रापुत्रा स्वयंदत्ता ये चैव क्रीतकाः सुताः।**
**सर्वे ते गोत्रिणः प्रोक्ताः काण्डापृष्ठाः न संशयः।।**
**स्वकुलं पृष्ठतः कृत्वा यो वै परकुलं व्रजेत्।**
**तेन दुश्चरितेनासौ काण्डपृष्ठो न संशयः।**
**सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः[11]।।**

इति योगीश्वरवचनात् अयं पूर्वाभावे परः परो धनभागित्युक्तो यो मया विधिः सजातीयेषूत्पादकसजातीयेषु एवं क्षेत्रजादिषु ज्ञेयो न विजातीयेषु। तत्र कानीन–गूढोत्पन्न–सहोढ–

पौनर्भवानां सवर्णत्वद्वारेण न स्वरूपेण, तेषु वर्णजातीयलक्षणाभावात् वर्णजातिविवेकमभिधाय "विन्नास्वे विधिः स्मृतः" इति योगीश्वरेण एवाभिधानात्। अनुलोमजानां मूर्धावसिक्तानामौरसेष्वेवान्तर्भावात् चतुस्त्रिद्व्येकादीनां भागक्लृप्तिरुक्ता। तेन तेषामप्यभावे क्षेत्रजादयः पितृरिक्थहारिणः। शूद्रापुत्रस्य त्वौरसत्वेपि न कृत्स्नपितृधनभागित्वमन्याभावे अप्यस्ति। यथाह मनुः[12]–

**यद्यपि स्यात्तु सत्पुत्रोऽप्यसत्पुत्रोऽपि वा भवेत्।**
**नाधिकं दशमाद्दद्याच्छूद्रापुत्राय धर्मतः।।**

यदि सत्पुत्रो विद्यमान–सवर्णपुत्रो यदि वा अपुत्रः अविद्यमानसवर्ण पुत्रो भवेत्तस्मिन् मृते सवर्णादिपुत्रोऽन्यो वा सपिण्डो रिक्थहरो शूद्रापुत्राय दशमांशादधिकं न दद्यात्। अस्मादेव वचनात् सवर्णपुत्राभावे क्षत्रिया–वैश्यपुत्रयोः सकलपितृधनग्रहणं गम्यते। यस्तु प्राक् चतुस्त्रिद्वि-एकभागभागित्वं योगीश्वरादिभि[13] रप्युक्तम्।

**जातोऽपि दास्यां शूद्रेण कामतोंऽशहरो भवेत्।**
**मृते पितरि कुर्युस्तं भ्रातरस्त्वर्धभागिकम्।।**
**अभ्रातृको हरेत्सर्वं दुहितॄणां सुताद‍ृते।।**

शूद्रेण दास्यामुत्पन्न कामतः पितुरिच्छायां भागं गृह्णीयात्। पितुरूर्ध्वं तु भ्रातरः परिणीतशूद्रापुत्रं दासीपुत्रं स्वभागार्द्धभागिनं कुर्युः। अत्र बहुवचनात् सर्वे स्व–स्व भागाद् दद्युरिति न भ्रमितव्यम्। तथा सति बहुभ्रातृकस्य ततोऽप्यतिबहुधनत्वापत्तेः अव्यवस्था स्यात्। किन्तु एकपुत्रस्य यावान् भागस्तदर्द्धभागं च शूद्रापुत्राः लभन्ते।

सवर्णा धर्मविवाहोढा धर्मपत्नी तस्यां जातः औरसः पुत्रो मुख्य इत्यत्र एव विज्ञानेश्वरेण व्याख्यातम्। किं च विषयेऽस्मिन् मनुनोक्तम्[14] यत् –

**स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादयेद्धि यम्।**
**तमौरसं विजानीयात्पुत्रं प्रथमकल्पितम्।।**

इत्येवं च शूद्रापुत्रस्य द्विविधस्यापि तल्लक्षणानामाक्रान्तत्वात् पृथगुक्तिः। अतएव मूर्धावसिक्तादीनामौरसेष्वन्तर्भाव इति विज्ञानेश्वरेणोक्तम्।

विष्णुवाक्ये पुत्रशब्देन सर्वविधपुत्रो गृह्यते। तत्रातिदेशवाक्यानि तु अपुत्रा पुत्रवत् पुत्रीत्युच्यत। किं च मनुना[15] अपि उक्तं "**यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा।**" तत्रादौ दायग्रहणक्रमः, औरसपुत्रस्तत्पुत्रश्चेति। तत्र एतादृशपुत्रिकापुत्रादयः पूर्वपूर्वाभावे क्रमेणोत्तरोत्तर एव क्रमः। एवं तत्पुत्रादयोऽपि। अत एव मनुना उक्तम्[16]–

**श्रेयसः श्रेयसोऽलाभे पापीयान्रिक्थमर्हति।**
**बहवश्चेत्तु सदृशाः सर्वे रिक्थस्य भागिनः।।** इति।

तदभावे पत्नी, ततो दुहितरः ततः पिता, ततो माता, ततो भ्राता, ततो भगिनी, ततः क्रमेण सुताश्च, ततो गोत्रजादयः।

पिण्डदानादौ च एष एव क्रमः, औरसपुत्रः तदभावे पुत्रिकापुत्र इत्येवं प्रकारेण एकादशक्रमेण। ततः पौत्रः, ततः प्रपौत्रः, तथा ततः पत्न्यादिसत्वेऽपि भातृसुतः, ततो भ्रात, ततः पिता, ततो

दौहित्रः ततः पत्नी, ततः गोत्रजादयः इति। पुनश्च नीलकण्ठभट्टोऽपि विज्ञानेश्वरमतमनुमनुते। एवमौरसादिपुत्रविभागप्रसंगः परिकल्पितः।

**भगिनीनां दायाधिकारः**

धर्मशास्त्रकारैः पितृपितामहधने यथा दायाधिकारः प्रदर्शितः, तथैव भ्रातृधनेऽपि भगिन्यधिकारः परिकल्पितः। तत्र असंस्कृतायाः भगिन्याः संस्कारः अपेक्षते। अत एव याज्ञवल्क्येन[17] उक्तं यथा–

**भगिन्यश्च निजादंशाद्दत्त्वांशं तु तुरीयकम्।**

भगिन्यश्च संस्कृता संस्कर्त्तव्या भ्रातृभिः। किं कृत्वा इति जिज्ञासायां निजादंशाच्चतुर्थमंशं दत्वा। अनेन दुहितरोपि पितरूर्ध्वमंशभागिन्यः इति गम्यते। तत्रापि निजादंशात् इति प्रत्येकं परिकल्पितादंशात् उद्धृत्य चतुर्थांशः दातव्यः। परन्तु यज्जातीयकन्या तज्जातीयपुत्रभागाच्चतुर्थमंशं सा भगिनी परिकल्पनीया। यदि काचिद् ब्राह्मणी कन्या विद्यते तर्हि सा ब्राह्मणीपुत्रस्य यावानंशः परिकल्पितः तस्य चतुर्थांशः तस्याः भवति। यदि भ्रातुः अधिकधनं विद्यते तर्हि विवाहोचितं धनं तत्र दातव्यं, न तु चतुर्थांशनियमः।

प्रसंगेऽस्मिन् मिताक्षराकारेण विज्ञानेश्वरेण जीमूतवाहनप्रभृतिभिः च यः विभागप्रकारः कल्पितः तत्र कश्चन अभावः परिलक्ष्यते। तत्रादौ विज्ञानेश्वरमतमुपजीव्य आलोचना क्रियते। तन्मते पितुः जीवद्दशायां दुहितॄणां पैतृकधने नाधिकारः। परन्तु पिता स्वस्य इच्छया दुहितृभ्यः किंचिद् दद्यात्। तथा च स्त्रीधनत्वेन विवाहसंस्कारार्थं धनमपि दद्यात्। परन्तु यदा पिता म्रियते तदा भ्रातरः यदि विभागं कुर्वन्ति तर्हि भगिनीभ्यः स्वस्माद् भागात् चतुर्थांशं दद्युरिति सर्वैः धर्मशास्त्रकारैरभिहितम्। परन्तु पितुः धनस्य एकचतुर्थांशं न। प्रसंगेऽस्मन् यमोक्तिरपि विद्यते 'पतिताः स्युरदित्सवः' इति। अत एव भगिनीभ्य अप्रदाने सति पातित्यहेतुस्मरणात् भ्रातरः भगिनीभ्यः अधिकारबुध्या चतुर्थांशं अवश्यमेव प्रयच्छेयुः।

तत्रापि कस्यापि ब्राह्मणस्य यदि एका पत्नी, एकः पुत्र तथा एका कन्या विद्यते तर्हि पितुः सर्वमेव द्रव्यं द्विधा विभज्य तत्रैकं भागं चतुर्धा विभज्य चतुर्थांशं कन्यायै प्रदाय अवशिष्टं पुत्रः गृह्णीयात्। मन्यताम् कस्यचित् शतं मुद्राः सन्ति। तर्हि ताः मुद्राः द्विधा विभज्य पुनः एकस्य भागस्य चतुर्धाविभजनेन सार्धद्वादशमुद्राः कन्यायाः अंशः भवति। परन्तु पुत्रः अवशिष्टाः सार्धसप्ताशीतिमुद्राः प्राप्नोति। अतएव अनेन ज्ञायते यत् पुत्रभागस्य सप्तमांशं कन्या प्राप्नोति, न तु चतुर्थांशम्। अपि च यत्र द्वौ पुत्रौ एका कन्या च विद्यते, तत्र पितृधनं सर्वं त्रिधा विभज्य एकभागं च चतुर्धा विभज्य चतुर्थमंशं कन्यायै प्रदाय शेषं द्वौ पुत्रौ विभज्य लभेताम्। अवशिष्टं मुद्राः द्विधा विभज्य द्वौ पुत्रौ गृह्णीयाताम्।

मन्वादिवचनेषु भगिनीपदस्थाने क्वचित् कन्यादिपदं यद्यपि श्रूयते तथापि भ्रातृकर्तृ-कविभागाधिकारः, पितृप्रतियोगिकं कन्यात्वं दुहितृत्वं, भ्रातृप्रतियोगित्वं च भगिनीत्वमादाय कार्यकतावसेया। तस्माद् जीवत्पितृकविभागे भगिनीनामपि पितृद्रव्यांशभागित्वं न तु संस्कारमात्रम्–

असंस्कृता भ्रातरस्तु ये स्युस्तत्र यवीयसः।
संस्कार्य्याः पूर्व्वजैस्ते वै पैतृकान्मध्यकाद्धनात्[18]।।

इति संस्कारसाहचर्यात् "अनूढानां दुहितॄणाम्", "कन्यकानां त्वदत्तानाम्" इत्यनुपपत्तेर्विशेषणोपादानाच्च परिणीता एव चतुर्थांशभागिन्योऽन्यास्तु यत्किंचिदौचित्याल्लभन्त इति बोध्यम्।

**सन्दर्भाः-**

1. मनु. 9/159-60
2. याज्ञ.स्मृ., व्य.अ. 128-131.
3. मनु. 9/134-136.
4. मनु. 9/104.
5. वीरमित्रोदयव्यवहारप्रकाशे बृहस्पति-पृ. 481.
6. मनु. 9/136.
7. मनु. 9/141.
8. मनु. 9/163.
9. मनु. 9/185.
10 मनु. 9/184, .
11. याज्ञ. स्मृ., व्य. अ. 133
12. मनु. 9/154.
13. याज्ञ.स्मृ., व्य. अ. 133-134.
14. मनु. 9/166.
15. मनु. 9/130.
16. मनु/ 9/184.
17. याज्ञ. स्म., व्य. अ. 124.
18. वीरमित्रोदयः (व्यवहारप्रकाशः) पृ.सं. 458.

**सन्दर्भग्रन्थ-विवरणम्**

1. मनुस्मृतिः- मन्वर्थमुक्तावली-संस्कृतटीकया पण्डित हरगोविन्द-शास्त्रिकृत हिन्दी भाषानुवादेन च समन्विता। सम्पादकः- पं. गोपालशास्त्री नेनन, प्रकाशकः- चौखम्बा संस्कृत संस्थान, वाराणसी संस्करणम् - वि.सं.-2063
2. याज्ञवल्क्यस्मृतिः (पुनः मुद्रित संस्करण - 2010),
प्रकाशक - प्रो. राधावल्लभ त्रिपाठी, कुलपति, राष्ट्रिय संस्कृत संस्थान (मानित विश्वविद्यालय) 56-57 इन्स्टीट्यूशनल एरिया, जनकपुरी, नई दिल्ली - 110058
3. वीरमित्रोदयः (व्यवहारप्रकाशः) अष्टमोभागः
सम्पादकः पं. विष्णु प्रसाद शर्मा
प्रकाशकः- चौखम्बा संस्कृत सीरीज ऑफिस, वाराणसी
वर्ष-1987 ई. (वि.सं.- 2044)



# मनुस्मृतिप्रतिपादितार्थागमोपायानां प्रासङ्गिकता

- डॉ. सुधांशुशेखरमहापात्रः

*(लेखक ने इस शोध निबन्ध में मनुप्रतिपादित धर्मानुकूल धनार्जनोपाय का निरूपण किया है। प्राचीन कालीन अर्थोपार्जन की धर्मसम्मत व्यवस्था का वर्णन धर्मशास्त्रीय ग्रन्थों में मिलता है। न्यायसम्मत पद्धति से किसी को पीड़ा पहुँचाये बिना अर्थोपार्जन करना चाहिये न कि अन्यायपूर्वक। अन्याय से अर्जित धन समूलनष्ट करता है, ऐसा धर्मशास्त्रीय वचन है। जीवन निर्वाह के लिए ब्राह्मण, क्षत्रिय, वैश्य, शूद्रादि वर्णों के लिए अनेक उपाय धर्मशास्त्र में वर्णित है, उन्हीं का अनुसरण कर धर्मसम्मत एवं न्यायासम्मत तरीके से धनार्जन किया जा सकता है। मनु ने धनोपार्जन के लिए दाय,लाभ, क्रय, जय, प्रयोग, कर्मयोग और सत्प्रतिग्रह आदि सात उपायों का निर्देश किया है। प्रस्तुत निबन्ध में लेखक ने मनूक्त दश जीविकोपायों का सम्यक् विवेचन किया है।)*

भारतवर्षे प्रादुर्भूतेषु नानाशास्त्रेषु धर्मशास्त्रमन्यतमम्। तच्च वेदाङ्गत्वेन वेदवद्धर्मे प्रमाणमिति सर्वे स्वीकुर्वन्ति। 'श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिरिति' [1]मनुवचनाद् धर्मशास्त्रं स्मृतिशब्देनैव बोध्यते। स्मर्यत इति व्युत्पत्त्या सर्वेषां शास्त्राणां स्मरणयोग्यत्वात् तत्र स्मृतिसंज्ञा यौगिकी, परन्तु धर्मशास्त्रस्य स्मृतिसंज्ञा पारिभाषिकी। सर्वासु स्मृतिषु मनुस्मृतेः वेदार्थोपनिबद्धत्वात् प्राधान्यं, सर्वाभ्यः स्मृतिभ्यः प्रथमं कल्पितत्वात् तस्याः प्राथम्यञ्च सर्वैः प्रतिपाद्यते। तस्यामेव मनुस्मृतौ के तावदर्थागमोपायाः प्रतिपादिताः तेषाञ्च साम्प्रतिककाले का प्रासङ्गिकतेति विषयमधिकृत्य मयाऽत्र पर्यालोच्यते।

धर्मार्थकाममोक्षेषु चतुर्षु पुरुषार्थेषु धर्मादर्थः ततः कामः ततश्च मोक्ष इति क्रमात् धर्मादेव अर्थकाममोक्षाणां समुत्पत्तेः धर्मस्य प्राधान्यमित्यत्र नास्ति संशयः। धर्मशास्त्रे धर्मार्थकाममोक्षाणां चतुर्णां पुरुषार्थानां प्रतिपादित्वेऽपि प्राधान्येन व्यपदेशा भवन्तीति न्यायेन धर्मस्य प्राधान्याद् धर्मशास्त्रमिति व्यवहारः। अतो मनुस्मृतेः प्रमुखधर्मशास्त्रत्वेनाऽपि तत्र अर्थशास्त्रविषयिणी चर्च्चा सुतरां विद्यते। मुख्यतः अर्थशब्देनाऽत्र धनमेव बोध्यते। अर्थस्य आगमः अर्थागमः। आगमो नाम आगमनम् अर्जनम् उपार्जनमिति यावत्। अतः अर्थागमो नाम अर्थोपार्जनम्। प्राचीनकाले अर्थोपार्जनस्य नाना व्यवस्था धर्मशास्त्रे विहिता। तत्र न्यायोपायेनैव अर्थस्योपार्जनं कर्त्तव्यम् , न अन्यायेनेति स्पष्टतया प्रतिपादितम्। अन्यायोपार्जितं वित्तम् अर्जयितारं समूलं विनाशयतीति हेतोः न्यायेन धर्ममार्गेण च वित्तार्जनं कृत्वा तेन जीविकानिर्वाहो विधेयः।

प्राचीनकाले वर्णानुसारेण जीविका स्मृतिषु प्रतिपादिता। यथा- ब्राह्मणः याजनेन

यजमानसकाशाद्दक्षिणारूपेण प्राप्तेन धनेन जीविकानिर्वाहं कुर्यात्। तत्राऽसम्भवे सच्छिष्याणामध्यापनद्वारा दक्षिणारूपेण लब्धेनार्थेन जीविकां निर्वाहयेत्। तत्राप्यसम्भवे प्रतिग्रहेण अर्थाद् दानरूपेण लब्धधनेन जीवेत्। एतेषु त्रिषूपायेषु याजनाध्यापनप्रतिग्रहेषु प्रतिग्रहो निकृष्टोपायः। यतो हि प्रतिग्रहः परिस्थितिविशेषे शूद्रादन्त्यजादपि कर्त्तुं शक्यते। दानमपि न लभ्येत चेत् तदाऽऽपत्कालः पतित इति ज्ञायते। तस्यामापदि ब्राह्मणः क्षत्रियस्य वृत्त्या अर्थात् युद्धार्जितेन धनेन जीवेत्। तत्राऽसम्भवे वैश्यस्य जीविकया अर्थात् कृषि-पशुपालन-वाणिज्यादिना जीविकां निर्वाहयेत्। वाणिज्येन जीवताऽपि ब्राह्मणेन लवणोदनतिलरसाद्यपण्यानां विक्रयं कृत्वा धनं नोपार्जयेत्। अतः पण्यानामेव विक्रयेण धनार्जनं कृत्वा जीविकानिर्वाहं कुर्यात्। परन्तु कदाचिदपि शूद्रवृत्त्या न जीवेत् 'सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेदिति' [2]मनुवचनानुसारेण राजसेवया अर्थात् राजकीयकर्मणि नियुक्तो ब्राह्मणः कथंचिदपि धनोपार्जनं न कुर्यात्। क्षत्रियः युद्धार्जितेन धनेन जीविकानिर्वाहं कुर्यात्। तया जीविकया चाजीवन् वैश्यस्य जीविकया, तया चासम्भवे शूद्रवृत्त्या जीवितुमर्हेत्। शूद्रश्च ब्राह्मणादिवर्णानां सेवया लब्धे धने जीविकां निर्वाहयेत्। आपत्काले स वैश्यस्य जीविकयाऽपि जीवितुमर्हेत्। अयञ्चापद्धर्म इति कथ्यते। एवमापदि गतायां सर्वे वर्णाः प्रायश्चित्तं कृत्वा पुनः स्वजीविकयैव धनोपार्जनं कृत्वा जीवितुं यतेरन्।

नीचवर्णः स्वापेक्षया उच्चतरवर्णस्य वृत्त्या कदाचिदप्यर्थोपार्जनं न कुर्यात्। अर्थात् शूद्रः स्ववृत्त्या चलितुमसमर्थः कदाचित् वैश्यवृत्त्या अर्थात् कृषिपशुपालनवाणिज्यादिना अर्थोपार्जनं कृत्वा जीवेत्, परन्तु न युद्धादिक्षत्रियवृत्त्या, नापि याजनाध्यापनादिब्राह्मणवृत्त्या अर्थोपार्जनं कुर्यात्। तद्वत् वैश्योऽपि स्ववृत्त्या चलितुमसमर्थः न क्षत्रियवृत्त्या, नापि ब्राह्मणवृत्त्या अर्थोपार्जनं कुर्यात्। पुनश्च क्षत्रियः स्ववृत्त्या चलितुमसमर्थः न कदापि ब्राह्मणवृत्त्या अर्थोपार्जनं कुर्यात्। एवं प्रकारेण वर्णविशेषेण अर्थोपार्जनव्यवस्था प्राचीनकाले आसीत्। प्रसङ्गेऽस्मिन् [3]मनुना प्रतिपादितं यत् –

**अध्यापनमध्ययनं यजनं याजनं तथा।**
**दानं प्रतिग्रहश्चैव षट् कर्माण्यग्रजन्मनः।।**
**षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका।**
**याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः।।**
**त्रयो धर्मा निवर्त्तन्ते ब्राह्मणात्क्षत्रियं प्रति।**
**अध्यापनं याजनं च तृतीयश्च प्रतिग्रहः।।**
**वैश्यं प्रति तथैवैते निवर्त्तेरन्निति स्थितिः।**
**न तौ प्रति हि तान्धर्मान् मनुराह प्रजापतिः।।**
**शस्त्रास्त्रभृत्त्वं क्षत्रस्य वणिक् पशुकृषिर्विशः।**
**आजीवनार्थं धर्मस्तु दानमध्ययनं यजिः।।**
**वेदाभ्यासो ब्राह्मणस्य क्षत्रियस्य च रक्षणम्।**
**वार्त्ता कर्मैव वैश्यस्य विशिष्टानि स्वकर्मसु।।**

अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा।
जीवेत् क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तरः।।
उभाभ्यामप्यजीवंस्तु कथं स्यादिति चेद्भवेत्।
कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकाम्।।
वैश्यवृत्त्याऽपि जीवंस्तु ब्राह्मणः क्षत्रियोऽपि वा।
हिंसाप्रायां पराधीनां कृषिं यत्नेन वर्जयेत्।। इति।

एतादृशी अर्थोपार्जनस्य या व्यवस्था मनुना प्रतिपादिता सा सम्प्रति कादाचित्कत्वेन दृश्यते। केचिद् ब्राह्मणा याजनेन, केचिदध्यापनेन केचिच्च प्रतिग्रहेणापि सम्प्रति अर्थोपार्जनं कृत्वा जीविकानिर्वाहं कुर्वन्ति। किन्तु केचिद् ब्राह्मणा अपि राजकीयकर्मचारिणो भूत्वा शूद्रवृत्त्या जीवन्ति। केचिदपि शिल्पवाणिज्यादिना वैश्यवृत्त्या धनोपार्जनं कृत्वा जीवन्ति। सम्प्रति राजतन्त्राभावात् क्षत्रियस्य प्रजापालनधर्मोऽपि नास्ति। यः कश्चिद् वर्णः जातिविशेषो वा गणतन्त्रपद्धत्या निर्वाचितो भूत्वा देशस्य शासनकर्मणि युक्तः बहुधनोपार्जनं करोति। यः कश्चिद् वर्णः जातिविशेषो वा भारतसर्वकारेण नियुक्तः देशस्य रक्षार्थं शत्रुभिः सह युद्धं कृत्वा सेवाधनं लब्ध्वा तेन जीविकानिर्वाहं करोति। तद्वद्यः कश्चिद् वर्णः जातिविशेषो वा स्वेच्छया कृषिकर्म पशुपालनं वाणिज्यादिकं वा कृत्वा जीविकां निर्वाहयितुं शक्नोति। तथा च यः कश्चिद् वर्णः जातिविशेषो वा स्वेच्छया स्वयोग्यतानुसारेण यस्मिन् कस्मिन्नपि कर्मणि नियुक्तः अर्थोपार्जनं कर्त्तुं प्रभवति। एवमर्थोपार्जनस्य नानोपायाः सम्प्रत्यपि वर्त्तन्ते।

पुनश्च मनुना धनागमस्य सप्त धर्म्या उपायाः प्रतिपादिताः। ते यथा–दायः, लाभः, क्रयः, जयः, प्रयोगः, कर्मयोगः सत्प्रतिग्रहश्चेति। यथोक्तं [4]तेन–

सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः।
प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च।। इति।

अर्थाद् दायो नाम पैतृकं धनम्। पितृपितामहाद्यर्जितं यद्धनं परम्परया पुत्रपौत्रादीनां कृते आगतं भवति। एतादृशो धनागमो धर्म्यः। लाभो नाम मित्रादिसकाशात् निध्यादेः प्राप्तिः। क्रयो नाम समुचितमूल्यदानेन द्रव्यस्वीकारः। जयो नाम विजयिना क्षत्रियेण युद्धार्जितरूपेण यल्लब्धम्। प्रयोगो नाम ऋणं दत्त्वा विधिप्रयुक्तवृद्ध्या लब्धं यद्धनम्। कर्मयोगो नाम कृषिवाणिज्यादिना लब्धं यद्धनम्। सत्प्रतिग्रहो नाम विधिपूर्वकं दानस्य स्वीकारः। एतेषु सत्प्रतिग्रहो ब्राह्मणस्य, जयधनं क्षत्रियस्य, प्रयोगकर्मयोगौ वैश्यस्य, दायलाभक्रयाश्च त्रय एव चतुर्णामपि वर्णानां धर्म्या वित्तागमोपाया भवन्ति। एतेषु धर्म्येषु वित्तागमोपायेषु साम्प्रतिके कालेऽपि जना लब्धेन स्वपैतृकधनेन, बन्धुप्रभृतिभ्यः सकाशात् प्राप्तेन द्रव्येण, स्वयं क्रीतेन द्रव्येण, ऋणं दत्त्वा तल्लब्धेन वृद्धिरूपेण धनेन, कृषिवाणिज्यादिना लब्धेन धनेन वा जीविकानिर्वाहं कुर्वन्तो दृश्यन्ते। किन्तु क्षत्रियस्य यद् जयधनमासीत् तत् सम्प्रति नास्ति। यतो हि सर्वकारपक्षतः यः कोऽपि वर्णः क्षत्रियातिरिक्तोऽपि युद्धविभागे नियुक्तः धनमर्जयितुमर्हति। पुनश्च सम्प्रति सत्प्रतिग्रहो नास्ति। यतो हि 'कलौ त्वनुगमान्विते' इति वचनाद् दातुः पश्चाद्धावमानः कश्चित् सम्प्रदानः कियद्दूरं गत्वापि यत्

किञ्चिद्धनं लभते नवेति दशायां प्रतिग्रहस्य सेवाधनरूपत्वात् सत्प्रतिग्रहो नास्तीति मन्यते।

अपि चापत्काले जीविकायाः कृते दश जीवनहेतवो [5]मनुनोक्ताः। ते च यथा–

**विद्या शिल्पं भृतिः सेवा गोरक्ष्यं विपणिः कृषिः।**
**धृतिर्भैक्ष्यं कुसीदं च दश जीवनहेतवः।।** इति।

अत्र विद्यापदेन वैद्यविद्या, तर्कविद्या विषापनयनादिविद्या बोध्यन्ते, न वेदादिविद्या; यद्द्वारा धनमर्जयित्वा कुटुम्बपोषणं कर्तुं शक्यते। शिल्पशब्देन तैलादीनां सुगन्धीकरणं, भृतिपदेन प्रेष्यभावेन वेतनग्रहणं, सेवा नाम परस्य आज्ञासम्पादनं, गोरक्ष्यं नाम पशुपालनं, विपणिर्नाम वाणिज्यं, कृषिर्नाम भूमेः स्वयं कर्षणं कृत्वा शस्योत्पादनम्, धृतिर्नाम सन्तोषः अर्थात् स्वल्पेनापि द्रव्येण जीविकानिर्वाहः, भैक्ष्यं नाम भिक्षावृत्तिः, कुसीदं नाम वृद्ध्यर्थं धनप्रयोगः। एवमादिषु जीविकानिर्वाहहेतुष्वन्यतमेन हेतुना स्वेच्छया जीवेदिति मनोरभिप्रायः।

साम्प्रतिककालेऽपि जनाः भेषजविद्यया रोगिचिकित्सया बहुधनमर्जयन्ति। तर्कविद्यया अधिवक्तृरूपेण न्यायालये वादिप्रतिवादिनोः पक्षतः तर्कं प्रदर्श्य व्यवहारमार्गेण बहुधनं लभन्ते। अपि च विषवैद्यरूपेण मन्त्रौषधिद्वारा सर्पादिविषदोषं विनाश्य धनमर्जयन्तो दृश्यन्ते। पुनश्च तैलादिसुगन्धीकरणमिव बहुविधेन क्षुद्रशिल्पेन जना धनमर्जयन्ति। तथा च कर्मकररूपेण कर्म कृत्वा स्वामिनः सकाशातद् धनं लभन्ते। परस्य कस्यचिद् गृहे स्थित्वा तत्स्वामिन आज्ञासम्पादनद्वाराऽपि मासिकं वार्षिकं वा वेतनं जना लभन्ते। तद्वत् गवादिपशुपालनेन पालकरूपेण गवादिस्वामिनां सकाशाद्धनं लब्ध्वा, वाणिज्यादिना द्रव्याणां क्रय–विक्रयं कृत्वा तदुत्थेन लाभेन च जीविकानिर्वाहं कुर्वन्ति। अपि च ग्रामे ग्रामे कृषिकर्मणा जनाः सस्यादिकमुत्पाद्य तद् भुक्त्वा जीवन्ति, अवशिष्टं सस्यञ्च विक्रीय धनमर्जयन्ति। केचन निर्द्धना अपि भिक्षावृत्त्या जीवनधारणं कुर्वन्तो दृश्यन्ते। केचिच्च ऋणं दत्त्वा तद् वृद्ध्या महद्धनमर्जयन्ति। सम्प्रति सन्तोषः नावलम्ब्यते। यस्य यावद्धनमस्ति स तावता सन्तुष्टो न भूत्वा तस्य धनस्य वृद्ध्यर्थं बहु यतते। अन्ये सर्वे जीवनहेतवः सम्प्रत्यपि उपयुज्यन्ते। प्राचीनकाले आपद्येव सर्वेषामेते जीवनहेतव आसन्। सम्प्रति तु अनापद्यप्येते जीवनहेतवो भवन्तीति भेदः। पुनश्च प्राचीनकाले राजतन्त्रे राजा प्रजाभ्यः करमादाय राजकोषं वर्द्धयित्वा राज्यस्य समृद्धिं करोति स्म, परन्तु सम्प्रति सर्वकारः जनताभ्यो बहुविधं करमादाय राज्यस्य देशस्य वा समृद्धिं न चिन्तयित्वा केवलं स्वकोषमेव वर्द्धयतीति भेदः। एतावता मनुस्मृतौ प्रतिपादितानामर्थागमोपायानां प्रासङ्गिकता साम्प्रतिककाले कीदृश्यस्ति तत् पर्यालोचितम्।

**सन्दर्भा :**

1. मनु.– 2-10
2. मनु.– 4-6
3. मनु–10/75-83
4. मनु–10/115
5. मनु.10-116

**सन्दर्भग्रन्थ :** मनुस्मृतिः। चौखम्बासंस्कृतभवन, वाराणसी 2009



# वैदिकवाङ्मये परिवेशभावना

– डॉ. शिप्रा राय

*(आज पर्यावरण वैश्विक चिन्ता का विषय है। किन्तु भारतीय संस्कृत साहित्य प्रारम्भ से ही पर्यावरण के प्रति सजग रहा है। वैदिक साहित्य तो ऐसे उल्लेखों से भरा पड़ा है। वैदिकयुगीन मानव अपनी जीवनचर्या के लिए पूरी तरह प्रकृति पर ही आश्रित था। ऋग्वेद में आकाश को मृत्युलोक वासियों का जनक और पृथ्वीके परिवेश को मनुष्यों के जीवन यापन के लिए सर्वथा अनुकूल कहा है। इसीलिए वेदों में सर्वत्र वायु, नदी, औषधी, रात्रि, उषा, पृथ्वी, आकाश, सूर्य, वनस्पति आदि की प्रार्थना की गई है। यजुर्वेद में परिवेश की शान्ति कामना के लिए प्रार्थना की गई है 'द्यौः शान्तिरन्तरिक्षं शान्तिः। "पृथिवीशान्तिरापः" आदि।)*

संस्कृतसाहित्यस्य बहुषु स्थलेषु परिवेशसचेतनताया उल्लेखः दृश्यते। वैदिकसाहित्ये तथा काव्यनाटकादिष्वपि परिवेशविषये विविधम् आलोचनम् अस्माकं दृष्टिपथमागच्छति। वैदिकवाङ्मयस्य अपि बहुषु स्थलेषु परिवेशसचेतनताप्रसङ्गे ऋषयः नैकविधानि मतानि उपस्थापितवन्तः। वैदिकयुगस्य मानवाः जीवनधारणस्य कृते प्रकृत्याः उपरि सर्वं समर्पितवन्तः। प्रकृतिं खलु नानाविधप्रयोजनेषु ते उपयुक्तवन्तः। ऋग्वेदे, सामवेदे, यजुर्वेदे, अथर्ववेदेऽपि ऋषयः परिवेशस्य गुरुत्वम् अङ्गीचक्रुः। ऋग्वेदे आकाशः मर्त्यवासिनां जनकरूपेण वर्णितो दृश्यते। तथा च मन्त्रः–

**ऊर्जं नो द्यौश्च पृथिवी च पिन्वतां पिता माता**
**विश्वविदा सुदंससा।**[1]

पुनः ऋग्वेदस्य दशममण्डले स्थानत्रयस्य देवतारूपेण प्रार्थना उच्यते–

**सूर्यो न दिवस्पातु वातोऽन्तरिक्षादग्निर्नः**
**पार्थिवेभ्यः।**[2]

सूर्य अस्माकं द्युलोकस्य उपद्रवात्, वायुः आकाशस्य उपद्रवात्, अग्निश्च पृथिव्या उपद्रवात् अस्मान् रक्षतु। ऋग्वेदस्य ऋषयः वायुं निकषा प्रार्थनां कृत्वा तं स्तुवन्ति–

**आ वात वाहि भेषजं वि वात वाहि यद्रपः।**
**त्वं हि विश्वभेषजो देवानां दूत ईयसे।।**[3]

हे वायो! त्वम् अस्यां दिशि औषधम् आनय, यत् न हितकरं तत् अस्मात् स्थाना अन्यत्र नयतु त्वं हि विश्वस्य भेषजस्वरूपम्, अत एव त्वं देवानां दूतो भव।

पुनः उच्यते यत् –

**वात आ वातु भेषजं शम्भु मयोभु नो हृदे।**
**प्र ण आयुँषि तारिषत्।।[4]**

अत्र वायुः शुद्धरूपेण भेषजरूपेण च प्रवहतु। स कल्याणकररूपेण सुखकरो भवतु जनेभ्यः दीर्घायुषं प्रददातु। वर्तमानकालेऽपि दृश्यते यत् – वायुं दूषणमुक्तं कृत्वा कल्याणकरपरिवेशस्य सृष्ट्यै वैज्ञानिकाः सततं प्रयन्तते इति। ऋग्वेदे उच्यते–जलं हि जीवनम् जलं हि मनुष्यस्य प्राणाः। न केवलं जलं नरस्य तृष्णां दूरीकरोति, जलं भेषजरूपेणापि परिगण्यते-

**अप्स्वन्तरमृतमप्सु भेषजमपामुते प्रशस्तये।**
**देवा भवत वाजिनः।।[5]**

वैदिकयुगे विशेषतः ऋग्वेदस्य युगे विविधरोगस्य भेषजरूपेण बहुलतया उद्भिजं व्यवह्रियते ऋग्वेदस्य अरण्यानीसूक्ते दृश्यते–

**न वा अरण्यानिऽन्तान्यश्चेन्नाभिगच्छति।**
**स्वादोः फलस्य जगध्वाय यथाकामं निपद्यते।।[6]**

अर्थात् अरण्यानी प्राणसंहारकरूपेण न वर्णिता ऋषिभिः। इयम् अरण्यानी सर्वप्राणिनाम् आश्रयस्थलं मातृस्वरूपाणि च–

**आञ्जनगन्धिं सुरभिं बह्वन्नामकृषीबलाम्।**
**प्राहं मृगाणां मातरमरण्यानिमशंसिषम्।।[7]**

ऋग्वेदे दृश्यते यत् – पृथिव्याः परिवेशः जीवनयापनस्य कृते अनुकूलः भवति। एतद्विषये वैदिंकयुगस्य मानवाः सदा दत्तावधाना आसन्। ते प्रार्थयन्ति–

**मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः।**
**माध्वी र्नः सन्त्वोषधीः।**
**मधु नक्तमुतोषसो मधुमत् पार्थिवं रजः।**
**मधु द्यौरस्तु नः पिता।।**
**मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः।**
**माध्वीर्गावो भवन्तु नः।।[8]**

पार्थिवपरिवेशस्य वायु–नदी–औषधि–रात्रि–उषा–पृथिवी–आकाश–सूर्य–वनस्पति-धेन सर्वे मधुमन्तो भवन्तु।

न केवलमृग्वेदे सामवेदेऽपि परिवेशस्य उपादानरूपेण वायोः गुरुत्वम् उपलभ्यते। ऋषिराह

**उत वात पितासि न उत भ्रातोत नः सखा**
**स नो जीवातवे कृधि।[9]**

हे वायो, त्वं खलु अस्माकं पिता, त्वम् अस्माकं भ्राता, त्वम् अस्माकं सखा, अत एव त्वम् अस्माकं जीवनधारणाय आयुः-कारकं भेषजं सम्पादय।

पुनः सामवेदेऽपि अपाम् उल्लेखः दृश्यते। स च यथा-

**शं नो देवीरभिष्टये शं नो भवन्तु पीतये।**

**शं योरभिस्त्रवन्तु नः।**[10]

अस्माकम् अभिलाषपूरणार्थं सुखेन पालनार्थं च जलदादेवी कल्याणवारिवर्षणेन अस्मान् सुखिनः करोतु।

सामवेदे परिवेशस्य उपादानरूपेण द्युलोकेन सह पृथिव्याः स्तुतिः न दुर्लभा-

**मन्ये वां द्यावापृथिवी सुभोजसौ ये अप्रथेथाममितमभि योजनम्।**

**द्यावापृथिवी भवतं स्योने ते नो मुञ्चतमंहसः।**[11]

हे द्यावापृथिवी, युवां पालनकर्तारौ सन्तौ धनं सुखं च अस्मभ्यं प्रयच्छतम्। अस्मान् सर्वविधपापात् रक्षत।

यजुर्वेदेऽपि देवभावनायां परिवेशचेतनायाः प्रतिफलनं दृश्यते। शुक्लयजुर्वेदे सूर्यस्य तेजसः कर्तृरूपेण विश्वस्य प्रकाशकरूपेण च वर्णनं दृश्यते-

**तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य।**

**विश्वमा भासि रोचनम्।।**[12]

अत्र जलस्य नैकविधः समुल्लेखः परिदृश्यते। जलं ही मातृरूपा देवी। जलं ही शक्तिवर्धकम् , अमृततुल्यं ओजः स्वरूपं च। खलं खलु मृत्योः अस्मान् रक्षति-

**मृत्योः पाह्योजोऽसि सहोऽस्यमृतमसि।**[13]

**पुनरपि यजुर्वेदे उच्यते-** इयं पृथिवी मङ्गलमयी सुखकरी शक्तियुता च भवतु-

सूक्ष्मा चासि, शिवा चासि। स्योना चासि सुषदा चास्यूर्जस्वती चासि पयस्वती च।।[14]

पुनश्च शुक्लयजुर्वेदे पृथिवी, अन्तरिक्षम्, स्वर्गः, सूर्यचन्द्रमसौ, नक्षत्राणि, ओषधि-वनस्पति-सरीसृपाः इत्येतेषाम् अधिष्ठातृदेवतां प्रति प्रार्थनां कृत्वा ऋषयः उक्तवन्तः-

"पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहा दिवे स्वाहा सूर्याय स्वाहा चन्द्राय स्वाहा नक्षत्रेभ्यः स्वाहाऽद्भ्यः स्वाहौषधीभ्यः स्वाहा वनस्पतिभ्यः स्वाहा परिप्लवेभ्यः स्वाहा चराचरेभ्यः स्वाहा सरीसृपेभ्यः स्वाहा।"[15]

तत्रैव ऋषिकवयः प्रार्थितवन्तः- पार्थिवपरिवेशोऽयं जीवनस्य पक्षे सुखकरो भवतु-

**शं नो वातः पवतां शं नस्तपतु सूर्यः।**

**शं नः कनिक्रदद्देवः पर्जन्यो अभिवर्षतु।।**

**अहानि स भवन्तु नः शं रात्रीः प्रति धीयताम्।।**[16]

परिवेशरक्षणार्थं प्रार्थना दृश्यते वेदे। अस्माकं सुखकररूपेण वायुः प्रवहतु, सूर्यः अस्माकं सुखकररूपेण आपः ददातु, पर्जन्यदेवः अस्माकं कृते सुखकररूपेण वर्षतु। दिवसः अस्माकं

कृते सुखकरो भवतु। रात्र्यभिमानीदेवता अस्मभ्यं सुखं ददातु।

परिवेशस्य शान्तिकामनायै प्रार्थना दरीदृश्यते यजुर्वेदे–

**द्यौः शान्तिरन्तरिक्षं शान्तिः पृथिवी शान्तिरापः**
**शान्तिरोषधयः शान्तिः।**
**वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः।**
**सर्वं शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि।।**[17]

परिवेशस्य सर्वतोभावेन शान्तिकामनार्थं प्रार्थना क्रियते वेदे। द्युलोकः शान्तिपूर्णः भवतु, अन्तरिक्षं शान्तिपूर्णं भवतु, पृथिव्यां शान्तिः विराजताम्। आपः शान्ताः भवन्तु, ओषधयः शान्ताः भवन्तु, वनस्पतयः वर्धिता भवन्तु, सर्वे देवा शान्तिप्रदाः भवन्तु, ब्रह्मा शान्तिप्रदः भवतु, सर्वं सुखदं भवतु, शान्तिः विराजताम् , इयं शान्तिः अस्माकं सर्वेषां कृते भवतु।

पुनरपि तत्र प्रार्थना दृश्यते–

**शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः।**
**मा द्यावापृथिवी अभी शोचीर्माऽन्तरिक्षं मा वनस्पतीन्।।**[18]

अर्थात् हे अग्ने, नराणां हितार्थं मङ्गलदायको भव। द्यावापृथिवी अन्तरिक्षं यथा अस्मान् न तापपेयुः तथा त्वं कुरू। वनस्पतयोऽपि यथा न आपः दह्युः त्वं कुरू।

पुनरपि वृक्षं देवतारूपेण सम्बोध्य प्रार्थितवान् ऋषिकविः–

**नमो वृक्षेभ्यः**[19]
**वनानां पतये नमः**[20]
**वृक्षाणां पतये नमः।...... ओषधीनां पतये नमः।**[21]

वनस्पतिरक्षार्थं प्रार्थना अस्ति वेदे। हे अङ्गिरः अग्ने ! नराः हितार्थं त्वं मङ्गलदायको भव। यथा द्यावापृथिवीं अन्तरिक्षं च अस्माकं कृते सुखकरानि भवन्तु तथा त्वं कुरु। वनस्पतयः अपि अस्माकं कृते सुखकराः भवन्तु।

**पुनः पार्थिवपरिवेशस्य रक्षणार्थं पशुपक्षिणां कामना दृश्यते-**
**ग्राम्याश्च मे पशव आरण्याश्च मे।**[22]

यद्यपि एतत् सत्यम् तथापि यजुर्वेदस्यकाले पशुयागः प्रचलितः आसीत्। एतत्सत्वेऽपि पशूनां रक्षणार्थं प्रार्थना न दुर्लभा।

**यजमानस्य पशून् पाहि।**[23]

अन्यत्रापि दृश्यते–

**घृतेनाक्तौ पशुँस्त्रायेथां।**[24]

पुनः पशूनां वृक्षाणाञ्च विनाशेन यत् पापम् आचरितं तस्मात् मुक्तये मन्त्रो दृश्यते-

यो वामिन्द्रवरुणा द्विपात्सु पशुषु स्रामस्तम् वामेतनाव यज इत्याहैत्यवतीर्वा आपः ओषधयो वनस्पतयः प्रजाः पशव उपजीवनायास्ता एवास्मै वरुणपाशान्मुञ्चति।[25]

हे मित्रावरुणौ! नराणां समीपे, पशून् निकषा योऽयमपराधः तस्य यागमाध्यमेन यूयं विनाशं कुरूतम्। अनेन मन्त्रमाध्यमेन प्राणिनां जीवनधारणार्थं प्रयोजनीयं जलम्, ओषधिं, वनस्पतीन्, नरान् पशूंश्च वरुणस्य पाशात् मुक्तान् कुरुतम्।

पुनः यजुर्वेदसंहितान्तर्गतशतपथब्राह्मणे गृहस्थस्य अवश्यकर्त्तव्यरूपेण पञ्चमहायज्ञस्य विधानम् अस्ति। अस्य पञ्चमहायज्ञस्य अन्यतमः खलु भूतयज्ञः। अनेन भूतयज्ञमाध्यमेन सर्वभूतस्य कल्याणं साधितं भवतु।

इदानीमथर्ववेदं प्रति दृष्टिं पातयामः। अथर्ववेदस्य ऋषयः पार्थिवपरिवेशस्य भावनया प्रभाविताः सन्तः पार्थिवजीवनम् आलोचितवन्तः। परिवेशो हि जीवनं रक्षितवान्। अथर्ववेदेऽपि प्राकृतिकपरिवेशस्य विविधोपादानरूपेण वायोः स्तुतिं कृत्वा ऋषयः उक्तवन्तः-

**वायोः सवितुर्विदथानि मन्महे यावात्मन्वत् विशथो यौ च रक्षथः।**

**यौ विश्वस्य परिभू वभूवथुस्तौ नो मुञ्चतमंहसः।[26]**

अथर्ववेदे वायुः जगतः प्राणरूपेण सविता च सर्वस्य प्रेरकरूपेण वर्णितौ। विश्वस्य आधारस्वरूपो वायुः सर्वप्रेरकः सवितृदेवश्च श्रुतिविहिते कर्मणि अस्मान् प्रवर्तयतः। हे वायो सवितः च, युवां स्थावरजङ्गमात्मकस्य विश्वस्याभ्यन्तरं प्रविश्य तत् पालयतम्। युवां विश्वस्य परिग्रहीतारौ, यूयं पापात् अस्मान् मुञ्चत।

ऋग्वेदमनुसृत्य अथर्ववेदेऽपि द्युलोकेन सह पृथिव्याः स्तुतिः दृश्यते। तथापि अथर्ववेदे पृथिवी भूमिः वा विशेषरूपेण गुरुत्वम् आवहति। इयं पृथिवी अन्नेन सह अस्माकं प्राणान् आयुश्च धारितवती। पार्थिवपरिवेशे ग्रीष्म-वर्षा-शरत् - हेमन्त-शिशिरवसन्ताः षट् ऋतवः रात्रिन्दिवं मनुष्याणां स्थितिविषये सचेतनत्त्वं प्रकटयन्ति अस्मिन् मन्त्रे-

**ग्रीष्मस्ते भूमे वर्षाणि शरद्धेमन्तः शिशिरोवसन्तः।**

**ऋतवस्ते विहिता हायनीरहोरात्रे पृथिवि नो दुहाताम्।।[27]**

अथर्ववेदस्य भूमिसूक्ते पृथिव्याः स्तुतिरूपेण यद्वर्णनं समुपलभ्यते तस्य सौन्दर्यम् अतीव तात्पर्यपूर्णम्। मानवस्य कल्याणार्थं पृथिव्याः स्तुतिं कुर्वन्ति ऋषयः-

**यस्यामन्नं ब्रीहियवौ यस्या इमाः पञ्च कृष्टयः।**

**भूम्यै वर्जन्यपन्त्यै नमोऽस्तु वर्षमेदसे।।[28]**

इयं पृथिवी नरान् पशूंश्च पालयति-

**त्वं विभर्षि द्विपदस्त्वं चतुष्पदः।[29]**

पुनः अथर्ववेदस्य ऋषिकवि पृथिव्याः तृप्तये वृष्टिं निकषा प्रार्थनां कृत्वा अवदत् -

**समुत्पतन्तु प्रदिशो नभस्वतीः समभ्रानि वातजूतानि यन्तु।**

**महऋषभस्य नदतो नभस्वतो वाश्रा आपः पृथिवीं तर्पयन्तु।।[30]**

वृष्टिं निकषा तप्तायाः पृथिव्या परितृप्तये प्रार्थनां कृतवान् ऋषिः। सर्वदिक्षु मेघस्य

सञ्चारो भवतु। झञ्झावातपूर्णमेघाः सम्मिलिता भवन्तु। बलीवर्दतुल्यः गर्जनकारी मेघस्तथा वृष्टिः पृथिवीं तर्पयताम्। पुनरपि उच्यते–

हे पर्जन्यदेव! समुद्रात् जलपूर्णं मेघम् उद्धृत्य समग्रां भूमिं सिञ्चतु। व्रीहियवादयः तरुगुल्मादयश्च वृष्टेः जलेन आनन्दिताः भवन्तु–

**महान्तं कोशमुदचाभिषिञ्च सविद्युतं भवतु वातु वातः।**
**तन्वतां यज्ञं बहुधा विसृष्टा आनन्दिनीरोषधयो भवन्तु।।**[31]

हे पर्जन्यदेव, अस्मिन् पात्रे जलं सिञ्चतु। मेघो विद्युत्युक्तः भवतु, वायुः प्रवहतु, बहुभावेन यज्ञस्य पुष्टिसाधनं कृत्वा ओषधयो नः कृते आनन्ददायका भवन्तु।

पुनः अथर्ववेदस्य पार्थिवपरिमण्डले वृक्षोऽपि भेषजरूपेण व्यवहृतः। न केवलम् अथर्ववेदस्य ऋषयः रोगनिवारकभेषजरूपेण उद्भिदं व्यवहृतवन्तः परन्तु ऋग्वेदस्य ऋषयोऽपि प्रार्थितवन्तः–

**शतं वो अन्व धामानि सहस्त्रमुत वो रुहः**
**अधा शतक्रत्वो यूयमिमं मे अगदं कृत।**[32]

हे जननीस्वरूपाः ओषधयः। यूयं मृत्तिकाम् आरोहत। युष्माकं शतं सहस्रं वा स्थानानि सन्ति। यूयं मम आरोग्यविधानं कुरुत।

अथर्ववेदे ग्राम्यपशूनां गोमहिषादीनां प्रियहितार्थं कामना नरस्य आसीत्। सा च यथा–

**प्रियः पशूनां भूयासम्** [33]

न केवलं ग्राम्यानां पशूनां रक्षणाय अपि तु आरण्यपशूनामपि रक्षणं तत्र समेषां दृष्टिमाकर्षति। यथा–

**ये ते आरण्याः पशवो मृगा वने हिताः सिंही व्याघ्राः पुरुषादश्चरन्ति।**
**उलं वृकं पृथिवी दुच्छुनामत ऋक्षीकां रक्षो अप वाधयास्मत्।।**[34]

**परिशेषे उच्यते**–परिवेशस्य रक्षणम् अतीव प्रयोजनमूलम्। परिवेशरक्षणार्थं वर्तमानकालेऽपि समेषां मध्ये चिन्ता दृश्यते। परिवेशस्य प्रयोजनं सर्वेषु कालेषु समानतया समुपयोगि भवति। विश्वस्य कल्याणाय वैदिकऋषयः परिवेशस्य गुरुत्वम् उपलब्धवन्तः। तस्मात् वैदिकवाङ्मये परिवेशस्य संरक्षणम् अधिकृत्य बहूनि वचनजातानि अस्माकं दृष्टिपथम् आगच्छन्ति। न केवलं वैदिकेषु सुक्तेषु अपि तु उपनिषदि, पुराणसाहित्ये स्मृतिशास्त्रे, अर्थशास्त्रे, काव्ये नाटके च परिवेशस्य संरक्षणम् आश्रित्य तदानीन्तनं विशेषचिन्तनम् , अद्यतनयुगेऽपि च तस्य् ईदृक् प्रतिफलनं च दृश्यते। इदानीन्तनकालेऽपि परिवेशविशेषज्ञाः परिवेशस्य रक्षणविषये सर्वदा तत्पराः परिलक्ष्यन्ते।

**सन्दर्भाः-**


1. ऋग्वेद, 6/70/6
2. ऋग्वेद, 10/158/1
3. ऋग्वेद, 10/137/3
4. ऋग्वेद, 10/186/1
5. ऋग्वेद, 10/23/19
6. ऋग्वेद, 10/146/5
7. ऋग्वेद, 10/146/6
8. ऋग्वेद, 1/10/6-8
9. सामवेद, 1841
10. सामवेद, 33
11. सामवेद, 622
12. शुक्लयजुर्वेद, 33/36
13. शुक्लयजुर्वेद, 10/15
14. शुक्लयजुर्वेद, 1/27
15. शुक्लयजुर्वेद, 22/29
16. शुक्लयजुर्वेद, 36/10-11
17. शुक्लयजुर्वेद, 36/17
18. शुक्लयजुर्वेद, 11/45
19. शुक्लयजुर्वेद, 16/17
20. शुक्लयजुर्वेद, 16/18
21. शुक्लयजुर्वेद, 16/19
22. शुक्लयजुर्वेद, 18/14
23. शुक्लयजुर्वेद, 1/1
24. शुक्लयजुर्वेद, 6/11
25. कृष्णयजुर्वेद, 2/3/13
26. अथर्ववेद, 4/5/5/1
27. अथर्ववेद, 12/1/1/36
28. अथर्ववेद, 12/1/1/42
29. अथर्ववेद, 12/1/1/15
30. अथर्ववेद, 4/3/5/1

31. अथर्ववेद, 4/3/5/16
32. ऋग्वेद, 10/97/2
33. अथर्ववेद, 17/1/1/4
34. अथर्ववेद, 12/1/1/49

**सहायकग्रन्था:-**


1. ऋग्वेदसंहिता- श्रीयुक्तदुर्गादासलाहिड़ीशर्माकृतः व्याख्यातः सम्पादितच।
2. ऋग्वेदसंहिता-प्रथम खण्ड और द्वितीय खण्ड, हरफ प्रकाशनी, कल-7।
3. वेदेर परिचय- डॉ. योगीराज वसु, फार्मा के.एल.एम. प्राइवेट लिमिटेड, कलकाता।
4. सामवेदसंहिता- हरफ प्रकाशनी, कल-12 प्रथम प्रकाश, 4 अक्टूबर, 1975
5. यजुर्वेदसंहिता- हरफ प्रकाशनी।
6. अथर्ववेदसंहिता-हरफ प्रकाशनी कल-7, अक्टूबर-2011




# आशौचसन्निपातविचारः

- दामोदरमहान्तः

*(इस प्रबन्ध में विविध स्मृतियों में उपलब्ध अशौच के लक्षण और स्वरूप की समीक्षा के पश्चात् जननाशौच एवं मरणाशौच इन दोनों भेदों के बारे में विस्तार से विमर्श किया गया है। एक अशौच के मध्य में यदि द्वितीय अशौच पड़ जाता है तो ऐसी स्थिति में क्या करना चाहिये? शुद्धि कैसे की जानी चाहिये? कितने दिनों में शुद्धि करनी चाहिए? इत्यादि विषयों की सम्यक् विवेचना की गई है। एवमेव जननाशौच के मध्य में यदि मरणाशौच हो जाय तो मरणाशौच के बाद शुद्धि होती है इत्यादि। अशौच सन्निपात से सम्बन्धित बिन्दुओं पर लेखक ने निर्णयसिन्धु, विज्ञानेश्वर, गदाधरराजगुरु प्रभृति के मतों, वचनों, प्रमाणों आदि का उद्धरण देते हुए सुन्दर प्रतिपादन किया है।)*

'शुच्-धातोः किप्रत्यये कृते निष्पन्नः शुचिशब्दः। शुचिर्नाम विमलं विशुद्धं पवित्रीकरणं वा। शुचेर्भावः शौचम्। शौचं नाम शुद्धत्वम्। शुद्धस्याभावः एव अशौचमिति विदुषामभिप्रायः। अस्याशौचस्य लक्षणं विविधैः धर्मशास्त्रकारैः टीकाकारैश्च भिन्नभिन्नदृष्ट्या प्रतिपादितम्।[1] मित्रमिश्रानुसारेण सन्ध्या-पञ्चमहायज्ञादि-कर्मानधिकारसंपादकोऽतिशयविशेष आशौचम् इति। अशौचसंसर्गाभावः शुद्धिः। तच्चाशौचं मानवस्य काऽपि असाधारणदशा या मानवे सन्ध्यापञ्चमहायज्ञादिकं सम्पादयितुमसामर्थ्यमुत्पादयति। भट्टाचार्यमतानुसारेण शुद्धेर्भावः एव शौचम्। शुद्धिर्नाम पापराहित्यं धर्मयोग्यत्वं वा। सपिण्डेषु बान्धवेषु च जन्ममृत्युजन्या-शुद्धिनिवारणमेव पापक्षयत्वेन प्रतिपादितम्। धर्मयोग्यत्वं तु धर्मेण व्यवस्थितस्य क्रियाकलापस्य परिपालनार्थं सामर्थ्यम्। अत; तन्मतानुसारमशौचं नाम जननमरणजन्याशुद्धेः निवारणपूर्वकं धर्मे प्रवृत्यर्थं सामर्थ्यं शुद्धिरित्युच्यते, तद्विपरीतं तु अशुद्धिरशौचं वेति कथ्यते। एवम् अशुद्धिरशौचं वा यदुच्यते तस्य सुप्रसिद्धं लक्षणं याज्ञवल्क्यस्मृतेः टीकाकारस्य विज्ञानेश्वरस्य[2] मिताक्षरायां दृश्यते। तद्यथा-

अशौचशब्देन कालस्नानाद्यपनोद्यः पिण्डोदकदानादिविधेरध्ययनादिपर्युदासस्य च निमित्तभूतः पुरुषगतः कश्चनातिशयः कथ्यते, न पुनः कर्मानधिकारमात्रम्। आशौचं नाम पुरूषगतोऽतिशयविशेषः। पुरुषा एव शुद्धा अशुद्धा वा भवन्ति न तु पशुपक्षिणः।

एकस्मिन् अशौचमध्ये यदि अपराशौचं पतति तर्हि तस्मिन् समये किं कर्त्तव्यमित्यस्मिन् विषये गौतममतानुसारमस्यां परिस्थितौ प्रथमाशौचसमाप्तौ एव द्वितीयाशौचस्यापि शुद्धिर्भवति।

यदि द्वितीयाशौचं प्रथमाशौचस्यान्त्रिमरात्रावापतति, तदा प्रथमाशौचस्य समाप्त्यनन्तरं दिनद्वयमतिवाह्य शुद्ध्यति। परन्तु यदि द्वितीयाशौचसन्देशः प्रथमाशौचस्यान्तिमदिवसस्य रात्रो अन्तिमप्रहरे प्राप्यते तर्हि प्रथमाशौचसमाप्त्यनन्तरं दिनत्रयानन्तरं शुद्‌ध्यति। यथोक्तं[3] गौतमेन- "रात्रिशेषे सति द्वाभ्यां प्रभाते तिसृभिरिति।"[4] विष्णुनाऽप्यस्मिन् विषये प्रतिपादितं यथा- "जननाशौचमध्ये यद्यपरं जननं स्यात्, पूर्णाशौचव्यपगमे शुद्धिः रात्रिशेषे द्वाभ्यां प्रभाते दिनत्रयेण।" आशौचमध्ये ज्ञातिमरणेऽप्येवमेव।[5] मनुनाऽपि उक्तं- "अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत्।"

मिताक्षराकारेण[6] विज्ञानेश्वरेणापि शातातपवचनमुद्धृत्य प्रतिपादितम् यत्-

**''रात्रिशेषे द्व्याहाच्छुद्धिर्यामशेषे शुचित्र्यहात्।''**

शङ्खलिखितौ[7]- अथ चेदन्तरा प्रमीयते जायते वा अवशिष्टैरेव दिवसैः शुध्येदहः शेषे द्वाभ्यां प्रभाते त्रिभिरिति।

शुद्धिसारे[8] गदाधरेण प्रथमाशौचस्य पूर्वार्द्धे उत्तरार्द्धे वाऽशौचान्तरसन्निपाते व्यवस्थोक्ता- दशमेऽहनि तदुषसि च सजातीयनिमित्ताशौचश्रवणे द्वित्रिदिनवृद्ध्या शुद्धिर्यद्यपि स्मृतिषु विहिता, तथापि न वर्द्धयेदघाहानि इति मनुना सा निषिद्धा। तथा च विहितप्रतिषेधाद्विकल्पः। तदुक्तं भट्टैः

**अथवान्तर्यदाशौचनिमित्तं किञ्चिदापतेत्।**
**तच्छेषेण विशुद्धिः स्यात्तच्छेषोऽयं भविष्यति।।**
**न वर्द्धयेदघाहानि निमित्तोपागतान्यपि।।**

विकल्पे सति यथादेशाचारं व्यवस्था। उत्कलप्रदेशे दशमाहस्तत् प्रभात-प्रयुक्तद्वित्रिदिनवृद्धिनार्द्रियते। यथा[9] देवल-

**परतः परतः शुद्धिरघवृद्धौ विधीयते।**
**स्याच्चेत् पञ्चतमादह्नः पूर्वेणाप्यनुशास्यतै।।**

समानजातीयायशौचसन्निपाते[10] याज्ञवल्क्येनापि प्रतिपादितम् यत् -

अन्तरा जन्ममरणे शेषाहोभिर्विशुद्ध्यति। जननमरणाशौचभेदेन अशौचं द्विविधम्। जननाशौचापेक्षया मरणाशौचं गुरु विद्यात्। जननाशौचे यदि मराणाशौचम् आपतति तर्हिं मरणाशौचानन्तरं शुद्धिर्भवतीति किन्तु यदि मरणाशौचमध्ये जननाशौचम् आपतति तर्हि मरणाशौचेन शुद्धिर्भवतीति। यदा आशौचद्वयं समानकोटिंक, द्वितीयाशौचं समानकालिकं, न्यूनकालिकं वा, तर्हि प्रथमाशौचसमाप्तौ द्वितीयाशौचादपि मुक्तिर्भवति। यदि द्वितीयाशौचमधिककालिकं भवति, तर्हि दीर्घाशौचानुसारेणौव शुद्धिः। अस्मिन् विषये निर्णयसिन्धुकारोक्तं मतमुपस्थाप्यते। यथा-

1. आशौचद्वयं यदि जननसम्बन्धि स्यात् , द्वयं च समानावधिंक, तर्हिं प्रथमाशौचसमाप्तौ एव द्वितीयाशौचस्य शुद्धिः।

2. आशौचद्वयं यदि जननसम्बन्धि भवति, परन्तु अनन्तरा शौचं दीर्घं, तर्हिं द्वितीयाशौचसमाप्तावेव शुध्यति।

3. यदि मरणाशौचद्वयं स्यात् तयोः द्वितीयाशौचं प्रथमाशौचापेक्षया न्यूनं समानं वा तर्हि प्रथमाशौचेन शुद्धि;।

4. मरणाशौचयोर्मध्ये यदि द्वितीयाशौचं दीर्घाशौचं स्यात् तार्हि द्वितीयाशौचानुसारं शुद्धिः।

5. यदि प्रथमाशौचं जननाशौचं स्यात् , द्वितीयं च शावाशौचं तर्हि मरणाशौचस्याल्पत्वेपि मरणाशौचानुसारं शुद्धिः।

6. यदि प्रथमाशौचं मरणोत्पन्नं, अनन्तराशौचं जननमल्पकालीनं स्यात् तर्हि मरणाशौचानुसारं शुद्धिः।

7. यदि प्रथमाशौचं मरणनिमित्तकं, द्वितीयं च दीर्घकालीनं जनननिमित्तकं, तर्हिं आशौचद्वयं स्वस्वावध्यनुसारं समाप्यते।

मरणाशौचं मध्ये यदि जननाशौचम् आपतति तर्हि तस्मिन् समये जातकर्मादिकं कथं भवतीति इत्यस्मिन् विषये[11] प्रजापतिवचनमुत्थाप्यप्रतिपादितं यत् –

**आशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत्।**
**कर्त्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुद्ध्यति।।**

यदि कस्यचिद् पुरूषस्य मातृमरणानन्तरं पितृमरणं भवेत् तर्हि पितृमरणाशौचानुसार मेव शुद्धिः। यदि पितृमरणानन्तरं मातृमरणं भवेत् तर्हि पितृमरणाशौचं व्यतीत्य मातृमरणनिमित्तकं पक्षिणीकालमतिवाहयेत्।[12] मिताक्षराकारविज्ञानेश्वरेणाऽपि अस्मिन् विषये प्रतिपादितं यत् –

**मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता।**
**पितुः शेषेण शुद्धिः स्यान्मातु : कुर्यात्तु पक्षिणीम्।।**

विज्ञानेश्वरमतानुसारेण[13] अस्यार्थः भवति यत् – मातरि पूर्वमृतायां तन्निमित्ताशौचमध्ये यदि पितुपरतः स्यात्तदा न पूर्वशेषेण शुद्धिः, किन्तु पितुः प्रयाणनिमित्ताशौचकालेनैव शुद्धिः कार्या। तथा पितुः प्रयाणनिमित्ताशौचमध्ये मातरि स्वर्यातायामपि न पूर्वशेषं मात्राच्छुद्धिः किन्तु पूर्वाशौचं समाप्योपरि पक्षिणीं क्षिपेत्। पित्राद्यशौचविषये[14] पैठीनसिनाऽपि उक्तं –

**पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः।**
**श्रुत्वा तद्दिनमारभ्य दशाहं मृतकी भवेत्।।**

अत्र गदाधरराजगुरुः शुद्धिचन्द्रिकायाः प्रमाणवचनमुत्थाप्य प्रतिपादयति। एतदन्येऽपि उत्कलदेशीयाः निबन्धकाराः स्वीकुर्वन्ति। पूर्वं वा परतोऽथ चैवमनयोर्मातुः पिता शोधकः[15]। इति कारिकां निबध्य पितृवियोगमध्ये यत्र कुत्रापि दिने मातृवियोगे चोभयथापि पितृवियोगदिनमारभ्य दशाहोरात्रैः शुद्धिः।[16]

**सन्दर्भाः**

1. शु.प्र., पृ. 1
2. या.स्मृ.पृ. 367
3. गौ.ध.सू. 14/5
4. वि.ध.सू., 14/5
5. म.स्मृ., 5.73
6. या स्मृ. पृ. 384
7. शु.सा. 2/43
8. शु.सा.भा. 2, पृ.43
9. शु.सा., भा. 2. पृ. 43
10. या.स्मृ., 3.20

11. या.स्मृ.पृ., 384
12. या.स्मृ.पृ. 283
13. या.स्मृ. पृ. , 384
14. शु.सा., 2/45
15. शु.च. श्लो., 16
16. शु.सा., 2/47

## सन्दर्भ ग्रन्थ सूची

1. शुद्धिसारः- सम्पा.जयकृष्णमिश्रः, दामोदर पुष्पालक, पुरी 2001
2. याज्ञवल्क्यस्मृतिः -डा. गङ्गासागर राय, चोखम्बा संस्कृत प्रतिष्ठान, दिल्ली, 2007
3. गौतमधर्मसूत्रम् - सूक्ष्माटीकासहित-सम्पा. पाण्डितकुलमणिमिश्रशर्मा, हावेली लेन् , पुरी 1991
4. मनुस्मृति- सम्पा, मानवेन्दु वन्दोपाध्याय, संस्कृतपुस्तकभण्डार, कोलकाता, 2016
5. शुद्धिचन्द्रिका-ड. जयकृष्णमिश्र, संग्राम क्लाब लेन् पुरी, 2001
6. निर्णयसिन्धु-श्री पं. नारायणदास आचार्यः, राष्ट्रियसंस्कृतसंस्थान् नई दिल्ली, 2002
7. धर्मशास्त्र का इतिहास, पाण्डुरङ्ग वामन काणे, उत्तरप्रदेश हिन्दी संस्थानृ, लक्ष्णौ, 2003
8. वीरोमित्रोदयः (शुद्धिप्रकाशः)- पण्डित पद्म प्रसाद उपाध्याय, चौखम्बा, संस्कृत सीरीज् आफिस वाराणसी, 1987।



# मनुस्मृतावुद्भिदां विनियोगः

-सौरभमण्डलः

*(मनुस्मृति में प्रसङ्गतः अनेक स्थानों पर विविध पशुपक्षियों वृक्ष, लता, पत्र, पुष्प, फल, वल्कलादि का उल्लेख किया है। विशेषतः मनुस्मृति के प्रथमाध्याय में इसका वर्णन विस्तार से दृष्टिगत होता है। विविध प्रकार की वनस्पतियों का विभिन्न प्रकार के धर्मकृत्यों में, जातकर्मादि संस्कारों में, श्राद्धों में, सीमाविवाद के निर्णय में, प्रायश्चित्तादि में इनकी उपयोगिता भगवान् मनु के द्वारा विस्तार से निर्दिष्ट है, ऐसा लेखक का निष्कर्ष है।)*

सुविशालकलेवरयुक्तधर्मशास्त्रसाहित्यान्तर्गतस्मृतिसाहित्यस्य प्रामुख्यं प्राचीनत्वञ्च सर्वदा विद्वांसोऽङ्गीकुर्वन्ति। स्मृतिसाहित्येषु मनुस्मृतिः सर्वप्राचीनैव। धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टयस्य प्रतिपादनं केवलं मनुस्मृतावेव परिलक्ष्यते नान्यासु स्मृतिषु। द्वादशाध्यायात्मिकायां मनुस्मृतौ विचारितेषु नैकेषु विषयेषु प्रसङ्गतो बहुषु स्थलेषु जीवजन्तूनां कीटपतङ्गादीनां पशुपक्षिणामुद्भिदां च बहुलविनियोगः परिलक्ष्यते। तेषु ममालोच्यविषयस्तु मनुस्मृतावुद्भिदां विनियोगो यमधिकृत्य मयाऽत्र पर्यालोच्यते। तत्र मूलतः वृक्ष-लता-प्रतान-वीरूत्-पत्र-पुष्प-फल-वल्कल-मूलादीनां कथं वा मनुस्मृतौ विनियोगः तद्विषये आलोच्यते।

तत्रादौ उद्भिच्छब्दस्तु उदुपसर्गाद् भिद् धातोः क्विप् प्रत्यये कृते निष्पद्यते। [1]वाचस्पत्यानुसारं भूमिमुद्भिनत्ति इति उद्भिद्। [2]अमरकोशस्य रामाश्रमीव्याख्यायाम् अपि 'उद्भिनत्ति भुवं भिदिर् विदारणे' इति सूत्रानुसारं, तथा 'सत्सूद्विषुद्रूह..03/2/61 इति सूत्रानुसारं क्विप् प्रत्यये च अभिनवश्चासावुद्भिद् इति उद्भिद् शब्दः निष्पद्यते।

उद्भिदां वर्गीकरणं शास्त्रान्तरे भिन्नभिन्नतया दृश्यते। यथा [3]चरकसंहितायां- वनस्पतिः, वानस्पत्यः , औषधिः, वीरूधादिरूपेण, [4]सुश्रूतेनापि केवलं वनस्पतिस्थले वृक्षशब्दस्य प्रयोगं कृत्वा तद्वद् वर्गीकरणं कृतम्। मनुना किञ्चिद्भिन्नरूपेण उद्भिदां वर्गीकरणं कृतम् तद्यथा- औषधिः, वनस्पतिः, वृक्षः, गुच्छः, गुल्मः, तृणं, प्रतानः, वल्ली इति। तेषां स्वरूपमपि [5]मनुना प्रतिपादितं यथा -

उद्भिज्जाः स्थावरा सर्वे बीजकाण्डप्रोहिणः।
ओषध्यः फलपाकान्ता बहुपुष्पफलोपगाः।।
अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः।
पुष्पिणः फलिनश्चैव वृक्षास्तूभयतः स्मृताः।।

**गुच्छगुल्मं तु विविधं तथैव तृणजातयः।**
**बीजकाण्डरुहाण्येव प्रताना वल्लय एव च।।**

अर्थात् बहुपुष्पफलयुक्ताः फलपक्वानन्तरं विनाशमाप्ता **औषधयः**। यथा-ब्रीहि-यवादयः। विना पुष्पेण फलवन्तो ये ते **वनस्पतयः**। यथा उदुम्बरादयः। सपुष्पा फलवन्तश्च **वृक्षाः**। यथा- आम्र-पनसादयः। मूलतः एव समूहरूपेणोत्पन्नः शाखारहितः **गुच्छः**। यथा मल्लिकादयः। वृक्षाश्रिता दीर्घयायिन्यो **लताः**। यथा-द्राक्षाद्याः। एकमूलादेकत्रितरूपेण उत्पन्ना **गुल्माः**। यथा-शरेक्षुवंशादयः। उलपादीनां **तृणमिति** संज्ञा। तन्तुयुक्ताः काण्डप्ररोहरहिता **प्रतानाः**। यथा-अलावुप्रभृतयः। स्थूलाः प्रताना या वृक्षादिकमावेष्ट्य प्रसरन्ति ता **वल्ल्यः**। यथा गुडिच्यादयः।

**संसारोत्पत्तिः**- संसारेऽस्मिन् स्थिताः जीवा जरायुज-अण्डज-स्वेदज-स्थावरादिभेदेन चतुर्द्धा दृश्यन्ते। मनुना प्रसङ्गेऽस्मिन् मनुस्मृतौ प्रथमेऽध्याये स्थावरजीवरूपेण उद्भिज्जानां गणना कृता। यथोक्तं [6]तेन-उद्भिज्जाः स्थावराः सर्वे वीजकाण्डप्ररोहिण इति। तदनु तेषां स्वरूपं तथा कार्यादिकं च तेनोल्लिखितम्। तत्र उद्भिदां यादृशं स्वरूपं मनुना प्रतिपादितं तादृशं स्वरूपमधुनाप्याधुनिकोद्भिद्विज्ञानशास्त्रेषु परिलक्ष्यते।

**जातकर्मादिसंस्कारविधिः**- मनुस्मृतेर्द्वितीयाध्याये जातकर्मादिसंस्कारविधिप्रसङ्गे उद्भिदां विनियोगः स्पष्टतया प्रदर्शितः। यथा- उपनयनसंस्कारे मेखलानिर्माणे मुञ्जादितृणानां विनियोगः [7]मनुस्मृतौ परिलक्ष्यते। तद्यथा-

**मौञ्जी त्रिवृत् समा श्लक्ष्णा कार्या विप्रस्य मेखला।**
**क्षत्रियस्य तु मौर्वी ज्या वैशश्य शणतान्तवी।।**
**मुञ्जाऽलाभे तु कर्तव्याः कुशाश्मन्तकविल्वजैः।**
**त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा।।** इति।।

तत्र ब्राह्मणस्य मेखला मुञ्जामयी तदलाभे कुशनिर्मिता वा, क्षत्रियस्य मूर्वातृणनिर्मिता तदलाभे अश्मन्तकतृणनिर्मिता वा, वैश्यस्य शणतन्तमयी तदलाभे बल्वजतृणनिर्मिता वेति प्रतिपादितम्। पुनश्च तत्रैवोपवीतं विप्रस्य कार्पाससूत्रेण क्षत्रियस्य च शणसूत्रेण निर्मितं भवेत्। यथोक्तं [8]मनुना प्रसङ्गेऽस्मिन् -

**कार्पासमुपवीतं स्याद्विप्रस्योर्द्धवृतं त्रिवृत्।**
**शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम्।।** इति।।

तथैव ब्रह्मचारिणां दण्डधारणप्रसङ्गे उद्भिदां विनियोगो दृश्यते। ब्राह्मण-क्षत्रिय-वैश्य-ब्रह्मचारिणः क्रमेण विल्व-पलाशयोरन्यतरवृक्षस्य वा, वट-खदिरयोरन्यतरवृक्षस्य वा, पीलूदुम्बरयोरन्यतरवृक्षस्य वा काष्ठेन निर्मितं दण्डं धारयेयुः। यथोक्तं [9]मनुस्मृतौ-

**ब्राह्मणो वैल्वपालाशो क्षत्रियस्य वाटखादिरौ।**
**पैलवौदुम्बरौ वैश्यो दण्डानर्हन्ति धर्मतः।।** इति।।

एवं प्रकारेण मनुस्मृतौ ब्रह्मचारिप्रकरणे नानाप्रकाराणामुद्भिजां विनियोगः कृतः येषामद्यापि परिपालनं परम्परया समाजे दृश्यते।

**श्राद्धम्** – श्राद्धे फलानां मूलानां कुशादितृणानां कदलीपनसादिपत्राणां नानाविधपुष्पाणां तिलयवाद्यौषधीनां व्रीहीणाञ्च महानस्ति विनियोगः। तिलमिश्रितजलेन पितृपुरुषाणां तर्पणं शास्त्रे विहितमस्ति। तेषां पूजनं नानापुष्पैः वृक्षजधूपैः फलादिनैवेद्येन च क्रियते। तेषामुद्देश्येन पिण्डदानं पनसपत्रपुटकोपरि च क्रियते। पिण्डार्थं पचनं नानाशाकैरोषधिभूतैः नानाव्रीहियवादिभिः शस्यैः फलमूलैश्च क्रियते। प्रसङ्गेऽस्मिन्नुक्तं [10]मनुना यथा–

**तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा।**
**दत्तेन मासं तृप्यन्ति विधिवत् पितरो नृणाम्।।**

**स्मार्तकर्मसम्पादनम्** – व्रीहियवादिसस्यानां प्रादुर्भावे अर्थात् नव शस्यानां आगमने नवशस्येष्टिरर्थाद् आग्रयणेष्टिः करणीया। सा च प्रति संवत्सरं मार्गशीर्षेमासि नवशस्यागमे तैरेव नवशस्यैरनुष्ठीयते। तत्र शरदि व्रीहिधान्येन वर्षासु श्यामाकधान्येन वसन्ते यवेन च यजेतेति वचनाद् ज्ञायते। तथा च प्रति दर्शं पौर्णमासीञ्च पुरोडाशयागाः, प्रति संवत्सरमेकवारं सोमरसेन अग्निष्टोमादियागश्चानुष्ठेया भवन्ति। अत्र व्रीहि–यवादीनां पुरोडाशनिर्माणार्थं तथा सोमलतानां सोमयागानुष्ठानार्थमुपयोगः क्रियते। तथा च हवनकर्मणि पलाशोदुम्बरार्कापामार्क–न्यग्रोधाऽश्वत्थ–प्लक्ष–बिल्व–देवदारु–चन्दन–साल–खदिरादिवृक्षोद्भवानां काष्ठानां समिद्रूपेण तिलतण्डुलानाञ्च चरुरूपेण विनियोगो दृश्यते।

**स्नातकव्रतम्** – स्नातकः स्वव्रतपालनदशायां वेणु–कुश–वनस्पतिप्रभृतीणां विनियोगं कुर्वाणो दृश्यते। यथोक्तं [11]मनुना स्नातकव्रतप्रकरणे–

**वैणवीं धारयेद् यष्टिं सोदकञ्च कमण्डलुम्।**
**यज्ञोपवीतं वेदञ्च शुभे रौक्मे च कुण्डले।।**

पुनश्च गमनमार्गे प्रसिद्धः वनस्पतिः यदि स्यात् तर्हि स्नातकः तस्य प्रदक्षिणं कुर्यात्। प्राप्यते च [12]तत्रैव–

**प्रदक्षिणानि कुर्वीत प्रज्ञाताश्च वनस्पतीन्।**

**भक्ष्याभक्ष्यविवेकः**– भक्ष्याभक्ष्यप्रसङ्गे उद्भिज्जद्रव्यानां विनियोगः परिलक्ष्यते। यथा द्विजातीनां कृते लशुन–गृञ्जन–पलाण्ड्वादिद्रव्याणां भक्षणं निषिद्धं कृतमिति परिलक्ष्यते। यथोक्तं [13]मनुस्मृतौ–

**लशुनं गृञ्जनञ्चैव पलाण्डुं कवकानि च।**
**अभक्ष्याणि द्विजातीनाममेध्यप्रभवाणि च।।**

पुनश्च लशुन–पलाण्डु–गृञ्जनादीनां ज्ञानपूर्वकभोजने ब्राह्मणादिद्विजाः पतिताः भवन्तीति[14]मनुनोक्तम्।

**तद्यथा– छत्राकं विड्वराहञ्च लशुनं ग्रामकुक्कुटम्।**
**पलाण्डुं गृञ्जनञ्चैव मत्या जग्ध्वा पतेद्द्विजः।।**

तदवत् रक्तवर्णयुक्तवृक्षनिर्यासः शेल्वादिफलानि च भक्ष्यणे निषिद्धानि परिलक्ष्यन्ते।

**द्रव्यशुद्धिः** व्यावहारिकद्रव्याणां शुद्धिप्रसङ्गे उद्भिज्जद्रव्याणां विनियोगः परिलक्ष्यते।

यथा– कुतपस्य अर्थात् नेपालदेशीयकम्बलस्य शुद्धिः अरिष्टकैः अर्थात् निम्बफलचूर्णेन रिठाफलचूर्णेन वा, अंशुपट्टस्य शुद्धिः बिल्वफलनिर्यासैः, क्षौमवस्त्रस्य शुद्धिः श्वेतसर्षपचूणैः सम्भवति। प्रसङ्गेऽस्मिन्नुक्तं [15]मनुना यथा

**कौषेयाविकयोरूषैः कुतपानामरिष्टकैः।**
**श्रीफलैरंऽशुपट्टानां क्षौमाणां गौरसर्षपैः।।**

**वानप्रस्थाश्रमः**– वानप्रस्थानां भोज्याभोज्यविषये उद्भिज्जद्रव्याणां विनियोगो भूयस्त्वेन दृश्यते। यथा–स्थलजातोदकजातपुष्प–फल–मूल–शाकादीनां तथा फलनिर्यासस्य इङ्गुदिप्रभृतीनां तैलैः वानप्रस्थः स्व कर्म सम्पादयति। प्रसङ्गेऽस्मिन्नुक्तं [16]मनुना यथा–

**स्थलजौदकशाकानि पुष्पमूलफलानि च।**
**मेध्यवृक्षोद्भवान्यद्यात् स्नेहांश्च फलसम्भवात्।।**

पुनश्च कवक–भूस्तृण–शिग्रुक–श्लेष्मान्तकफलानि च वानप्रस्थो नैव भक्षयेदिति निषेधमुखेन [17]तत्रैव प्रपिदितं यथा–

**वर्जयेन्मधु मांसञ्च भौमानि कवकानि च।**
**भूस्तृणं शिग्रुकञ्चैव श्लेष्मान्तकफलानि च।।**

वानप्रस्थाश्रमी स्वीयजीविकानिर्वाहमपि पुष्प–फल–मूलेनैव कुर्यात् किञ्च कालपक्वादिफलभक्षणेनैव कुर्यात्। यथोक्तं [17]मनुना–

**पुष्पमूलफलैवापि केवलैर्वर्तयेत् सदा।**
**कालापक्वैः स्वयं शीर्णैर्वैखानसमते स्थितः।।**

**सन्न्यासाश्रमः**– सन्न्यासिनां भिक्षापात्रप्रसङ्गे अलावुदारुवंशादीनां विनियोगो दृश्यते। प्रसङ्गेऽस्मिन्नुक्तं [19]मनुना यत् –

**अलावुं दारुपात्रञ्च मृण्मयं वैदलं तथा।**
**एतानि यतिपात्राणि मनुः स्वाम्भुवोऽव्रतीत्।।**

**राजधर्मः** – राजा कुत्र निवसेदिति विषये आलोचनावसरे जाङ्गलदेशस्य, धान्यादिशस्य तथा फलपुष्पतरुलतादियुक्तमनोहरस्थानस्य उल्लेखो दृश्यते। पुनश्च दुर्गनिर्मानप्रसङ्गे वार्क्षदूर्गः अर्थात् सुविशालवृक्षकण्टकिगुल्मलतादिपरिवेष्टितस्थानस्य वर्णनमुपलभ्यते। तथैव करग्रहणरूपेण राजा कर्पूरादिगन्धद्रव्येभ्यो गुडुच्यादि ओषधिभ्यः, पुष्पमूलफलपत्रशाकतृणादिभ्यः वैदलचर्मनिर्मितद्रव्येभ्यश्च लाभ्यांशतः षड्भागं गृह्णीयात्।

**सीमाविवादः**– ग्रामस्य नगरस्य क्षेत्रस्य वा सीमानिर्धारणार्थं दीर्घकालस्थायिन्याग्रोधाश्वत्थ–किंशुक–शाल्मली–शाल–तालादिवृक्षाणां, उदुम्बरादिक्षीरिवृक्षाणां गुल्म–वेणु-शमीजातीयवृक्षाणां, बल्ली–लतादीनां, कुब्जकगुल्मजातीयवृक्षाणाञ्च रोपणं कुर्यात्। यथोक्तं [20]मनुना प्रसङ्गेऽस्मिन् –

**आददीताथ षड्भागं द्रुमांसमधुसर्पिषाम्।**
**गन्धौषधिरसानाञ्च पुष्पमूलफलस्य च।।**

**पत्रशाकतृणानाञ्च वैदलस्य च चर्मणाम्।**
**मृन्मयानाञ्च भाण्डानां सर्वस्याश्ममयस्य च।।**
**सीमावृक्षांश्च कुर्वीत न्यग्रोधाश्वत्थकिंशुकान्।**
**शाल्मलीन् शालतालांश्च क्षीरिणश्चैव पादपान्।।**
**गुल्मान् वेणूंश्च विविधान् शमीवल्लीस्थलानि च।**
**शरान् कुब्जकगुल्मांश्च तथा सीमा न नश्यति।।**

**दण्डपारुष्यम्** – वृक्षादीनां अनिष्टसाधने दण्डदानस्य व्यवस्था अपि दृश्यते। तत्र वृक्षाणां पत्र–पुष्प–फल–मूल–वल्कादीनां यथा यथा उपयोगमायाति तथा तथा उत्तम–मध्यमाधमसाहसदण्डा देयाः। यथोक्त [21]मनुना –

**वनस्पतीनां सर्वेषामुपभोगो यथा यथा।**
**तथा तथा दमः कार्यो हिंसायामिति धारणा।।**

पुनश्च इर्ष्यावशतः अपरस्य पत्र–पुष्प–फल–मूलादीनां क्षतिसाधनेन द्रव्यमूल्यस्य पञ्चगुणं दण्डरूपेण गृह्णीयात्। यथोपलभ्यते [22]मनुस्मृतौ– चर्म–चर्मिकभाण्डेषु काष्ठलोष्टमयेषु च।

**मूल्यात् पञ्चगुणो दण्डः पुष्पमूलफलेषु च।।**

पुनः काश्चनद्रव्याणां हरणे द्विगुणदण्डदानस्य व्यवस्थापि परिलक्ष्यते। यथा कार्पाससूत्रस्य तृणस्य, वेणुवैदलनिर्मितवस्तुप्रभृतीनां हरणे एतादृशी दण्डव्यवस्था परिलक्ष्यते।

तथैव उत्कृष्टपुष्पं गुल्म–लता–वृक्ष–अपक्वधान्यादिहरणे पञ्चकृष्णलपरिमाणदण्डः द्रव्यानुसारं देयः। परिपूत–धान्य–शाक–फल–मूलाद्यपहरणे आत्मीयानां पञ्चाशत्पणः दण्डः अनात्मीयानां एकशतपणं दण्डः। यथोक्तं [23]मनुना–

**पुष्पेषु हरिते धान्ये गुल्म–वल्ली–नगेषु च।**
**अन्येष्वपरिपूतेषु दण्डः स्यात् पञ्चकृष्णलः।।**
**परिपूतेषु धान्येषु शाक–मूलफलेषु च।**
**निरन्वये शतं दण्डः सान्वयेऽर्द्धशतं दमः।।**

वृक्षादीनां फलमूलादि यदि स्वीयभोजनार्थं किञ्च काष्ठादि होमार्थं तृणादि ग्रोग्रासार्थं यदि वा गृह्णीयात् तर्हि तत्र स्तेयम्। यतोक्तं [24]मनुना–

**वानस्पत्यं मूलफलं दार्वग्न्यर्थं तथैव च।**
**तृणञ्च गोभ्यो ग्रासार्थमस्तेयं मनुरब्रवीत्।।**

**प्रायश्चित्तविधिः** – प्रायश्चित्तप्रसङ्गेऽपि उद्भिदां विनियोगः परिलक्ष्यते। तत्र यः अभोज्यं लशुनादिकं खादति सः सुरापानसमदोषेण दुष्टो भवति। उपपातकविषयेऽपि उद्भिदामुपयोगः दृश्यते। विना कारणं हिंसापूर्वकं ओषधीनां छेदनन्तु उपपातकम्। पुनः इन्धनार्थम् अशुष्कवृक्षाणां छेदनमपि उपपातकम्। तथैव निन्दितान्नानां लशुनादिनां भक्षणं धान्यस्य हरणम् , तिलादीनां अविक्रेयद्रव्याणां विक्रयः अपि उपपातकम्। पुनश्च लशुनपलाण्डुपुरीषादि स्वाभाविकदुर्गन्धयुक्ताश्च ये तेषां आघ्राणेन जातिभ्रंशकरपापमागच्छति। फलकाष्ठपुष्पादीनां हरणे मलिनीकरणपापः भवति।

पुनश्च फलप्रदः आम्रपनसादिवृक्षाणां, कुब्जकादिगुल्मानां, गुडुच्यादिवल्लीनां, फलपुष्पपूर्णलतानां, पुष्पितानां कुष्माण्डादिवीरुधां च छेदने प्रायश्चित्तस्वरूपं एकशतऋक्मन्त्रो जपनीय इति। [25]मनुना प्रसङ्गेऽस्मिन्नुक्तं यत् –

फलदानां तु वृक्षाणां छेदने जप्यमृक्शतम्।

**उपसंहारः** – सम्पूर्णायां मनुस्मृतौ प्रति विषयं परिशीलनेन एतज् ज्ञायते यत् तत्र उद्भिदां बहुलरूपेण विनियोगो मनुना कृतः। समाजस्थितजीवजन्तूनां जीवनेन सह प्रत्यक्षरूपेण परोक्षरूपेण वा उद्भिदां सम्बन्धः वरीवर्तते एव। मानवानां जीवनधारणस्य यन्मूलं प्रयोजनम् अन्न-वस्त्र-वासस्थानं तैः सह उद्भिदाम् उद्भिज्जद्रव्याणां यो निगूढसम्बन्धः मनुना प्रतिपादितः सोऽप्यधुना दरीदृश्यते। तत्र वृक्षादीनां माहात्म्यं मानवजीवने समाजे च तेषां असीमोपयोगं दृष्ट्वा तेषां संरक्षणविषयेऽपि बहु व्यवस्था तेन [26]स्वीयस्मृतौ प्रतिपादिता। तादृशी व्यवस्थापि वर्तमानयुगानुगुणरूपेणाऽस्माभिर्ग्रहीतुं शक्यते। अनेन परोक्षेण परिवेशस्याऽपि संरक्षणं भवति। एवं रूपेण मनुस्मृतौ उद्भिदाम् उद्भिज्जद्रव्याणाञ्च समाजे विनियोगः प्राचीनकालेऽभूत् , सम्प्रति भवति, कालान्तरे च भविष्यतीति नास्त्यत्र सन्देहलेशः। इति अलं विस्तरेण।

**सन्दर्भाः-**

1. वाचस्पत्यम् , भाग 2, पृष्ठा. 1180
2. अमरकोश द्वितीयकाण्डः, वनौषधिवर्गः

3. च.सं.सू., 1.72, 73    4. सु.सं.सू., 1.37    5. म.स्मृ. 1.46-48
6. म.स्मृ., 1.46    7. म.स्मृ., 2.42, 43    8. म.स्मृ., 2.44
9. म.स्मृ., 2.45    10. म.स्मृ., 3.267    11. म.स्मृ., 4.36
12. म.स्मृ., 4.39    13. म.स्मृ., 5.5    14. म.स्मृ., 5.19
15. म.स्मृ., 5.12    16. म.स्मृ., 6.13    17. म.स्मृ., 6.14
18. म.स्मृ., 6.21    19. म.स्मृ., 6.54    20. म.स्मृ., 7.131, 132
21. म.स्मृ., 8.285 22. म.स्मृ., 8.289 23. म.स्मृ., 8.330, 331    24. म.स्मृ., 8.339    25. म.स्मृ., 11.64    26. म.स्मृ., 11.142

**सन्दर्भग्रन्थसूची-**

1. मनुस्मृतिः    2. वाचस्पत्यम् , भाग 2,
3. अमरकोश द्वितीयकाण्डः, वनौषधिवर्गः    4. चरकसंहिता
5. सुश्रुतसंहिता



# श्रीमदादिवेङ्कटयोगिविरचिते 'ब्रह्मविन्निधिः' इत्याख्ये ग्रन्थे प्रतिपादिताः मोक्षसाधनविचाराः

**- विश्वनाथ हेगड़े**

*(श्रीमदादिदेवविरचित 'ब्रह्मविन्निधि' 33 प्रकरणों से युक्त दर्शन विषयक ग्रन्थ है। इस ग्रन्थ में चरम पुरुषार्थ मोक्ष के साक्षात् साधनों का विस्तृत विचार किया गया है। जिसके अन्तर्गत ज्ञान, कर्म भी मोक्ष के साधक हैं। सगुणोपासना को भी मोक्ष में साधक माना गया है। चित्त की एकाग्रतापूर्वक समाधि भी मोक्ष में साधक है। निबन्ध में लेखक ने अनेकशास्त्रों, गीता, पुराण, योग, सांख्य तथा स्मृतियों का उल्लेख करते हुए गुरु-शिष्य संवाद शैली के प्रयोग से लेख को सुबोध बनाया है।)*

संस्कृतसाहित्ये नैके ग्रन्थाः मातृकारूपेण विलसन्त्यद्यापि। ये च श्रुति-स्मृत्यादिषु निगूहितानां तत्त्वानां ख्यापकाः भाष्य-टीका-प्रकरणादिस्वरूपाः शास्त्रसारप्रसारकाश्च। ईदृशेषु ग्रन्थेषु श्रीगन्नेपूडि-आदिवेङ्कटयोगिभिः विरचितः अद्वैतवेदान्तशास्त्रीयः 'ब्रह्मविन्निधिः' इत्याख्यः प्रकरणग्रन्थः अन्यतमः। ग्रन्थेऽस्मिन् समग्रस्यापि वेदान्तशास्त्रस्य सारः विशिष्टया शैल्या सरलया च भाषया निरूपितः येन अध्येतॄणां विनायासम् अतिनिगूढतत्त्वानामपि बोधः सुकरो भवेत्। त्रयस्त्रिंशत्प्रकरणैः समलङ्कृतेऽस्मिन् ग्रन्थे विशिष्य मोक्षसाधनविचाराः विमृष्टाः। तस्यास्य विषयस्य अवलोकनात् प्राक् ग्रन्थकर्तुः विषये सङ्क्षेपेण मयात्र परिचयो दत्तः।

**अ ) ग्रन्थकर्तुः देशकालादिपरिचयः -**

श्रीआदिवेङ्कटयोगिनः आन्ध्रप्रदेशस्य 'प्रकाशं' मण्डलस्य पर्चूरुप्रान्तस्य गन्नेपूडिनामके ग्रामे प्राप्तजन्मान आसन्। भारद्वाजगोत्रोत्पन्ना अमी कोण्डय्याख्यस्य पौत्राः। एतेषां पितुः नाम सुब्बय्यामात्य इति। एतेषां गुरवस्तु श्रीस्वयम्प्रकाशभगवत्पूज्यपादाः। ग्रन्थकर्तुः कालः 1700-1800 इति क्वचिदुल्लेखो वर्तते। आदिवेङ्कटयोगिभिः ग्रन्थद्वयं लिखितम्। तत्र प्रथमं 'ब्रह्मविन्निधिः' इत्याख्यः प्रकृतग्रन्थः। द्वितीयं च ग्रन्थकारैरेव स्वग्रन्थे उल्लिखितः 'विवेकसाराख्यः' ग्रन्थः। एतयोः विवेकसाराख्यः ग्रन्थः अनुपलब्धः।

**ब ) ग्रन्थस्य वैशिष्ट्यं शैली च -**

ग्रन्थे लेखकः बहुत्र वेद-भगवद्गीता-पुराण-योग-सांख्य-स्मृतीनां उल्लेखं करोति। अनेन ज्ञायते यत् ग्रन्थकृतः सांख्ययोगादिशास्त्रेष्वपि अप्रतिहतगतिरवर्तत इति। किं च दुरवगाह्यं

वेदान्ततत्त्वम् अत्यन्तसरलया शैल्या विविधवृत्तेषु निरूपणं कृतम्। गुरु-शिष्यसंवादात्मकत्वात् ग्रन्थस्यास्य सुबोधत्वं सिद्धम्। तत्त्वानां सुलभावगमनार्थं ग्रन्थप्रणेता मध्ये मध्ये कथामप्यवलम्बते। एतत् ग्रन्थकर्तुः लेखनकौशलं प्रदर्शयति।

अस्मिन् ग्रन्थे समग्रस्यापि वेदान्तस्य तात्पर्यं सङ्गृहीतम्। जीवस्वरूपकथनं, विदेहमुक्तिस्वरूपं, जीवन्मुक्तिसाधनं च विवेचितम्। जपस्य प्राधान्यं, तपसः महत्त्वं, इन्द्रियनिग्रहसाधनानि, श्रवणमनननिदिध्यासनानि, भक्तिमार्गेण ध्यानं, ध्यानेन ज्ञानं, जीवात्मपरमात्मनोरभेदः इत्यादि नैके विचाराः विचारिताः। प्राणायामद्वारा नाडीनां शुद्धिः, तदर्थं मुद्रा, मन्त्रसंहितादिविषयाः विमृष्टाः। तत्रेदानीं स्थालीपुलाकन्यायेन ग्रन्थेऽस्मिन् प्रतिपादिताः मोक्षसाधनविचाराः विचार्यन्ते।

**ब्रह्मविन्निधौ प्रतिपादितानां मोक्षसाधनानां विचारः-**

ब्रह्मविन्निधौ वेदान्तस्य समग्रविचाराः विमृष्टाः। तत्रापि मोक्षसाधनानां विषये विस्तृतरूपेणात्र विमर्शनं कृतम् आस्ते। मोक्षमुद्दिश्यैव खलु सर्वाणि शास्त्राणि प्रवृत्तानि। तस्मात् मोक्षसाधनविचारोऽपि अवश्यं क्रियत एव। कृतिकाराः आदिवेङ्कटयोगिनः साधनामार्गगामिनः आसन्निति एतेषां प्रकरणानामध्ययनेन ज्ञायते। ज्ञानार्थं चित्तशुद्धिरपेक्षते '**दृश्यते त्वग्र्यया बुद्ध्या**'[1] इत्यादि श्रुतेः। '**चित्तस्य शुद्धये कर्म न तु वस्तूपलब्धये**'[2] इति विवेकचूडामणौ, '**एतेषां नित्यादीनां बुद्धिशुद्धिः परं प्रयोजनम्**'[3] इति वेदान्तसारे च प्रतिपादितरीत्या चित्तशुद्ध्यर्थं कर्म-उपासनादीनि कर्त्तव्यानि। तदर्थं मनसः ऐकाग्र्यम् आसादनीयम्। तच्च योगाभ्यासेन साध्यते इत्यतः योगमार्गः कर्त्रा विशेषतोऽत्र निरूपितः। तत्रापि आसन-मुद्रा-जपादयः कर्त्रभिमतक्षिप्रमोक्षसाधनानि सन्तीति प्रतिपादितम्।

**( क ) मोक्षं प्रति ज्ञानस्य साक्षात् कारणत्वम् -**

मोक्षः ज्ञानैकसाध्यः, न तु उपायान्तरसाध्यः इति वेदान्तानामाघोषः। तथा च श्रुतिः '**तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय**'[4] इति। ज्ञानेनैकेन अधिष्ठानतत्त्वसाक्षात्कारमात्रेण वा अज्ञाननिवृत्तेः साध्यत्वादपि मोक्षस्य ज्ञानैकसाध्यत्वम्। अज्ञानस्य विरोधी ज्ञानमेव न तु कर्मादयः। रज्जुसर्पस्थले अधिष्ठानतत्त्वसाक्षात्कारमात्रादेव रज्जुसर्पोदानाज्ञानस्य तत्कार्यस्य रज्जुसर्पादिभ्रमस्य तत्प्रयुक्तस्य भयकम्पादेश्च निवृत्तिदर्शनात्।

अत्र केचिदाहुः- ज्ञानकर्मसमुच्चयः मोक्षस्य कारणमिति स्वीकर्त्तव्यमिति। किन्तु तन्न स्वीकर्तुं शक्यते तयोर्विरोधात्। मोक्षस्य अव्यवहितं च कारणं ज्ञानं विना अन्यत् किमपि भवितुं नार्हति। '**तरति शोकमात्मवित्**'[5], **ब्रह्मविदाप्नोति परम्**'[6], '**आत्मा वा अरे द्रष्टव्यः**'[7] '**एतावदरे खल्वमृतत्वम्**'[8] इत्येवं जातीयकाः श्रुतयः केवलायाः विद्यायाः पुरुषार्थत्वहेतुत्वं श्रावयन्ति। कर्मणस्तु मोक्षकारणत्वं निराकृतम्। '**न कर्मणा न प्रजया धनेन**'[9], '**नास्त्यकृतः कृतेन**'[10] इत्याद्याः श्रुतयः '**कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते**'[11] इत्यादिस्मृतिश्च कर्मणो मोक्षकारणतां निराकरोति इति नानयोः सहभावः। अपुनरावृत्तिश्रुतिविरोधश्च। मोक्षस्य कर्मकारणत्वे

**'यत् कृतकं तदनित्यम्'** इति न्यायानुगृहीतया श्रुत्या तस्य अनित्यत्वापातेन मुक्तानां पुनरावृत्तौ अपुनरावृत्तिः व्याहता स्यात् इति नानयोः समुच्चयः स्वीकर्तुम् अर्हः।

एतदेव साररूपेण आदिवेङ्कटयोगिभिः ब्रह्मविन्निधौ प्रत्यपादि। तदित्थम् –

**आत्मज्ञानं विना मुक्तिर्नास्त्यतो मुक्तिमिच्छता।। 2.4.10।।**
**मुक्तिर्ज्ञानेन भवति ध्यानं तद्भेदलक्षणम्।। 2.4.29।।**
**अद्वयज्ञानतो मुक्तिर्न द्वैतज्ञानतो भवेत्।। 2.12.11।।** इत्यादि।

**(ख) कर्मादीनां परम्परया मोक्षोपयोगित्वम् –**

तर्हि कर्मणां ब्रह्मसाक्षात्कारे सर्वथा प्रयोजनाभावो वा इति चेन्न, **'तरति सर्वं पाप्मानं तरति ब्रह्महत्याम्'** इत्यादिवचनात् कर्मानुष्ठानात् पापनिवृत्तिरूपा चित्तशुद्धिः, ततो विषयदोषदर्शनं, ततो वैराग्यं ततः श्रवणादिकम् इत्येवं परम्परया कर्मणा मोक्षे उपयोगः। एवं कर्मणां परम्परया मोक्षोपयोगित्वात् **'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन'**12 इत्यादि श्रुतिः सङ्गच्छते। विषयेऽस्मिन् ब्रह्मविन्निधिकाराः कर्मानुष्ठानाद्विनैव मोक्षं प्राप्तुकामानां निन्दाद्वारा कर्मणः महत्त्वं प्रत्यपीपदन्। तदित्थम्

**अकृत्वा कर्मविहितमनुपास्य विभुं हरिम्।**
**अनालङ्घ्य गुरोः पादावनियम्येन्द्रियाण्यपि।। 2.6.19।।**
**सन्त्यज्य कर्म केचित्स्वं मूढास्साहसिका जनाः।**
**अन्ये भक्तिं वदन्त्येव तां न कुर्वन्ति सिद्धिदाम्।। 2.6.21।।**
**निदिध्यासं वदन्त्यन्ये न विजानन्ति तत्क्रमम्।**
**सर्वेप्येते मूढतमाः कलिदोषसमावृताः।। 2.6.23।।** इत्यादिना।

ब्रह्मविन्निधिकारास्तु आत्मदर्शनाङ्गत्वेन श्रवणमनननिदिध्यासनस्य उपदेशं कृत्वा तेषु निदिध्यासनस्यैव मुख्यत्वं प्रतिपादयामासुः। निदिध्याससिद्ध्यर्थमेव नैकेषु प्रकरणेषु ध्यानजपमन्त्रोपदेशादिकम् अकार्षुः।

**एतदर्थं साङ्ख्ययोगौ हरेस्सेवा गुरोरपि।**
**एतदर्थं हि सन्यासो वेदान्तश्रवणन्तथा।। 2.23.36।।**
**एतदर्थं हि मननं योगाभ्यासो हि सुव्रत।**
**अयमर्थन्निदिध्यासो जन्मलाभोऽयमेव हि।। 2.23.37।।**

इत्यनेन श्रवणमनननिदिध्यासनानां ब्रह्मज्ञानस्य साक्षात्साधनत्वम् उक्तम् योगिभिः। एतेषु श्रवणमनननिदिध्यासनेषु निदिध्यासस्यैव मोक्षसाधनत्वम्, तदर्थमेव श्रवणादीनामुपदेश इति ते प्रतिपादितवन्तः।

**तस्मात्त्वया बुद्धिमता निदिध्यासस्य सिद्धये।**
**यत्नस्सम्यक्प्रकर्त्तव्यो जीवन्मुक्तिसुखं यतः।। 2.6.24।।**

इत्यनेन निदिध्यासनेन जीवन्मुक्तिः सिद्ध्यतीति प्रतिपादितम्। अग्रे–

**ये वदन्ति निदिध्यासान्मुक्तिर्ये च गुरोर्मुखात्।**
**समाधेस्साधनमिति ज्ञानं यच्छास्त्रसंभवम्।।** 2.16.25।।
**निदिध्यासनाभिज्ञास्वान्ते धन्या नात्र संशयः।**
**तेषां भवेदिदं ज्ञानं पापहं क्रमसिद्धिदम्।।** 2.16.26।।

इत्यादिभिः निदिध्यासनस्यैव प्रामुख्यं दर्शितम् आचार्यैः।

**( ग ) सगुणोपासनस्य ब्रह्मज्ञानसाधनत्वम्।**

निर्गुणब्रह्मसाक्षात्कारार्थं सगुणोपासनं प्रथमं कर्त्तव्यमिति ब्रह्मविन्निधिकाराः मन्यन्ते। सगुणोपासनादेव निर्गुणध्यानार्थं योग्यता सिद्ध्यतीति तन्मतम्। एतस्य सगुणोपासनस्य उपदेशः तत्र तत्र प्रकरणेषु कृतो वर्तते। तद्यथा–

**मिथ्यात्वं जगतो व्यक्तीकर्तुं शास्त्रप्रवृत्तयः।**
**तेषां न श्रवणान्मुक्त्यै निदिध्यासं विनाऽनघ।।** 187।।
**ते नादैः सगुणं ध्यायेत् पश्चान्निर्गुणमाश्रयेत्।**

किं च निर्गुणब्रह्मप्राप्त्यर्थं भक्तेः साधनत्वं वदन्तो आचार्याः भगवतो सगुणरूपस्य ध्यानं कर्त्तव्यमिति प्रतिपादयन्ति। भक्त्या चित्तचाञ्चल्यरूपयोगविघ्नस्यापि विनाशो भवति तेन निर्गुणे मनसः स्थिरीकरणं शक्यत इति तेषामाशयः।

**तस्माद्धि सगुणध्यानं चित्तचाञ्चल्यलक्षणम्।**
**तेन त्यक्तं यदा भूयात्तदा निश्चञ्चलं मनः।।** 2.10.27।।
**अहमेतत्प्रकारेण प्राणसंयमपूर्वकम्।**
**करोमि सगुणध्यानं मनो मे नैव निश्चलम्।।** 2.4.46।।

इत्युभाभ्यां श्लोकाभ्यां मनसः निश्चञ्चलत्वप्राप्त्यै सगुणोपासनस्य साधनत्वम् उक्तम्। अग्रे सगुणोपासनेन कथं निर्गुणोपासने योग्यता सम्पत्स्यत इति प्रतिपादितम्। क्रमोऽपि प्रादर्शि।

**आदौ सगुणमाश्रित्य पश्चान्निर्गुणमाश्रयेत्।**
**आलंबनान्निरालंबं पश्यन्ति परमर्षयः।।** 41।।
**आलम्बनं न चेत्पूर्वं न च बन्धविमोक्षणम्।**
**निर्गुणध्यानयत्नस्तु निरालंबान्मृषा समः।।** 42।।
**कृते तु सगुणध्याने क्रमात् फलति निर्गुणम्।** इत्यादिना।

**( घ ) मोक्षसाधनत्वेन समाधिः**

यमनियमवता जितासनेन परिहृतप्राणविक्षेपेण, प्रत्याहृतेन्द्रियग्रामेण अधिकारिणा अद्वितीयवस्तुनि अन्तरिन्द्रियधारणाभ्यस्यते। तत्र अद्वितीयवस्तुनि विच्छिद्य विच्छिद्य अन्तरिन्द्रियप्रवाहः चित्तस्य एकतानता ध्यानम्। ततः परं चित्तस्य ज्ञेयात्मना निश्चलावस्थानं जायते स एव समाधिः। तथा च चित्तस्य ज्ञेयात्मना निश्चलावस्थानं समाधिरिति

विद्वन्मनोरञ्जन्यामुक्तम्। व्युत्थाननिरोधसंस्कारयोः अभिभवप्रादुर्भावे सति चित्तस्य एकाग्रतापरिणामः समाधिः इति च सुबोधिन्याम्। सम्यक् आधीयते एकाग्रीक्रियते विक्षेपान् परिहृत्य मनः यत्र स समाधिः इति व्युत्पत्तेः। पातञ्जलयोगसूत्रे इत्थमुक्तम् – 'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः' इति। ध्यानं यदा अर्थाकारसमावेशात् उद्भूतार्थरूपं न्यग्भूतज्ञानस्वरूपत्वेन स्वरूपशून्यतामिव आपद्यते सः समाधि इत्युच्यते इत्यर्थः।

ब्रह्मविन्निधौ तु–

**ध्यातृभूतं यदा चेतस्तदा ध्येयादिता न हि।**
**यदा ध्येयं तदा नैव ध्येयादिपरिणामिता।।** 2.10.34।।
**ध्यातृवत्पश्यति ध्येयं ध्येयवच्च भविष्यति।**
**पुनर्ध्यानत्वमापन्नं ध्यातारं पश्यति क्षणात्।।** 36।।

यदा चित्तम् अभ्यासवशेन ध्यातृध्याने ध्यातारं ध्यानं च क्रमात् परित्यज्य ध्येयैकगोचरं भवति तदा समाधिः इत्युच्यते। वायुरहिते प्रदेशे वर्तमानः दीपः यथा निश्चलः भवति तद्वत् इत्यर्थः। समाधिकाले वृत्तयस्तु अज्ञाता अपि समाधेः उत्थितस्य 'एतावन्तं कालं समाहितो अभवम्' इत्येवंरूपात् स्मरणात् अनुमीयन्ते।

**'वृत्तयस्तु तदानीम् अज्ञाता अप्यात्मगोचराः।**
**स्मरणादनुमीयन्ते व्युत्थितस्य समुत्थितात्।'** इति पञ्चदश्यां निरूपितम्।

अयं च द्विविधः– चिरकालाभ्यस्तयदुत्तरसविकल्पकसमाध्यनुभवजनितसंस्कारसहकृतायाः प्रथमः। एतन्निर्विकल्पकसमाध्यभ्यासपाटवेन लुप्तसंस्कारतया ज्ञात्रादित्रिपुटीलयपूर्वकम् अखण्डाकाराकारितायाः चित्तवृत्तेः विनापि स्वस्फूर्तिं केवलचिदानन्दात्मना अवस्थानात्मकः द्वितीयः। आद्ये संस्कारोऽस्ति, द्वितीये तदभाव इति विशेषः।

तदुक्तं ब्रह्मविन्निधौ–

**ततस्समाधिपर्यन्ता भिदा नैव ततः परम्।**
**ध्यातृध्यानध्येयताभिर्ध्यानञ्चेत्त्रिपुटीकृतम्।।** 42।।
**ज्ञातृज्ञानज्ञेयताभिः मुक्तश्चेदज्ञानसंज्ञिकम्।**
**ध्यातृध्यानध्येयताभिर्मुक्तं ज्ञानं न किं भवेत्।।** 2.12.43।।
**निर्विकल्पसमाधिस्था अद्वैतज्ञानरूपिणः।**
**ब्रह्मीभूता इहैव स्युः धिक्कृतब्रह्मविद्भिदाः।।** 2.7.18।।

तत्र गाढनिद्रावस्थायामपि ज्ञातृज्ञेयभागानां लयसम्भवात् तत्र निर्विकल्पकसमाधिलक्षणं सम्भवति वा इति चेत् न, समाधिसुषुप्त्योः वृत्यभाने समाने अपि तत्सद्भावासद्भावमात्रेण अनयोः भेदोपपत्तेः। समाधौ अज्ञायमानवृत्तिसद्भावात् सुषुप्तौ वृत्यभावाच्च तयोः भेदोपपत्तेरित्यर्थः।

सुषुप्तौ बुद्धेः कारणात्मना अवस्थानात् समाधौ तु बुद्धिवृत्तेः अद्वितीयवस्त्वाकाराकारितायाः अवस्थानाङ्गीकारात् सुषुप्तेर्भेदः उपपद्यते। समाधेश्च फलं जीवेशैक्यरूपब्रह्मप्राप्तिरिति स्पष्टतया प्रत्यपादि ब्रह्मविन्निधिकारैः–

यन्मूर्तौ संस्मृतिध्यानं धारणा यत्र संस्थितिः।
समाधिर्यस्य तादात्म्यं जीवेशैक्यस्वरूपकम्।। 2.32.107.।।
यदा सर्वाणि भूतानि समाधिस्थो न पश्यति।
एकीभूतः परेणासौ तदा भवति केवलः।। 2.32.218।।

इत्थं मोक्षस्य साक्षात्साधनानां परम्पराकारणानाञ्च विचारः विस्तृततः ग्रन्थेऽस्मिन् कृतो वर्तते।

**सन्दर्भा :-**

1. क.उ. 1.3.12
2. वि.चू. 11
3. वे.सा.13
4. श्वे.उ. 6.15, 3.8
5. छा.उ. 7.1.3
6. तै.उ. 2.1.1
7. बृ.उ. 2.4.5
8. बृ.उ. 4.5.15
9. तै.ना. 12, कै.उ. 1.2
10. मु.उ. 1.2.12
11. म.भा.शा.प. 24.7
12. बृ.उ. 4.4.22

**अनुशीलितग्रन्थानां विवरणम्**

* ईशाद्यष्टोत्तरशतोपनिषदः– श्रीवासुदेवशर्मा, चौखम्बा विद्याभवन वाराणसी, 1991
* उपनिषद्भाष्यम् – 1 – (बृहदारण्यकोपनिषत् )– श्रीशङ्करभगवत्पादाचार्याः, श्रीदक्षिणामूर्तिमठप्रकाशनम् , वाराणसी, 2004.
* उपनिषद्भाष्यम् – 2 – (छान्दोग्योपनिषद् ) – श्रीशङ्करभगवत्पादाचार्याः, श्रीदक्षिणामूर्तिमठप्रकाशनम् , वाराणसी, 2004.
* पातञ्जलयोगसूत्रम् – श्रीवासुदेवशर्मा– चौखम्बा विद्याभवन वाराणसी 1991.
* ब्रह्मसूत्रम् (शाङ्करभाष्योपेतम् )– मोतिलाल बनारसीदास पब्लिकेशन् दिल्ली, 1998.
* महावाक्यार्थविचारः– प्रो. एम्.एल्. नरसिंहमूर्तिः, तिरुमलतिरुपतिदेवस्थानम् , तिरुपति, 1994.
* विवेकचूडामणिः – वेदान्तभारती, मैसूरु, 2000.
* वेदान्तपञ्चदशी– रायप्रोलु लिङ्गनसोमयाजी (व्या)– श्री चित्रभानु – 1942
* वेदान्तपरिभाषा – प्रो. पारसनाथद्विवेदी, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी 2000.
* वेदान्तसारः – श्रीसदानन्दः, चौखम्बा कृष्णदास अकाडमी वाराणसी, 2002.
* शाङ्करदर्शनमर्मप्रकाशः– कृष्णजोयिस्, राष्ट्रियसंस्कृतविद्यापीठम् , तिरुपति, 1996.
* श्रीमद्भगवद्गीता– (अष्टटीकोपेता)– चौखम्बा संस्कृतप्रतिष्ठानम् , दिल्ली 2009.
* श्रीशाङ्करग्रन्थावलिः– श्री शङ्करभगवत्पादाचार्याः, समता बुक्स् मद्रास् 1999



# धर्मशास्त्रस्योपाङ्गत्वविचारः

– डॉ. प्रमोदिनी पण्डा

*(इस शोधनिबन्ध के आदि में संस्कृतवाङ्मय में प्रतिपादित चतुर्दश विद्याओं एवं उनके स्वरूप पर विचार किया गया है। तदनन्तर वेदों तथा वेदाङ्गों की विवेचना के पश्चात् धर्मशास्त्र निरूपित वर्णधर्म, आश्रमधर्म, वर्णाश्रमधर्म, गुणधर्म और साधारण धर्म का विस्तार से विचार किया गया है। इस प्रसङ्ग में साम्प्रतिक समाज के प्रचलित दासप्रथा, वेश्याप्रथा, पञ्चमहायज्ञादि समसामयिक विषयों का धर्मशास्त्र की दृष्टि से विस्तृत विमर्श इस निबन्ध में दृष्टिगत होता है।)*

वैदिकवाङ्मये के के ग्रन्थाः कानि च शास्त्राणि समाद्रियन्त इति जिज्ञासायां तत् संहिता साहित्यादारभ्य सूत्रसाहित्यं यावद् गणयितुं शक्यते। एतेषु सन्ति षड् वेदाङ्गानि।[1] एतानि वेदपुरुषस्य प्रमुखान्यङ्गानि भवन्ति। पाणिनीयशिक्षायां स्पष्टं समुपदिश्यते–

**छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।**
**ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते।**
**शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।**
**तस्मात् साङ्गमधीत्येव ब्रह्मलोके महीयते।[2]**

उपाङ्गत्वेन धर्मसूत्राणां धर्मशास्त्राणां वा ग्रहणं चरणव्यूहस्य चतुर्थखण्डे सूच्यते– प्रतिपदमनुपदं छन्दो भाषा धर्मो मीमांसा न्यायस्तर्क इत्युपाङ्गानि। एतेषां सर्वेषां सामान्यार्थो भवति भावस्य स्पष्टीकरणं नियमीकरणं वा। वेदोऽखिलो धर्ममूलम्। विद् धातोः गणभेदेन विभिन्नार्थे वेदशब्दस्य उत्पत्तिः भवति। अस्य सामूहिकोऽर्थो भवति वेदं पठित्वा संसारबन्धनविषये ज्ञानं प्राप्य ततः मुक्तः सन् निःश्रेयसः प्राप्तिः।[3] एवंविधः वेदः ऋग्यजुस्सामार्थवाख्यः चतुर्धा विभक्तः विषयदृष्ट्या। तत्र स्तुतिमूलकः ऋग्वेदः, यज्ञपरकः यजुर्वेदः, गानयुक्तः सामवेदः, ज्ञानप्रमुखः अथर्ववेदः ब्रह्मवेदत्वेन परिचितः। भाषा परिवर्त्तनशीला। वैदिकी लौकिकीति संस्कृतभाषा द्विधा विभक्ता। मन्त्राणां समूहः वेदः।[4] छन्दः विना मन्त्राणामुच्चारणं भवितुं नार्हति। अतः छन्दः वेदस्य पादत्वेन परिगणितः। उच्चारणं शिक्षयति शिक्षा। उच्चारणे त्रुटिः भवति चेत् यजमानस्य महती क्षतिः भवति।[5] शिक्षा वेदस्य घ्राणस्वरूपः भवति, यतोहि घ्राणं विना अथवा वायुं विना शब्दोच्चारणं भवितुं नार्हति। नभोमण्डले ज्योतिषां नक्षत्राणां गतिमयनं दृष्ट्वा कालनिर्णयः क्रियते। तत् निर्धारितं भवति ज्योतिषशास्त्रे। अतः ज्योतिषं वेदपुरुषस्य चक्षुः भवति। निरुक्तं

(निर्-वच्-क्त) शब्दार्थं धातुदृष्ट्या व्याख्याति। न हि निरर्थकाः शब्दाः इति मत्वा सर्वेषां शब्दानामर्थो करणीयः येन बोधगम्याः स्युः इति यास्काचार्यस्य मतम्। व्याकरणज्ञानं विना शाब्दबोधः न जायते। व्याकरणं शब्दशास्त्रस्य मुख्यमङ्गं भवति, येन मुखत्वेन परिगणितः।......"हस्तौ कल्पोऽथ पठ्यते" कल्पशास्त्रं वेदपुरुषस्य हस्तौ कल्पः समर्थ्यते यागप्रयोगोऽत्र। कल्पो वेदविहितानां कर्माणामानुपूर्वेण कल्पना शास्त्रम्[6]। कल्पे श्रौत-गृह्य-धर्म-शुल्वसूत्रमाध्यमेन अनुष्ठानानां कर्माणां चर्चा प्रचलति। यत्र ब्राह्मणग्रन्थे वर्णितानाम् अग्नौ सम्पाद्यमानानां दर्श-पूर्णमासादि यज्ञयागादीनाम् अनुष्ठानानां वर्णनमस्ति, तत् श्रौतसूत्रम्। यत्र गृहाग्नौ अनुष्ठीयमानानां यागानां उपनयन-विवाह-श्राद्धादीनां संस्काराणां वर्णनमस्ति, तत् गृह्यसूत्रम्। यत्र चतुर्वर्णानाम् आश्रमाणां कर्तव्याकर्तव्यविषये अधिकया राज्ञः कर्तव्यविषये प्रतिपादनं भवति, तत् धर्मसूत्रम्। यत्र यज्ञमण्डपस्य निर्माणविधिः विशेषेण प्रतिपादितो भवति, यत् खलु आर्याणां ज्यामितिन्तानं गणनाविधिं च सूचयति, तत् शुल्वसूत्रम्।[7] धर्मशास्त्रं धर्मसूत्रस्य विकसितरूपं भवति।[8]

धृ-धातोः धर्मशब्दः उत्पद्यते। "धारणात् धर्म इत्याहुर्धर्मो धारयते प्रजाः।"[9] धर्मस्य अर्थो भवति प्रथमतः कर्तव्यम्। अतः धर्मशास्त्रे कर्तव्याकर्तव्यविषये चर्चा भवति। धर्मशास्त्रे नियमाः उल्लिखिताः। नियमानुसारं कार्यं कृत्वा मानवः स्वस्य राष्ट्रस्य मानवसमाजस्य च कल्याणं कर्तुं प्रभवति। अस्य तृतीयोऽर्थो भवति कर्मकाण्डं पूजा प्रभृतिः। जीवेमः शरदः शतम् इति जनः शतायुः सन् "कुर्वन् एव हि कर्माणि जिजीविषेत् शतं समाः।[10] अतः मनुष्यस्य जीवनकालं शतवर्षं यावत् मत्वा चतुर्षु आश्रमेषु विभाजितवन्तः क्रान्तद्रष्टारः ऋषयः। तत्र पञ्चविंशतिवर्षं यावत् ब्रह्मचर्याश्रमः। ब्रह्म नाम वेदः। वेदस्य आचरणम् आ समन्तात् श्रमः आश्रमः। ब्रह्मचर्याश्रमे वटुः गुरुकुले निवसन् वेदाध्ययनं करोति स्म। ततः परं गार्हस्थाश्रमस्य प्रारम्भः भवति। अस्मिन् आश्रमे तिष्ठन् जनः श्रौतसूत्रे गृह्यसूत्रे च वर्णितानुष्ठानानि करोति। वानप्रस्थाश्रमे जनः गृहं त्यक्त्वा वनं प्रति प्रस्थानं करोति। आश्रमे गुरूपदेशेन परिमार्जितः भूत्वा अन्ते संन्यासं आचरति। अतः धर्मशास्त्रस्य धर्मसूत्रस्य वा ज्ञानम् आवश्यकम्।

धर्मशास्त्रे प्रमुखरूपेण षड् विषयाः आलोच्यन्ते-वर्णधर्मः, आश्रमधर्मः, वर्णाश्रमधर्मः, गुणधर्मः, निमित्तधर्मः, साधारणधर्मश्च।

1) **वर्णधर्मः**:- कर्मानुसारं मनुष्याः चतुर्षु वर्णेषु विभक्ताः आसन्।[11] यस्य उल्लेखं प्रथमवारं ऋग्वेदे पुरुषसूक्ते अभवत्।[12] परवर्तिकाले मनुना अस्य विस्तारो मनुस्मृतौ कृतः। यथा-

**ब्राह्मणस्य** - **अध्यापनमध्ययनं यजनं याजनं तथा।**
**दानं प्रतिग्रहश्चैव ब्राह्मणानामकल्पयत्।।**

**क्षत्रियस्य**- **प्रजानां रक्षणं दानमिज्यामध्ययनमेव च।**
**विषयेष्वप्रसक्तिश्च क्षत्रियाणां समासतः।।**

**वैश्यस्य**- **पशूनां रक्षणं दानमिज्यामध्ययनमेव च।**
**वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव च।।**

**शूद्रस्य-** **एकमेव तु शूद्रस्य प्रभुकर्म सम्पादनम्।**
**एतेषामेव वर्णनां शुश्रुषामनसूयया।।**[13]

समग्राणां धर्मशास्त्राणामस्मिन् विषये सारः प्रस्थानग्रन्थे श्रीमद्भगवत्गीतायां दत्तमस्ति। तत् यथा-

**ब्रह्मधर्मः-** **शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च।**
**ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्।।** गीता 18/42

**क्षात्रधर्मः-** **शौर्यं तेजो धृतिः दाक्ष्यं युद्धे चाप्यपलायनम्।**
**दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्।।** गीता 18/43

**वैश्यधर्मः-** **कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम्।।** गीता 18/44

ब्राह्मणशूद्रयोः प्रसङ्गः ब्राह्मणे एवं वर्त्तते-

**तैत्तिरीय-** **ब्राह्मणश्च शूद्रश्च चर्मकर्तो न्यायच्छेते।**
**दैव्यो वै वर्णो ब्राह्मणः, असुर्यो शूद्रः।** तै.ब्रा.1/2/6 पुरुषसूक्तम्.ऋग् 10/90

एतेषु चतुर्षु गार्हस्थं श्रेष्ठतमं राजते। यतो हि तमाश्रित्य अन्ये वर्द्धन्ते। उक्तं च मनुना

**यथा वायुं समाश्रित्य वर्तन्ते सर्वजन्तवः।**
**तथा गृहस्थमाश्रित्य वर्तन्ते सर्व आश्रमाः।।** मनु। 3/22

**2 ) आश्रमधर्मः-** "शतायुर्वै पुरुषः" "जीवेमः शरदः शतम्" इति वैदिकवचनाधारेण मानवानामायुः शतवर्षं यावत्कल्पितम्। चतुर्षु आश्रमेषु यदि विभज्यते तर्हि प्रत्याश्रमं पञ्चविंशतिवर्षाणि भवन्ति। एते आश्रमाः, क्रमेण ब्रह्मचर्य-गार्हस्थ्य-वानप्रस्थ-संन्यासश्च ब्रह्मचर्याश्रमे प्रमुखमुपनयनम्। उपनयनं प्रतिवर्णं कदा भवति तस्य वर्णनं धर्मशास्त्रग्रन्थेषु सुविशदं लभ्यते। वेदे तु संस्काराणां बीजं निर्देशितमस्ति। यथा-

1) स इदं देवेभ्यो हविः संस्कुरु साधु संस्कृतं संस्कुर्वित्येवैतदाहुः - शतपथब्राह्मणम् 1/1/4/20, 3/2/1/22

2) तस्मादु स्त्री पुंमासं संस्कृते तिष्ठन्तमभ्येति- छान्दोगोपनिषद् 1/16/1-2

3) तस्मादेव एवं यज्ञस्य मनश्च वाक् च वर्तिनी न्यतरां मनसा संस्करोति ब्रह्मा वाचा होता इति दृश्यते। जैमिनिसूत्रे 6/1/35

4) संस्कारो नाम स भवति यस्मिन् जाते पदार्थो भवति योग्यः कस्यचिदर्थस्य। जैमिनिसूत्रम् 1/3

**3 ) वर्णाश्रमधर्मः-** वर्णाश्रमधर्मे प्रतिवर्णं धर्मो भिद्यते। दिङ्मात्रमेकमुदाह्रियते। उपनयनकाले प्रतिवर्णं ब्रह्मचारिणां दण्डधारणे काष्ठं पृथगस्ति। उक्तं च मनुना-

**ब्राह्मणो वैल्वपलाशौ क्षत्रियो वाटखादिरौ।**
**पैल्वौदुम्वरौ वैश्यो दण्डानर्हन्ति कर्मतः।।** मनु 2/45

**4 ) गुणधर्मः-** अभिषिक्तस्य गुणवतः राज्ञः प्रजापालनोपायस्तन्नियमाश्च गुणधर्मपदेन व्यपदिश्यते। गुणपदेन राजा गृह्यते। मनुः राज्ञः षड्गुणानधिकृत्य वदति-

**सन्धिश्च विग्रहश्चैव यानमासनमेव च।**
**द्वैधीभावं संशयं च षड् गुणान् चिन्तयेत् सदा।।** मनु. 7/160

अहोरात्रावष्टावपि प्रहरेषु प्रतिप्रहरं राज्ञा किं करणीयं तद् विचारो भिन्नभिन्नस्मृतिग्रन्थेषु विस्तरेण प्रपञ्चितमस्ति।

**5 ) निमित्तधर्मः-** धर्मशास्त्रे पापानां विचारः कृतो वर्त्तते। एतानि पापानि महापातक-अतिपातक-उपपातक-जातिभ्रंशकर संकरीकरणादिषु विभज्यते। धर्मशास्त्रे प्रति पापं प्रायश्चितप्रकारो विहितो विद्यते। प्रायश्चितस्य परिभाषां व्याकुर्वन् गौतमो लिखति "विहिताकरणे प्रतिसिद्धसेवने निमित्तं प्रायश्चितम्।"[14] मनुः प्रायश्चित्तं तपो मनुते-

**प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते।**
**तपो निश्चयसंयुक्तं प्रायश्चितमिति स्मृतम्।।**

अर्थात् जपतपः होमस्नानतीर्थयात्रादानानशनद्वारा पापानि क्षीयन्ते।

**6 ) साधारणधर्मः-** ब्राह्मणक्षत्रियवैश्यशूद्रसर्वजातीनां सामान्यो धर्मः साधारणधर्मः। गौतमो ब्रूते-मा हिंस्यात् सर्वभूतानि इति। आचाण्डालब्राह्मणं साधारणधर्मः। मनुना एतादृशदशधर्माः सर्वजातीनां साधारणधर्मत्वेन परिगणिताः।

**धृतिः क्षमादमोऽस्तेयं शौचमिन्द्रियनिग्रहः।**
**धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्।।**[15]

एतैव धर्माः ग्रन्थभेदेन सामान्यरूपेण भिद्यन्ते। रामायण-महाभारतपुराणेषूदाहरणमाध्यमेन कथाप्रसङ्गेन धर्मतत्त्वानां व्यापकं वर्णनं लभ्यते।

एतदतिरिक्ताः बहवः समसामयिकविषया धर्मशास्त्रे वर्णिताः सन्ति येषामिदानीमपि प्रासङ्गिकता दृश्यते। कतिपया एतादृशसन्दर्भा संगृह्यन्ते।

**7 ) दासप्रथा-** सेवाकार्ये नियुक्तः जनो दासो भृत्यो वा उच्यते। अद्यापि दासप्रथा कुत्रचित् प्रचलति। समाजस्य वर्तमानस्थितेः कारणत्वेन गृहीतेषु विषयेषु एषा अन्यतमा। अस्याः क्रूरस्वरूपं यस्य कस्यापि सहृदयस्य चित्तमान्दोलयति। मेघास्थनीज् महाशयः अस्मिन् विषये किमपि न लिखति। येन वैदिककाले का स्थितिरासीदिति कुतूहलं जायते। ऋग्वेदे दासशब्दस्य प्रयोगः आर्यैः पराजितानां कृते अभवत्। ये गृहीताः सन्तः सेवाकार्ये नियुक्ताः अभवन्[16] "उदकुम्भानधिनिधाय दास्यो माजालीयं परिनृत्यन्ति"[17] इति तैतिरियसंहितायां "सोहं भगवते विदेहान् ददामि मां चापि सह दास्याय"[18] इति बृहदारण्यकोपनिषदि वर्णनमस्ति।

आपस्तम्बधर्मसूत्रे उल्लेखोऽस्ति यत् यदि अतिथेः आवश्यकता अस्ति परिवारजनाः स्वखाद्यांशं दास्यन्ति, न तु दासस्य भागं दद्यात्।[19]

मनुः सप्तविधदासानां वर्णनं करोति, युद्धबन्दी, भोजनार्थं नियुक्तः, दासीपुत्रः, क्रीतः, मात्रा पित्रा वा दत्तः, वंशानुसारं संपदरूपेण प्राप्तः, राजदण्डेन दण्डितः।[20] नारदः पञ्चदशदासानामुल्लेखं करोति गृहे पालितः, क्रीतः, दानेन वा प्राप्तः, संपदरूपेण लब्धः, अकाले रक्षितः, अन्येन प्रतिश्रुतः, ऋणग्रस्तः, युद्धबन्दी, द्यूतेन जीतः, स्वयम् आगतः, संन्यासात्

च्युतः, कतिपयदिनेभ्यः दासः, भोजनार्थं स्थितः, दास्या आहूतः (वडवाहूतः), स्वयं विक्रीतः।[21]

नारदयाज्ञवल्क्यानुसारं यदि दासः स्वामिनं मृत्योः मुखात् रक्षति, तर्हि मुक्तः भवति, पुत्रवत् संपत्तेः अधिकारी च भवति। निम्नजातीयो जनः उच्चवर्णस्य दासो भवितुमर्हति।[22]

व्यवहारमयूखानुसारं यदि गृहीतस्य उपनयनसंस्कारः क्रियते स पुत्रवत् भवति, अन्यथा दासो भवति।[23]

**वेश्याप्रथा-** इदानीं वेश्यावृत्तिर्यथा निन्दनीया वैदिककाले स्मृतिकालेऽपि सा तथैव निन्दनीया आसीत्। ब्राह्मणो यदि महापापमाचरेत् तर्हि स कदापि वध्यो न भवति स्म। एवमेव वेश्यावृत्तिमाचरन्ती ब्राह्मणी बहत्वाऽपि प्रायश्चितं नापेक्षते।[24] केवलं मुष्टिपरिमितान्नदानेन प्रायश्चितं कल्पते। वेश्याहस्तात् ब्राह्मणोऽन्नं न गृह्णीयादिति मनुर्वदति।[25] वेश्या सदैव दण्डनीयेति धर्मशास्त्रकाराणां मतम्।

अयं वेश्याशब्दः ऋग्वेदकालादेव विभिन्नप्रसङ्गेषु दृश्यते। यथा मरुत्गणाः विद्युता सह एवं संश्लिष्टा भवन्ति यथा युवतिवेश्यया सह कामुकाः संलग्नाः।[26] नारदधर्मशास्त्रे गम्यागम्यप्रसङ्गे उच्चजातिसम्पन्नपुरुषो निम्नजातिवेश्यासु न संगच्छेदिति वदति। यथा अब्राह्मणी स्वैरिणी, वेश्या, दासी च उच्चकुलपुरुषद्वारा न सेव्या इति।[27]

यदि उपर्युक्तप्रसङ्गानामनुशीलनं क्रियते तर्हि समीक्षितुं शक्यते यद् वेदकालाद् इदानीं यावत् वेश्यावृत्तिनिन्दनीया वर्त्तते। धर्मशास्त्रकाराः पौराणिका अपि प्रसङ्गमाध्यमेन घटनाक्रमं वर्णयित्वा विधिनिषेधमाध्यमेन समाजस्योपकारं मार्गदर्शनं च कृतवन्तः।

**पञ्चमहायज्ञाः-** पञ्चमहायज्ञानां महत्त्वं वैदिककाले ब्राह्मणारण्यकग्रन्थेषु प्रभूतं दृश्यते। शतपथे प्रशस्तिरेवमस्ति पञ्चेव महायज्ञाः। तान्यैव महासत्राणि भूतयज्ञो, मनुष्ययज्ञो, पितृयज्ञो, देवयज्ञो, ब्रह्मयज्ञ इति।[28] तैतिरीयारण्यकेऽपि[29] तथैव वर्ण्यते। अग्नौ आहुतिप्रदानं देवतोद्देश्येन हविस्त्यागः देवयज्ञः। पितृपुरुषाणां कृते श्राद्धं तर्पणादिकर्म पितृयज्ञः। जीवानां कृते बलिप्रदानं पिण्डादिदानं च भूतयज्ञः। अतिथिसत्कारपूर्वकं सादरं भोजनप्रदानं मनुष्ययज्ञः। गुरुमुखाद् वेदमधीत्य प्रतिदिनं स्वाध्यायो ब्रह्मयज्ञपदेन च व्यपदिश्यन्ते।

आश्वलायनगृह्यसूत्रे 3/3/1 अधिकं वर्णनं स्वाध्ययमधिकृत्य लभ्यते। पुराणस्य कथाः व्यापकरूपेण गाथानाराशंसीरूपेण बहुभिरध्यायैः पञ्चमहायज्ञान् वर्णयन्ति। यथा- भागवते धुन्धुकारी कथामाध्यमेन गोकर्णद्वारा पितृयज्ञवर्णनम्। रामायणे श्रवणकुमारकथा, रामद्वारा दशरथाय पिण्डदानम्, जटायोः और्ध्वदैहिकं कर्म। इदानीं प्रतिदिनं पितृश्राद्धं तर्पणं वा न भवति। परन्तु श्रावणमासस्यापरपक्षे तर्पणस्य विधानमिदानीमपि प्रभूतं दृश्यते।

वेदकाले मूर्तिपूजायाः प्राधान्यं नासीत्। देवतानां नामोच्चारणपूर्वकमग्नौ हविरर्प्यते स्म। एतेषु देवेषु इन्द्राग्निसोममरुत्पूषावरुणप्रमुखाः आसन्। याज्ञवल्क्यस्मृत्यनुसारेण (1/100) प्रतिदिनं तर्पणदेवपूजनात् परं पञ्चयज्ञेषु होमस्य ग्रहणं भवति स्म। मध्यकाले वैश्वदेवपूजनं देवयज्ञत्वेन स्वीकृतम्। वेदात्परं परवर्तिकाले मूर्तिपूजायाः प्रसारोऽभूत्। बृहद्देवत-अग्निपुराण-विष्णुधर्मोत्तरपुराणेषु प्रतिमानिर्माणपद्धतिर्नियमाश्च वर्णिताः सन्ति। अद्वैतवादी शङ्करोऽपि

पञ्चदेवोपासनायाः प्रचारं कृतवान्। स्तोत्रेष्वपि विभिन्नदेवानां पूजाप्रकारो वर्णितः। के देवाः कैरुपास्या इति वर्णनमपि लभ्यते। यथा

अप्सु देवा मनुष्याणां दिवि देवा मनीषिणाम्।
काष्ठलोष्ठेषु मूर्खाणां युक्तस्यात्मनि देवता।।[30]
अग्नौ क्रियावतां देवो दिवि देवो मनीषिणाम्।
प्रतिमा स्वल्पबुद्धीनां योगिनां हृदये हरि।।[31]

श्लोकद्वयस्य समीक्षायामेवं ज्ञायते तपस्विनां साधकानां च हृदये भगवान् सदैव राराजते। भौतिकप्रगतये समृद्धये च जलप्रकाशाग्निसम्बन्धिनो देवाः स्तूयन्ते। जडवुद्धयः पाषाणवृक्षादीन् देवत्वेन पूजयन्ति।

## उपसंहारः

भारतीयसंस्कृतेः सभ्यतायाश्च मूलस्रोतांसि वेदा एव। अस्मद् वैदिकदर्शनानि, रामायणं, महाभारतं, पुराणानि, तदाधारितकाव्यनाटकानि सर्वाणि वेदमूलकानि। वेदस्यापरं नाम श्रुतिः। तत्संपोषिका स्मृतिः। वेदा एव सकलशास्त्राणां प्रमाणम्। वेदात्परं स्मृतिः धर्मशास्त्रं वा द्वितीय प्रमाणत्वेनाङ्गीक्रियते। यत्र श्रुतिप्रमाणं नास्ति तत्र स्मृतिप्रमाणं गृह्यते। उभे प्राप्ते सति दोषो नास्ति। यदा द्वयोः प्रमाणयोर्मध्ये विरोधस्तत्र श्रुतिप्रमाणं ग्राह्यम्। उक्तं च "श्रुतिस्मृतिविवादेषु श्रुतिरेव बलीयसी"। कालिदासोऽपि स्मृतिं श्रुतेरनुयायिनीत्वेन वर्णितवान्। "श्रुतेरेवार्थं स्मृतिरन्वगच्छदितिं"।

उपाङ्गत्वेन यद् धर्मो वर्णितस्तन्मूलमेव वेदः। परवर्तिसाहित्येषु केवलं तत्पल्लवनम्। वैदिकयज्ञ एव भगवान्। "यज्ञो वै भगवान् विष्णुः" इति। स एव विष्णु पुराणेषु कृष्णरूपेण वर्णितः। प्रतीकीभूताः सर्वे वैदिकदेवा अपि कर्मकाण्डप्रभावेण प्रभाविताः सन्तः प्रतिमारूपेण पूजिताः। तेषां च महिमा महताडम्बरेण वर्णितः। "त्रेधा निधदे पदम् " इत्यस्य वेदवाक्यांशस्योपबृहणं वामनपुराणस्यररूपं सञ्जातम्। "मत्स्यं पाणौ आपेदे" इति मत्स्यावतारप्रसङ्गो द्योतितः पुराणेषु। अनुशीलनेन एवं ज्ञायते यद् वेद एव धर्मलक्षणम्। उक्तं च मनुना-

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः साक्षाद् धर्मस्य लक्षणम्।। मनु 2/12

इदानीं केचन धर्मशास्त्रे प्रतिपादिततथ्यानां कुव्याख्यां कृत्वा लोकान् भ्राम्यन्ति। यथा वेश्यावृत्तिः। इयं वृत्तिस्तदानीमासीत्। इदानीमपि वर्तते। श्रुतौ स्मृतावपि निन्दाऽस्याः कृता वर्तते, इदानीमपि ता निन्दनीयाः। दासप्रथाप्रसङ्गे उक्तमस्ति यत् केनापि कारणेन गृहे भोजनं नास्ति चेत् भृत्यः केनापि प्रकारेण भोजनीयः। एवं च स्त्रीणां पराधीनतामधोलिखित-श्लोकमाध्यमेनारोपयन्ति।

पिता रक्षति कौमारे भर्ता रक्षति यौवने।
रक्षन्ति स्थविरे पुत्रा न स्त्री स्वातन्त्रमर्हति।। मनु 9/3

अस्य श्लोकस्य तात्पर्यार्थो भवति यत् स्त्री गृहमेव **'न गृहं गृहमित्याहुः गृहिणी गृहमुच्यते।' "यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः"** इति। स्वरूपमवस्थानुसारेण पृथक् पृथक् भवति। कदा सा माता, कदा पत्नी कदा भगिनी कदा च कान्ता भवति। अतः कौमारे कन्यारूपेण, यौवने स्त्रीरूपेण, वार्द्धक्ये मातारूपेण सा सततं रक्षणीया। शारीरिकदृष्ट्या सा कोमला अतः कस्यामप्यवस्थायां न त्याज्या इत्याशयः। गृहस्थ एवं यज्ञं सम्पादयिष्यति। गाश्च पालयिष्यति। गुरुकुलानां सञ्चालनार्थं धनं दास्यति। सन्यासिनां कृते आश्रमनिर्माणं करिष्यति। तदानीं यज्ञो भविष्यति। यज्ञात् पर्जन्यः। पर्जन्यादन्नस्य समुत्पत्तिः। उक्तं च गीतायाम् -

**अन्नाद् भवन्ति भूतानि पर्जन्यादन्नसम्भवः।**
**यज्ञाद् भवति पर्जन्यो यज्ञः कर्मसमुद्भवः।।** गीता

यज्ञसम्पादने गृहस्थानां भूमिकामनुभूय सर्वे धर्मशास्त्रकारा गार्हस्थ्यं सर्वाश्रमाणां संस्थितिरूपेण स्वीकुर्वन्ति।

**यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम्।**
**तथैवाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम्।।** मनु 6/90

एभिः कारणैः पाणिनीयशिक्षायां वेदाङ्गत्वेन धर्मः कल्पान्तर्भूतो वेदपुरुषहस्तत्वेन आदृतः। उपाङ्गेषु वेदस्य सम्यक् महत्त्वं प्रतिपादितम्। अतो वेदाङ्गत्वेन उपाङ्गत्वेन च धर्मशास्त्रस्य महिमा वेदपरवर्तिसाहित्येषु वर्णितः पल्लवितश्च। चतुर्दशविद्यास्थाने धर्मशास्त्रस्य उल्लेखं तत् प्रतिपादयति-

**अङ्गानि वेदाश्चत्वारः मीमांसा-न्यायविस्तरः।**
**धर्मशास्त्रं पुराणं च विद्या हेतोश्चतुर्दश।।**

**सन्दर्भाः-**

1. अग्यन्ते ज्ञायन्ते अभिरिति अङ्गानि। 1- ii- मुण्डको-1/15
2. पाणिनीयशिक्षा
3. विद् ज्ञाने, विद् लृ लाभे, विद् सत्तायां, विद् विदारणे
4. मन्त्रब्राह्मणयोर्वेदनामधेयम्
5. मन्त्रहीनः स्वरतो वर्णतो वा. (पा.शि)
6. विष्णुमित्रः।
7. वेदा
8. श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः
9. मनुस्मृतिः।
10. ईशोपनिषद्
11. चातुर्वर्णं मया सृष्टं गुणकर्मविभागशः - गीता
12. ब्राह्मणोऽस्य मुखमासीत्

13. मनुस्मृतिः 1/88–91
14. गौतमधर्मसूत्रम्
15. मनु. 6/92
16. ऋग् . 8/56/3
17. त्रै.सं. 7/5/1/1
18. वृ. 3. 4/4.23
19. धर्म. 2/4/9/11
20. मनु 8/415
21. नारद 39
22. नारद 39
23. नारद पु. 114
24. गौतम 22/27
25. मनु. 8/259
26. ऋग्वेद : 1/167/4
27. नारद. 78/79
28. शतपथ. 11/5/6/7
29. तैत्तिरीयारण्यकम् 11/10
30. शातातपअह्निकप्रकाशे पृ. 382
31. पूजाप्रकाश : पृ. 8



# कोऽयं प्रतीयमानो नवीनः

(ध्वनिविरोधदृष्ट्या विचारः)

– अशोकापराख्यः झोपाह्वोदयनाथोपाध्यायशर्म्मा

*(लक्षणा व्यापार क्या है, जब लक्षणाशक्ति से ही ध्वन्यार्थबोध हो जाता है, तो फिर पृथक् से ध्वनि माननेकी क्या आवश्यकता? व्यंग्यार्थ भी लक्ष्यार्थ में अन्तर्भुक्त रहता ही है, फिर लक्षणातिरिक्त व्यंजनाशक्ति क्यों मानी जाय? श्रीशंकुक, महिमभट्ट, रुद्रट, जयन्तादि ध्वन्यभाववादियों के सिद्धान्त प्रदर्शन पूर्वक मीमांसा एवं तान्त्रिक आदिके पक्षको भी दर्शाया गया है। भामह, दण्डि, उद्भट, रुद्रट, प्रभृति आचार्यों के द्वारा आनन्दवर्धन के प्रतीयमान अर्थ को वाच्योपकारक मानते हुए भी अलंकार पक्ष में ही स्वीकार किया गया है। लोल्लट भी कार्य रूप रस की उत्पत्ति मानते हैं, जिससे पूर्व स्थिति बनी होने के कारण उसकी ध्वन्यमानता असिद्ध ही है। इस प्रकार द्वादशवादों के द्वारा प्रस्तुत प्रबन्ध में ध्वनि का खण्डन दिखाया गया है। जबकि इन सभी सिद्धान्तों का निरास करते हुए आचार्य अभिनवगुप्त ने तीन विशिष्ट वादों द्वारा ध्वनिकारके मतको पल्लवित किया है। इस प्रकार प्रस्तुत लेख में ध्वनि–विरोध की दृष्टि से विचार करते हुए ध्वनि की स्थापना की गई है।)*

तार्त्पशक्त्यैव ध्वनिरूपार्थस्याऽबोधः भवतीति मीमांसकाः, येषामभिमते व्यङ्ग्यार्थोऽपि यावत्कार्यप्रसारितत्वादपरिमितार्थबोधकत्वाच्च तात्पर्येणैव बोध्यते। उक्तञ्चावलोके धनिकेन–

'तात्पर्यानतिरेकाच्च व्यञ्जकत्वस्य न ध्वनिः।
किमुक्तं स्यादश्रुतार्थतात्पर्येऽन्योक्तिरूपिणि।।
एतावत्येव विश्रान्तिस्तात्पर्यस्योति किंकृतम्।
यावत्कार्यप्रसारित्वात् तात्पर्यं न तुलाधृतम्।।
पौरुषेयस्य वाक्यस्य विवक्षा परतन्त्रता।
वक्त्रभिप्रेततात्पर्यमतः काव्यस्य युज्यते।।'[1]

योऽप्यन्विताभिधानवादी 'यत्परः शब्दः स शब्दार्थः' इति मनसि निधाय शरवदभिधाव्यापारमेव दीर्घदीर्घं गच्छतीति अभिनवगुप्तपादाः ध्वन्यालोकलोचने[2]। तात्पर्यमिदं यच्छब्दस्य दीर्घदीर्घतरव्यापारवद् दीर्घदीर्घतराभिधाव्यापारेणैव ध्वन्यार्थबोधः भवतीति हेतोः अभिधातिरिक्ता शक्तिरमान्या, व्यञ्जनाऽसङ्गतत्वादिति अन्विताभिधानवादिनः मीमांसकाः। उक्तञ्च काव्यप्रकाशे "ये त्वभिदधति सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाव्यापार इति, यत्परः शब्दः स शब्दार्थ इति"[3]।

लक्षणीयोऽप्यर्थो नानात्वं भजते विशेषव्यपदेशहेतुश्च भवति तदवगमश्च शब्दार्थायत्तः प्रकरणादिसव्यपेक्षश्चेति कोऽयं नूतनः प्रतीयमानो नाम[4]। अभिप्रायोऽयं यत्, तथा उपादानलक्षणया (अजहत्स्वार्थलक्षणया) निम्नाङ्कितेषु स्थलेषु रामशब्दार्थः क्रमशः खरदूषणादिहन्ता, सकलदुःखसहनशीलपात्रविशेषः, निष्करुणश्च भवति, यथा–

'रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परा–
मस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम्।
वन्दीवैष यशांसि गायति मरुद् यस्यैकबाणाहति–
श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः।।'[5]

'स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति ह हा हा देवि धीरा भव।।'[6]

'प्रत्याख्यानरुषा कृतं समुचितं क्रूरेण ते राक्षसा
सोढं तच्च तथा त्वया कुलजनो धत्ते यथोच्चैः शिरः।
व्यर्थं सम्प्रति विभ्रता धनुरिदं त्वद्व्यापदः साक्षिणा।।'[7]

तथैव सर्वत्र हि खलु ध्वन्यार्थबोधः लक्षणयैव भवतीति धिया ध्वनिर्नावश्यकः।

उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम्।
विदधदीदृशमेव सदा सखे सुखितमास्व ततः शरदां शतम्।।[8]

इत्यस्मिन् पद्ये लक्षणलक्षणया (जहत्स्वार्थलक्षणया) या उपकृतादिपदस्याऽपकृताद्यर्थप्रतीतिर्जायते तद्वदेव अन्यत्रापि ध्वन्यार्थः लक्ष्यार्थो हि भवितुमर्हति, नार्हत्येव, प्रत्युत भवत्यपि। लक्ष्यार्थ एव व्यङ्ग्यार्थस्यान्तर्भावात्। अतः किमर्थं लक्षणाव्यतिरिक्ता व्यञ्जनाशक्तिः अपेक्षणीया? मुकुलभट्टस्य शब्दव्यापारप्रतीतावेव मुख्यत्वस्वीकाराद् अर्थसामर्थ्याच्च आक्षिप्तार्थस्य लक्षमाणाङ्गीकारात्। यतो हि 'शब्दव्यापारतो यस्य प्रतीतिस्तस्य मुख्यता। अर्थावसेयस्य पुनः लक्षमाणत्वमुच्यते।।'[9] अर्थात् शब्दव्यापारेण अगम्यमानार्थपर्यालोचनया येषां प्रतीतिर्भवति तेष्वेव लाक्षणिकत्वमिति। उक्तञ्च मुकुलभट्टेन – "यस्य तु शब्दव्यापारावगम्यमानार्थपर्यालोचनयावगतिस्तस्य लाक्षणिकत्वमिति। अस्मादेव कारणात् दूर्वारा मदनेषवो ......." इत्यस्मिन्स्थले उपादानलक्षणयैवा विप्रलम्भो हि शृङ्गारः बोध्यते। यथा चोक्तम् – 'तद्वाक्यार्थपर्यालोचन–सामार्थ्याच्च विप्रलम्भशृङ्गारस्य आक्षेपः इत्युपादानात्मिका लक्षणा वाच्यनिबन्धना ...... विप्रलम्भशृङ्गारस्य चाक्षिप्यमाणस्य वाच्यापेक्षया प्राधान्यम्'[10]। तात्पर्यमिदं यन्नूतनतया सहृदयैरुपवर्णितस्य ध्वनेः लक्षणाव्यापारस्यैवावगाहित्वमिति।

श्रीशङ्कुक–महिमभट्ट–जयन्तभट्टादयस्तु स्वार्थानुमान–परार्थानुमानद्वयेनैव ध्वनेरनुमेयत्वं स्वीकुर्वन्ति। तत्र श्रीशङ्कुकस्याऽनुमितिवादस्त्वन्यतमः सकलेष्वपि व्यञ्जनाविरोधिकवादेष्विति विदन्त्येव विज्ञाः। महिमभट्टानुसारेण त्वनुमाने एवे सर्वेषां ध्वनीनामन्तर्भावः प्रसिद्धः।

व्यक्तिविवेकस्यादावेव गदितं तेन –

**अनुमानेऽन्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितुम्।**
**व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम्।। इति।**

एतन्मते वाक्यार्थेन असम्बद्धार्थप्रतीतिर्न जायते, जायते चेद्यस्य कस्यापि शब्दस्य यः कोप्यर्थः भवितुमर्हति। अतः व्यङ्ग्य–व्यञ्जकभावोऽपि व्याप्तिरूपनियतसम्बन्धस्य स्थितत्वादेव भवेदिति। उक्तञ्च – 'ननु वाच्यादसम्बद्ध तावन्न प्रतीयते, यतः कुतश्चित् यस्य कस्यचिदर्थस्य प्रतीतेः प्रसंगात्, एवञ्च सम्बन्धात्, व्यङ्ग्य–व्यञ्जकभावोऽप्रतिबन्धेऽवश्यं न भवतीति व्याप्तत्वेन नियत–धर्मिनिष्ठत्वेन च त्रिरूपाल्लिङ्गाल्लिङ्गिज्ञानमनुमानं तद्रूपः पर्यवस्यति।'[11] एतादृश्यां स्थितौ तु सपक्षसत्त्व–विपक्षासत्त्व–पक्षसत्त्वरूप–त्रयविशिष्टधूमादिसाधनेन पर्वतादौ बह्न्यादिसाध्यस्यानुमितिः इव रस–वस्तु–अलङ्काररूप त्रिविधव्यङ्ग्यार्थस्याऽनुमितिः, न च ध्वनिरभिव्यक्तिर्वा।

रसस्य यथा – **विपरीतसुरतसमये ब्रह्माणं दृष्ट्वा नाभिकमले।**
**हरेर्दक्षिणनयनं चुम्बति ह्रियाकुला लक्ष्मीः।।**

व्यक्तिविवेकोद्धृतायामत्र गाथायां हरेः सूर्यात्मकस्य दक्षिणनेत्रस्य लक्ष्मीकृत–परिचुम्बनरूपहेतुना सूर्यस्य तिरोधानरूपाऽस्तस्यानुमानम्, तेन च नाभिकमलस्य सङ्कोचः, कमलसङ्कोचेन ब्रह्मणः स्थगनम्, स्थगनेन चाऽप्रतिबन्धनिधुवनविलसितमिति महिमभट्ट–रीत्याऽनुमितिः।

वस्तुनो यथा – **भ्रम धार्मिक विश्रब्धः स शुनकोऽद्य मारितस्तेन।**
**गोदावरीकच्छकुञ्जवासिना दृप्तसिंहेन।।**

गाथायामत्र[12] गृहे शुनकस्य निवृत्त्या गोदातटे विहितभ्रमणे सिंहाऽऽगमनेनाऽभ्रमणरूप–वस्तुनोऽनुमानम्।

**अलङ्काररूपो यथा –**

**लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्, स्मेरेऽधुना तव मुखे तरलायताक्षि।**
**क्षोभं यदेति न मनापि तेन मन्ये सुव्यक्तमेव जलराशिरयं पयोधिः।।**

व्यक्तिविवेके दशरूपकावलोके चोद्धृतेऽस्मिन्पद्ये पयोधिक्षोभेन जडत्वेन वा नायिकायाः वदनारविन्दं चन्द्रतुल्यं, चन्द्र एव वेति। अत्रोपमा–रूपकालङ्कारोवा महिमभट्टानुसारेण त्वनुमित एव।

महिमभट्टमते यत्र वाच्यः वाच्येन वाऽनुमितोर्थः केनापि सम्बन्धेन अर्थान्तरं प्रकाशयति तत्र काव्यानुमितिः – 'वाच्यस्तदनुमितो वा यत्रार्थोऽर्थान्तरं प्रकाशयति। सम्बन्धतः कुतश्चित्सा काव्यानुमितिरित्युक्ता।।'[13] एवं रीत्या परार्थानुमानेन[14] स्वार्थानुमानेन वा, किंवा वीताऽवीत[15] रूपाऽनुमानद्वयेन उपर्युक्तः त्रिविधो व्यङ्ग्यार्थोऽपि अनुमेय एव। न्यायसूत्रव्याख्याकारः जयन्तभट्टोऽपि अनुमाने एव ध्वनेः गतार्थतां स्वीकारोति। एतन्मते यैः कैश्चनाऽऽलङ्कारिकैः 'भ्रम धार्मिक' इत्यादौ विधिमुखेन निषेधरूपस्य निषेधमुखेन वा विधिरूपस्य ज्ञानं ध्वनिनाम्ना अभिहितम्, सोऽर्थस्तु शब्दसामर्थ्यमहिम्ना एव उक्तस्थलेष्ववबुद्ध्यते। अतएवाऽत्र

व्यञ्जनाव्यापारस्य न काप्यावश्यकता। वाक्यार्थस्य गहने मार्गे विद्वानपि विमूढो भवति, तस्मादेवादृशी चर्चा कवीनां मध्ये नोचिता। यथा खलु न्यायमञ्जर्यां –

एतेन शब्दसामर्थ्यमहिम्ना सोऽपि वारितः।
यमन्यः पण्डितंमन्यः प्रपेदे कञ्चनध्वनिम्।।
विधेर्निषेधावगतिर्विधिबुद्धिर्निषेधतः ।
यथा– भम धम्मिअ वीसद्धो मास्य पान्थ गृहं विश।
मानान्तर परिच्छेद्य-वस्तुरूपोपपदेशिनाम्।।
शब्दानामेव सामर्थ्यं तत्र तत्र तथा तथा।
अथवा नेदृशी चर्चा कविभिः सह शोभते।
विद्वांसोऽपि विमुह्यन्ति वाक्यार्थगहनेऽध्वनि।। इति।

अर्थापत्त्येव ध्वनिर्बोध्यः भवतीति मीमांसकाः। तत्र अर्थो हि नाम उपपादकस्याऽऽपत्तिः अर्थात् यस्य कल्पना क्रियते तदेव अर्थापत्तिप्रमाणमिति। यथा 'पीनश्चैत्रो दिवा नात्ति' इत्यत्र दिवायामभुक्तस्य चैत्रस्य पीनत्वस्य भोजनेन विना अनुपपन्नत्वाद्रात्रिभोजनरूपार्थस्य कल्पना। भणितञ्च लोचनकारेण 'इत्यत्राभिधैवापर्यवसितेति सैव स्वार्थनिर्वाहाय अर्थान्तरं शब्दान्तरं वाकर्षतीत्यनुमानस्य श्रुतार्थापत्तेर्वा तार्किकमीमांसकयोर्न ध्वनिप्रसङ्गः'[16]। इयमर्थापत्तिश्च द्विविधा–दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति। यत्र दृष्टार्थापत्तौ दृष्टोपपाद्येन उपपादकस्य कल्पना भवति। उक्तञ्च 'तत्र उपपाद्यज्ञानेन उपपादककल्पनमर्थापपत्तिः। तत्र उपपाद्यज्ञानं करणम्। उपपादकज्ञानं फलम् (अर्थापत्तिप्रभा) येन विना यदनुपपन्नं तत् तत्रोपपाद्यम्। ....तथा च .....यस्याभावे यस्यानुपपत्तिस्तत् तत्रोपपादकम्।'[17] यथा पूर्वोदाहरणे दृष्टपीनत्वरूपोपपाद्येन रात्रिभोजन-रूपोपपादकस्य कल्पना। तत्रैव श्रुतार्थापत्तौ श्रुतोपपाद्येनोपपादकस्य कल्पना, यथा हि 'जीवन् चैत्रो गृहे नास्ति' इत्यस्मिन्नुदाहरणे श्रुतजीवितत्त्वरूप उपपाद्येन बहिस्सत्त्वरूपोपादकस्याऽऽपत्तिः। पुनश्चेयं श्रुतार्थापत्तिरिति द्विविधा–अभिधानानुपपत्तिरूपा अभिहितानुपपत्तिरूपा चेति। 'द्वारम्' पदेन 'पिधेहि' इत्यस्य कल्पना प्रथमाया उदाहरणम्, द्वितीयायाश्च 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति। यत्र क्षणिक-ज्योतिष्टोमयागेन स्वर्गसाधनत्वस्यानुपपत्या मध्यवर्तिनी अपूर्वस्य कल्पना। उक्तञ्चात्र 'स्वर्गसाधनत्वस्य क्षणिकज्योतिष्टोम-यागगततया अवगतस्यानुपपत्या मध्यवर्त्यपूर्वं कल्प्यते'[18]। उपर्युक्तव्याख्यानेन अर्थापत्ति-सम्भवात्। 'पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र च रात्रिभोजनं न लक्ष्यते श्रुतार्थापत्तेरर्थापत्तेर्वा तस्य विषयत्वात्'[19] इति मम्मटप्रतिपादितस्यापि पूर्वोक्तदिशा व्याख्यानं कर्तव्यं, न च श्रुतार्थापत्तौ शब्दृष्ट्या अर्थापत्तावर्थस्य कल्पनारूपव्याख्यानम्। यतो हि मीमांसादर्शने अर्थस्योपपादकस्य वा कल्पना तूभयत्र भवत्येव। उक्तञ्च 'अर्थापत्तिरपि दृष्टः श्रुतो वाऽर्थोऽन्यथा नोपपद्यते इत्यर्थकल्पना'[20]।

अतएव मीमांसकानामभिमते यथा 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र रात्रिभोजनस्य अर्थापत्या बोधो जायते, तथैव 'निःशेषच्युतचन्देन' त्यादौ[21] 'नायकान्तिकगमनरूप' विध्यादिनिः शेषच्युतचन्दनादीनामपुपपत्यैव अर्थापत्तिद्वारा बोधः भवतीती न च ध्वन्यमानविषयः।

केचित्तन्त्रेणैव ध्वन्यमानार्थस्य बोधः भवतीति आमनन्ति। 'तन्त्रं नाम अनेकार्थबोधनेच्छया पदस्यैकस्य सकृदुच्चारणम्' इति। अर्थादनेकेषामर्थानां बोधनेच्छया कस्याप्येकस्य पदस्य सकृदुच्चारणमेव तन्त्रम्भवति। यथा 'श्वेतो धावती' त्यत्र तन्त्रन्यायेन श्वेतः धावति, इतः श्व (श्वानः) धावति – इत्यर्थद्वयं भवति, तथैव ध्वनिस्थलेऽपि तन्त्रमाध्यमेनैव वाच्यार्थ-ध्वन्यर्थयोः बोधः मन्तव्यः। अस्माद्धेतोः वाच्यार्थव्यङ्ग्यार्थयोर्बोधेच्छया तन्त्रद्वारैव प्रयोगं विधाय ध्वन्यर्थबोधकत्वान्न ध्वनिः।

आलङ्कारिका अपि अलङ्कारेष्वेव ध्वन्यर्थस्यान्तर्भावं स्वीकुर्वन्ति। तत्र भामहमतेन समासोक्तावेव प्रतीयमानार्थस्यान्तर्भूतत्वात्कथं ध्वनिः?[22], स चार्थस्तु आक्षेपालङ्कारेऽपि अन्तर्भूतः भवति[23]। गम्यमानोऽप्यर्थः पर्यायोक्तौ[24], प्रतीयमानसाम्यञ्चापह्नुतावेव[25] अन्तर्भूतं भवतः। दण्डिनापि व्यञ्जितार्थमुदात्तालङ्कारे[26] प्रतीयमानसादृश्यमुपमा[27] व्यतिरेकयोः[28] स्वीकृतम्। अथ चोद्भट्टेन पर्यायोक्त[29]अलङ्कार एव गम्यमानार्थस्यान्तर्भावः स्वीकृतः। प्रतीयमानमर्थं विभावनालङ्कारे[30] अन्तर्हितं स्वीकृत्य रुद्रटेन यदुदाहरणं प्रस्तुतं तदेव ध्वनिवादिनां व्यङ्ग्यस्योदाहरणं भवतीति धिया कथं ध्वनिः काव्यस्यात्मा भवितुमर्हति ? अपि चोपमेयस्य गम्यमानता रुद्रटाचार्येण समासोक्तावेव स्वीकृता। एवं प्रकारेण भामह-दण्डि-उद्भट-रुद्रटादयस्तु आनन्दवर्धनस्य प्रतीयमानार्थं वाच्योपस्कारकमङ्गीकृत्य अलङ्कारपक्ष एव निक्षिपन्ति। उक्तञ्चाऽलङ्कारसर्वस्वे – 'इह हि तावत् भामहोद्भटप्रभृतयः......मन्यन्ते। तथाहि – पर्यायोक्ताप्रस्तुतप्रशंसासमासोक्त्याक्षेप-व्याजस्तुत्युपमेयोपमानानन्वयादौ वस्तुमात्रं गम्यमानं वाच्योपस्कारकत्वेन..... प्रतिपादितं तैः। रुद्रटेनापि भावालङ्कारो द्विधैवोक्तः। रूपकदीपकापह्नुतितुल्ययोगितादावुपमालङ्कारो वाच्योपस्कारित्वेनोक्तः। रसवत्-प्रेय-ऊर्जस्विप्रभृतौ तु रसभावादिर्वाच्यशोभाहेतुत्वेनोक्तः। उत्प्रेक्षा तु स्वयमेव प्रतीयमाना कथिता। तदित्थं त्रिविधमपि प्रतीयमानमलङ्कारतया प्रख्यापितमेव।' लघुवृतावपि गदितं विद्यते – 'यत्र खलु वाच्यविवक्षापूर्वकत्वेनार्थान्तरं प्रतीयते चक्राभिधातेत्योदौ उदाहरणचतुष्टये तत्र पर्यायोक्तभेदता.....। यत्र तु अविवक्षिते वाच्येऽर्थान्तरस्य प्रतीतिस्तत्रा-प्रस्तुतप्रशंसा। अतश्च पर्यायोक्ताप्रस्तुतप्रशंसयोरेव यथाक्रमं विविक्षिताविवक्षितवाच्ययोः सर्वध्वनिभेदसामान्यभूतयोर्ध्वनिभेदयोरन्तर्गतिर्वाच्या।'

लोल्लटभट्टस्योत्पत्तिवादे तु रसः कार्यम्, यस्योत्पत्तिर्भवति, उत्पन्नहेतुत्वाच्च नाऽयं ध्वन्यमानः। रसस्य पूर्वस्थिततत्वादेव तस्य ध्वन्यमानता न सिद्ध्यतीति बोध्यम्। विभावादिभिरुत्पद्यमानस्य रसस्य कथमभिव्यज्यमानता भवितुमर्हति ?

रसस्योत्पत्तिमनुमितिमभिव्यक्तिञ्च निरस्य अभिधया वाच्यविभावादीनां भावकत्वेन साधारणीकृतस्वरूपे ज्ञाते सति भोजकत्वव्यापारेण रत्यादीनां भोग इति रसभोगवादी भट्टनायकः। यथा ध्वन्यालोकलोचने[31] अन्वेषप्रबन्धे[32] च – '..... तेन न प्रतीयते नोत्पद्यते नाभिव्यज्यते काव्येन रसः। किन्तु अन्यशब्दवैलक्षण्यं काव्यात्मनः शब्दस्य त्र्यंशताप्रसादात्। तत्राभिधायकत्वं वाच्यविषयम्, भावकत्वं रसादिविषयम्, भोक्तृत्वं सहृदयविषयम् इति। त्रयोंऽशभूता व्यापाराः.....। तच्चैतद्भावकत्वं नाम यत्काव्यस्थतद्विभावादीनां साधारणत्वापादनं नाम भाविते च रसे तस्य भोगः।

व्यापारान्तेण वक्रोक्तिव्यापारेण वा ध्वनेः विरोधः विदित एव, यत्र वक्रोक्तिः ध्वनिमात्मसात्करोति, यस्योल्लेखस्तु भोजस्य शृङ्गारप्रबन्धे विहितोऽस्ति। एतावता द्वादशवादैः ध्वनेः खण्डनं विद्यते। परन्तु अभिनवगुप्तपादसमर्थितेषु त्रिष्वेवमतेषु सर्वेषामेतेषां वादानामन्तर्भाव भवति। उक्तञ्च लोचने – 'तत्र समयापेक्षणेन शब्दोऽर्थप्रतिपादक इति कृत्वा वाच्यव्यतिरिक्तं नास्त्येव व्यङ्ग्यम्। सदपि वा तदभिधाक्षिप्तं शब्दावगतार्थबलाकृष्टत्वाद्भाक्तम्।' तदनाक्षिप्त मपि वा न वक्तुं शक्यम्, कुमारीष्विव भर्तृसुखमतद्वित्सु। अतस्त्रय एवैते प्रधानविप्रतिपत्तिप्रकाराः।[33] अतएवानन्तरकाले विद्याधरेणाऽपि एकावल्यां ध्वनिविरोधि-त्रयाणामेव वादानामुल्लेखः कृतः। जयरथेनापि समर्थितः – 'तदेवं यद्यपि तात्पर्यशक्तिः... द्वादशेत्थं ध्वनेरस्य स्थिता विप्रतिपत्तयः इति रीत्या बहवो विप्रतिपत्तिप्रकाराः सम्भवन्ति, तथापि काव्यस्यात्मा ध्वनिरित्युक्तरीत्या ध्वनेर्विप्रतिपत्तिप्रकारत्रयमिह प्राधान्येन उक्तम्।'[34]

वस्तुतस्तु प्रथमे हि ध्वन्यभाववादिनाम्मते तात्पर्यशक्ति-अभिधा-द्वैविध्यानुमान-तन्त्र-अर्थापत्ति-समासोक्त्यादि अलङ्कार-रसकार्यता-रसभोग-व्यापारान्तरेण वक्रोक्तिव्यापाराणां दशविधानां समावेशः। द्वितीये भक्तिवादिनां मते द्वयोरेव लक्षणाव्यापारयोरन्तर्भावो जायते। तृतीये चानिर्वचनीयतावदे व्यापारान्तरबाधकल्पना क्रियते इति। यथा –

ध्वन्याचार्यनिर्दिष्टेषु ध्वनिविरोधिवादेषु प्रथमोऽभाववादः, सोऽपि त्रिविधः। तत्रादेरभिप्रायोऽयं यच्छब्दगतं सौन्दर्यं शब्दालङ्कार-शब्दगुणयोरेव समागच्छति, तथैवार्थगतसौन्दर्यमपि अर्थालङ्कारऽर्थगुणयोरिति। एवञ्च संघटनागतं यत्सौन्दर्यं तस्यापि वैदर्भीप्रभृतिरीतिषु उपनागारिकादिवृत्तिषु च परिगणना भवति। एतदतिरिच्य न कस्यापि चारुत्व-सम्पादकस्य पदार्थविशेषस्य प्रसिद्धिः। अतोह्यप्रसिद्धस्यास्य ध्वनिपदार्थस्य अभाव एव उक्तञ्च ध्वन्यालोकवृत्तौ[35]– 'तत्र शब्दगताश्चारुत्वहेतवोऽनुप्रासादयः प्रसिद्धा एव। अर्थगताश्चोपमादयः। वर्णसंघटनाधर्माश्च ये माधुर्यादयस्तेऽपि प्रतीयन्ते। तदनतिरिक्तवृत्तयोऽपि याः कैश्चिदुपनागरिकाद्याः प्रकाशिताः, ता अपि गताः श्रवणगोचरम्। रीतयश्च वैदर्भीप्रभृतयः। तद्व्यतिरिक्तः कोऽयं ध्वनिर्नामेति।

अपरस्याऽभाववादस्य तात्पर्यमिदं यत्परम्परा-प्रसिद्ध-प्रस्थानेषु[36] न कुत्रापि ध्वनेरुल्लेखः। तद्भिन्नस्यास्य ध्वन्यात्मकस्य काव्यस्वीकारे सति न तत्र काव्यत्वम्भवितुमर्हति। यतो हि सहृदयहृदयाह्लादोत्पादकौ शब्दार्थावेव काव्यमिति सिद्धम्। अतः परम्परा-प्रसिद्ध-प्रस्थानभिन्नेऽस्मिन् ध्वन्यात्मकेऽध्वरि यदि काव्यत्वमेव नास्ति कथं वा तस्य विचारः कर्त्तव्यः? कल्पनाप्रसूतस्यास्य सिद्धान्तानुसारेण यदि ध्वनौ काव्यत्व-व्यवहारः क्रियते तथापि ध्वन्यात्मकं काव्यं न समेषां विदुषां हृदयङ्गमाभावात्स्वीकर्त्तव्यम्। अतोऽत्र परम्परा-प्रसिद्ध-प्रस्थानभिन्नं न किमपि स्वीकर्त्तव्यमिति। उक्तञ्चापि – 'अन्ये ब्रूयुः नास्त्येव ध्वनिः, प्रसिद्धप्रस्थानव्यतिरेकिणः काव्यप्रकारस्य काव्यत्वहानेः। सहृदयहृदयाह्लादि शब्दार्थमयत्वमेव काव्यलक्षणम्[37]। न चोक्तप्रस्थानातिरेकिणो मार्गस्य तत्सम्भवति। न च तत्समयान्तः पातिनः सहृदयान् कांश्चित् परिकल्प्य तत्प्रसिद्ध्या ध्वनै काव्यव्यपदेशः प्रवर्तितोऽपि सकलविद्वन्मनोग्राहितामवलम्बते।'

तृतीयाऽभाववादिनाम्मतेऽपि कदाचिद्ध्वनिः चारुताया एव कश्चिद्भेदविशेषः रूपविशेषो वा स्वीक्रियते चेत्तदपि चारुत्वसमपादकेष्वेव अलङ्कारेष्वन्तर्भावः भवितुमर्हति। 'कामनीयकमनतिवर्तमानस्य तस्योक्तेष्वेव चारुत्वहेतुष्वन्तर्भावात्। तेषामन्यतमस्यैव वा अपूर्वसमाख्यामात्रकरणे यत्किञ्चन कथनं स्यात्। अथवा वाग्विकल्पनामनन्तप्रभेदेषु एव यस्य कस्यापि नाम ध्वनिरिति दीयते चेत्, यस्य च चर्चा पूर्वाचार्यैर्न कृता, तत्रापि हेतुर्न विद्मः, प्रवादमात्रमेव। उक्तञ्च मनोरथकविना –

**यस्मिन्नस्ति न वस्तु किञ्चन मनः प्रह्लादि सालङ्कृति**
**व्युत्पन्नैः रचितं न चैव वचनैर्वक्रोक्तिशून्यं च यत्।**
**काव्यं तद् ध्वनिना समन्वितमिति प्रीत्या प्रशंसज्जडो**
**नो विद्मोऽभिदधाति किं सुमतिना पृष्टः स्वरूपं ध्वनेः।।**[38]

ध्वनिविरोधिवादेषु आनन्दवर्धनप्रतिपादितेषु द्वितीयोऽस्ति भक्तिवादः, 'भक्तिवादः, 'भक्तेरागतः भाक्तः' अर्थात् भक्त्या समागतोऽर्थः भाक्तः। 'भक्ति' पदेन आलङ्कारिकाणां लक्षणा, मीमांसकानाञ्च गौणीवृत्तीरिति शब्दशक्तिद्वयं गृह्यते। तत्र भक्तिपदे 'मुख्यार्थस्य भङ्गो भक्तिः' इति भङ्गार्थक्व्युत्पत्या लक्षणायाः प्रथमं बीजं मुख्यार्थबाधः बोध्यते। 'भज्यते सेव्यते इति सामीप्यादिसम्बन्धो भक्तिः' इत्यनया सेवनार्थकव्याख्यया लक्षणायाः मुख्यार्थसम्बन्धरूपं द्वितीयं बीजं गृह्यते। तथा च 'शैत्यपावनत्वादौ प्रतिपाद्ये श्रद्धातिशयो भक्तिः' इति श्रद्धातिशयार्थकया व्युत्पत्या तस्याः लक्षणायाः तृतीयं बीजप्रयोजनं सूच्यते। अनया रीत्या लक्षणायाः मुख्यार्थबाधादिबीजत्रयेण याऽर्थप्रतीतिः सैव 'भाक्ति' रीति लोचनकारेण प्रतिपादितम् – 'भज्यते सेव्यते प्राज्ञेन प्रसिद्धतयोद्घोष्यते इति भक्तिर्धर्मः अभिधेयेन सामीप्यादिः। भक्तिः प्रतिपाद्ये सामीप्य-तैक्ष्ण्यादौ श्रद्धातिशयः। तां प्रयोजनत्वेनोद्दिश्य तत आगतो भाक्त इति गौणो लाक्षणिकश्च। मुख्यस्य वार्थस्य भङ्गो भक्तिरित्येवं मुक्ष्यार्थवाधन-निमित्त-प्रयोजनमितित्रयसद्भाव उपचारबीजमित्युक्तं भवति।'39

लक्षणातिरिक्तां यां गौणीवृत्तिं 'गुणसमुदायवृत्तेः शब्दस्य अर्थ-भागस्तैक्ष्ण्यादिः भक्तिः' इति व्युत्यत्तिं विधाय वाक्याचार्यैर्मीमांसकैः स्वीकृता, तस्या अपि भक्तिपदेन ग्रहणं भवति। 'अग्निर्माणविकः' इत्यादिस्थले तैक्ष्ण्यादिगुणविशिष्टस्य व्यक्तिविशेषस्य वाचकः गुण-समुदाय-वृत्तिरूपः 'अग्नि' शब्देन यत्तदर्थभागविशेषस्य तीक्ष्णतादिग्रहणं भवति, तदेव 'भक्तिः', भक्त्या च तया सम्प्राप्तोऽर्थः गौणविशेषः 'भाक्तः' इति – 'तत आगतो गौणोऽर्थो भाक्तः'। तात्पर्यमिदं यद् ध्वन्यमानोऽर्थः न व्यञ्जनावृत्या वा बोध्यः भाक्तः लक्ष्यः गौणो वेति।

यद्यपि आनन्दवर्धनात्प्राक् काव्यलक्षणविधायिभिः ध्वनिशब्दसङ्कीर्त्तनेन गुणवृत्तिरन्यो वा न कोऽपि प्रकारः प्रदर्शितः, तथापि अमुख्यवृत्या काव्येषु व्यवहारं दर्शयिता भामहेन 'शब्दाश्छन्दोऽभिधानार्थाः' इत्यत्र मुख्यव्यापारबोधकेन अभिधानपदेन, उद्भटेन गुणवृत्तिशब्देन, वामनेनन च 'सादृश्याल्लक्षणा वक्रोक्तिः' इति लक्षणापदेन ध्वनिमार्गः मनाक् स्पृष्टः, न च केनापि तस्य लक्षणा कृता। अतस्तेषाम्मते गुणवृत्तिरेव ध्वनिः। यथोक्तं लोचनकारेण – 'भामहोक्तं

शब्दश्छन्दोऽभिधानार्थाः इत्यभिधानस्य शब्दाद्भेदं व्याख्यातुं भट्टोद्भटो बभाषे - शब्दानामभिधानमभिधाव्यापारोमुख्यो गुणवृत्तिश्चेति। तैस्तावद् ध्वनिदिगुन्मीलिता।'

सहृदयाचार्यप्रतिपादिते ध्वनिविरोधिवादत्रये तृतीयाऽनिर्वचनीयतावादानुसारेण ध्वनितत्त्वस्याऽस्तित्वे सत्यपि सहृदयमात्रसंवेद्यत्वात्साऽनिर्वचनीया वाण्या अगोचरा वा। 'न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तः करणेन गृह्यते' इतिरीत्या ध्वनिः संवेदनमात्रविषयः, न हि तस्य लक्षणं कर्तुं शक्यते। अस्मादेव कारणाद्वृत्तौ गदितम् - 'केचित्पुनर्लक्षणकरण-शालिनबुद्धयो ध्वनेस्तत्त्वं गिरामगोचरं सहृदयहृदयसंवेद्यमेव समाख्यातवन्तः।'[40]

मतश्चेदं न प्रथमपक्ष इव भ्रान्तिवशाद् विपर्ययाद्वा ध्वनेः स्पष्टतया निषेधं करोति, न वा द्वितीयवाद इव सन्देहकारणात्तस्यान्तर्भाव एव। प्रत्युत अज्ञानकारणवशादेव ध्वनिलक्षणं न जानाति। अतोऽत्र पूर्वचर्चितवादद्वयापेक्षया तृतीयेऽनिर्वचनीयतावादस्य नैकट्यप्रसङ्गे अभिनवपादैरुक्तम् - 'एते च त्रय उत्तरोत्तरं भव्य-बुद्धयः। प्राच्या हि विपर्यस्ता एव सर्वथा। मध्यमास्तु तद्रूपं जानाना सन्देहेनापह्नुवाना अपि लक्षयितुं न जानत इति क्रमेण विपर्यास-सन्देहाज्ञानप्राधान्यमेतेषाम्।'

एतेषु त्रिषु ध्वनिविरोधिवादेषु प्रथमस्तावदभाववादः तृतीयश्चानिर्वचनीयतावादः लोचनकारानुसारेण आनन्दवर्धनस्य सम्भावित-पक्षौ स्तः। अतस्तेन द्वयोरेव निर्देशः 'जगदुः' 'ऊचु' श्चेत्यनेन परोक्षत्वसूचक-लिट्लकारद्वारा कृतः। भक्तिवादस्तु उद्भटादिभिः सङ्केतितः, अतस्तत्र 'आहु' पदस्य वर्त्तमानकालिक-लट्लकारस्य व्यवहारः विहितः। 'अतो भूतकालोन्मेषात् परोक्षाद् विशिष्टाद्यतनत्व प्रतिभानाभावाच्च लिटा प्रयोगः कृतः - जगदुरिति। ..... अभाववादस्य सम्भावनाप्राणत्वेन भूतत्वमुक्तम्। भक्तिवादस्त्वविच्छिन्नः पुस्तकेषु इत्यभिप्रायेण भाक्तमाहुरिति नित्यप्रवृत्तवर्तमानापेक्षयाभिधानम्।[41] इति शम्।

**सन्दर्भाः-**

1. दशरूपकम्-4/37
2. ध्वन्या. लोचनव्याख्यानम्, 1/4, पृ.62
3. का.प्र., पञ्चमोल्लासः, पृ.230
4. का.प्र. पञ्चमोल्लासः, पृ.249
5. का.प्र. 4/109
6. का.प्र. 4/112
7. ध्वन्या. 3/1 कारिकायां लोचनव्याख्यानम्, पृ.314
8. का.प्र. 4/24
9. अ.वृ.मा.पृ. 3
10. अ.वृ.मा.पृ. 14
11. का.प्र., पञ्चमोल्लासः

12. शालिवाहिनी गाथा- 2/75

13. व्य.वि. 1/25

14. 'त्रिरूपलिङ्गाख्यानं परार्थानुमानम्'- व्य.वि.पृ. 22

15. 'अन्वयमुखेनानुमानम्' इति न्यायवार्तिके, 'अन्वयमुखेन प्रवर्तमानं विधायकं वीतम्' इति सांख्यकारिकास्थ पञ्चमीकारिकायाः वृत्तौ, विविधेन प्रकारेण इतः प्राप्तः वीतः। पक्ष-व्यापकत्वे सति सपक्षव्याप्त्या अव्याप्त्या च तस्मादन्यो हेतुः अन्वयेन अर्थं प्रतिपादयतीति वीतोऽन्वयहेतुः- यु.दी.पृ. 1 तथा चाऽवीतम्- 'व्यतिरेकमुखेनानुमानम्' इतिन्यायवार्तिके, 'व्यतिरेकमुखेन प्रवर्तमानं निषेधकम् अवीतम्' इति सांख्यकारिकागत पञ्चमीकारिकाया वृत्तौ, 'वीताऽवीत-विषाणस्य पक्षता-वन-सेविनः। प्रवादाः सांख्यकरिणः शल्लकी षण्डभङ्गुराः' इति यु.दीत्र.पृ.1

16. ध्व. 2, कारिका 28, लोचन

17. वे.प. अर्थापत्ति परि.पृ. 139

18. का.प्र.द्वि.उ., दशमीकारिकायाः वृत्तौ

20. मी.सू. 1/1/5 वृत्तिः

21. का.प्र.प्र.उ.

22. भामहाल. 2/79

23. भामहाल. 2/68

24. भामहाल. 38

25. भामहाल. 3/21

26. काव्या. 2/303

27. तत्रैव 2/14

28. तत्रैव 2/180,189,195

29. का.सा.सं. 4,6

30. रुद्रटा. 7,38,40

31. ध्वन्या. 2/4

32. द्वितीयोऽध्याये

33. ध्वन्या. लोचन पृ. 5, दरभङ्गासंस्करण्

34. विमर्शिनी, पृ. 4

35. ध्वन्या. 1/1

36. प्रतिष्ठन्ते परम्परया व्यवहरन्ति येन मार्गेण तत्प्रस्थानम्।

37. शब्दार्थशरीरं काव्यम्।

38. ध्वन्या. 1/1वृत्तौ
39. लोचन, पृ. 11, दरभङ्गासंस्करण्
40. ध्वन्या. 1/1
41. लोचनेऽभिनवगुप्तः



# नामार्थविवेचनम्

– डॉ. सुरेश पाण्डेय

*(पद–पदार्थ निरूपण वैयाकरणों का मुख्य उद्देश्य है। इसको निरूपित करते हुए लेखक ने संक्षेप में नामार्थ विषयक व्याकरण शास्त्र सम्मत सिद्धान्तों की चर्चा की है। किन्नाम पदम्? कश्च नामार्थः? कियांश्च सः? इत्यादि का प्रमाण पुरस्सर विवेचन करते हुए "शब्दो नामार्थः" इस निष्कर्ष के साथ प्रबन्ध को उपन्यस्त किया है।)*

**शब्दब्रह्म! नमस्तुभ्यं कार्य–कारणरूपकम्।**
**विवर्तोऽयं तवैवास्ति नामरूपात्मकं जगत्।।**

सर्वविदितमेवैतद् व्याकरणशास्त्रे पदविवेचनं पदार्थविववेचनं चेति शाखाद्वयं प्रचलितम्। उभयोर्मूलं मुनित्रयग्रन्था एव। तत्र काशिकावृत्ति – वैयाकरणसिद्धान्तकौमुदी–प्रभृतिग्रन्था मुख्यतया पदविवेचकाः पदार्थविवेचकास्तु वाक्यपदीयवैयाकरणभूषण – वैयाकरणसिद्धान्तमन्जूषादयः प्रसिद्ध्यन्ति। तत्र धातुः कः, नाम किं, निपातः कः केच तेषां प्रयोगाः कथं ते साधिता भवन्तीत्यादयो विषयाः प्रथमप्रकारे समायान्ति। द्वितीये च धात्वर्थः कः, निपातार्थः कः इत्यादिविषया भवन्ति। तेषु केवलमत्र नामार्थविवेचनं प्रस्तूयते।

नामरूपे व्याकरवाणि' इति श्रुत्या नामपदस्यार्थः सकलशब्दः रूपशब्दस्य च सकलः अर्थो भवति। एतेन नाम्नः विराट्स्वरूपम् अर्थनैयत्यं च प्रकटीभवति। यास्काचार्यानुसारेण नाम्नोऽर्थो भवति सुबन्तं पदम्। तथहि – "चत्वारि पदताजनि–नामाख्यातो चोपसर्गनिपाताश्च"। "भावप्रधानमाख्यातं सत्वप्रधानानि नामानि। तद् यत्रोभे, भावप्रधाने भवतः' इति निरुक्तशास्त्रीयवाक्ये नामाख्यातयोः सहप्रयोगे भावस्य प्राधान्यं कथितम्। प्रयोगश्च सुबन्तस्य तिङन्तस्य चैव भवति, न तु प्रकृतेः। तस्मादत्र नाम सुबन्तम् आख्यातञ्च तिङन्तम्। तथा चाह नागेशभट्टः – "नामशव्देन सुबन्तं नमन्त्याख्तार्थं प्रति विशेषणीभवन्ति इति व्युत्पत्तेः[2] भगवान् पाणिनी नामशब्दस्य अमुमेवार्थं कृतवान्। "द्वयसजऋद्ब्राह्मणार्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक्"[3] इति सूत्रेण तस्य व्याख्यानम्, तत्र भव इत्याद्यर्थे ठक् प्रत्ययो विधीयते। तेन नामसाधको ग्रन्थो नामिकः कथ्यते। यत्र सुबन्तप्रकृतिकस्य ग्रहणमिच्छति, तत्र सर्वत्र प्रातिपदिकेति शब्देनैव निर्देशं करोत्याचार्यः। यथा – ह्रस्वो नपुसंके प्रातिपदिकस्य[4] प्रातिपदिकान्तनुम्विभक्तिषु[5] इति।

वार्तिककारः कात्यायनः प्रातिपदिकार्थे नामशब्दस्य प्रयोगं न करोति – "वा नामधातूनाम्[6]

इति तु सुबन्तान्निष्पन्नो धातुरित्यर्थं कथयति, यतो हि 'सुप आत्मनः क्यच्[7] इतिसूत्रेण सुबन्तादेव क्यजादयः प्रत्यया विधीयन्ते।

महाभाष्यकारः नाम च धातुजमाह निरुक्ते' इत्युक्त्वा यास्काचार्यवचनमेवानूदितवान् किन्तु धातोर्निष्पन्नं प्रथमतः प्रातिपदिकमेव भवति, ततश्च सुबुत्पत्तिरिति यथाकथञ्चिद् भाष्यकारस्य स्वरसः प्रतिभाति यन्नाम प्रातिपदिकमस्ति। भवतु नाम प्राचीनग्रन्थेषु नामाख्यातयोस्तथाविधोऽर्थः, व्याकरणे प्रयोगानुसारं नामशब्दस्य प्रातिपादिकं सुबन्तं चार्थः आख्यातस्य च तिङ्प्रत्ययाः तिङन्ताश्च ते।

वाजसनेयिप्रातिशाख्यकारः नामशब्दं प्रातिपदिकार्थे प्रयुङ्क्ते।[8] सारस्वतव्याकरणे 'अविभक्तिकं नाम'[9] इति सूत्रमस्ति यत् प्रादिपदिकमेवास्ति। "नामन्सीमन्व्योमन्रोमन्लोमन् पाप्मन्"[10] इत्यादिसूत्रेण मनिन् प्रत्यये निष्पन्नो नामशब्दः म्नायते अस्य इति नाम प्रातिपदिकम्। अत्र म्नाधातोर्मनिन्प्रत्यये मकारलोपे तत्सिद्धिर्भवति ऋक्प्रातिशाख्ये नामलक्षणमुक्तम्- 'तन्नाम येनाभिदधाति सत्वम्'[11]। एतत्समर्थनं यास्काचार्यवचनेनापि भवति। "सत्वप्रधानानि नामानि" इति। अर्थात् धातोर्निष्पन्न संज्ञाशब्द धात्वर्थं विशेषणीकृत्य स्वार्थं सत्वं द्रव्यं प्रधानतया प्रकाशयति शब्दशक्तिप्रकाशिकाकारः सर्वं स्पष्टीकरोति-

**निरुक्ता प्रकृतिर्द्वेधा नाम धातुप्रभेदतः।**
**यत् प्रातिपदिकं प्रोक्तं तन्नाम्नो नातिरिच्यते[12]।।**

इत्थं नामान्तर्गतं धात्वतिरिक्ताः सकलशब्दाः समायान्ति। परन्तु निपातार्थस्य पृथङ्निरूपणादत्र नामशब्देन संज्ञाशब्द एव गृहीता भवन्ति नामार्थविषये व्याकरणशास्त्रे पञ्च पक्षाः प्रसिद्ध्यन्ति -

**एकं द्विकं त्रिकं चाथ चतुष्कं पञ्चकं तथा।**
**नामार्थ इति सर्वेऽपि पक्षाः शास्त्रे निरूपिताः[13]।।**

एषां पञ्चानामपि पक्षाणां शास्त्रसम्मतत्वं तावत् प्रस्तूयते -

(1) प्रथमः पक्षः एकमात्रं जातिर्नामार्थः। तदाश्रया व्यक्तिः आक्षेपाल्लभ्यते। जातेरेकत्वात् सकलव्यक्तीनां बोधो भवति। आवश्यकतानुसारं यावद्व्यक्ति ग्रहीतुं शक्यते। व्यक्तीनामानंत्यात् यत्र शक्तिस्वीकारे प्रतिव्यक्ति शब्दोच्चारणमावश्यकं स्यादिति गौरवम्। लिगादिकं प्रत्ययार्थः यत्रापि स्त्रीप्रत्ययं विना स्त्रीत्वप्रतीतिस्तत्रापि विभक्त्यैव तदर्थः स्वीकरणीयः।

जातौ शक्तिस्वीकारे "अणुदित्सवर्णसय चाप्रत्ययः[14] इतिसूत्रस्थं वार्तिकं प्रमाणम्। तथाहि - "सवर्णेऽण्ग्रहणमपरिभाष्यम्, इति हि तत्रत्यं वार्तिकम्। अर्थात् अण्प्रत्याहारे येषां सवर्णग्रहणं तेषां जात्या एव सकलप्रभेदव्यक्तिग्रहणं जायते, तदर्थमत्राण्ग्रहणमनावश्यकमस्ति। उदितां ग्रहणं तु आवश्यकं, यतो हि कत्वजात्या खत्वस्य ग्रहणं न सम्भवति।

अत्र जातिशब्देन प्रवृत्तिनिमित्तं गृह्यते, न तु नित्यानेकसमवेतरूपा, आकाशत्वाभावत्वादिषु अव्याप्त्यापत्तेः। शब्दो येन कारणेन स्वार्थं प्रकाशयितुं प्रवर्तते, तदेव प्रवृत्तिनिमित्तम्। सा हि

जातिर्वा अखण्डोपाधिर्वा भवति। उक्तं हि काव्यप्रकाशे[15] – "नहि गौः स्वरूवेण गौर्नाप्यगौः गोत्वाभिसम्बन्धात्तु गौः" इति।

जातौ शक्तिस्वीकारे सहाश्रयत्वेन सकलव्यक्तिबोधः, व्यक्तौ तु स्वसमवेताश्रयत्वेनेति गौरवं स्पष्टमेव।

अत्र वक्तव्यम् – अस्मिन् पक्षे व्यक्तिबोध आक्षेपात्, लक्षणया वा भवति। किन्तु गौरस्तीतिवाक्याद् गोत्वमस्तीत्यर्थबोधसम्भवान्त लक्षणोचित न वाक्षेषः। किञ्च क्रियाद्यन्वयः व्यक्तावेवेति प्राधान्यं तस्या एवेति कथमाक्षेपलभ्यार्थस्य तथात्वं सम्भवति?

किञ्च व्यवहारे हि व्यक्तावेव नाम्नः अर्थं साधयति। न च नानव्यक्तिबोधाय नानाशब्दप्रयोग आवश्यकः। अत्रापि शक्यतावच्छेदकस्य जातिरूपस्य एकस्य सत्वात्, तदवच्छिन्नसकलव्यक्ती-नामेकशक्त्येव बोधः सम्भवति। अतएव जातिपक्षेऽपि न नानार्थकतापत्तिर्भवति।

न चास्यां स्थितौ वाच्यार्थं, अन्यथासिद्धत्वेन दण्डस्य दण्डत्वमिव अकारणेऽपि घटकारणत्वस्य सिद्धत्वात्। अत्र प्रमाणम् अरुणाधिकरणस्थं श्लोकवार्तिकमेव –

**आनन्त्येऽपि हि भावनानामेक कृत्वोपलक्षणम्।**
**शब्दः सुकरसम्बन्धो न च व्यभिचरिष्यति।।**

अस्मिन् पक्षे एव 'अणुदित्सवर्णस्य चाप्रत्यय'[16] इति पाणिनिसूत्रे अण्ग्रहणं चरितार्थं भवतीति। किन्च जातिपक्षे स्वत एवानेकघटबोधस्थले एकस्यैव घटशब्दस्य प्रयोगे सिद्धे तदर्थम् "सरूपाणामेकशेष एकविभक्तौ"[17] इति सूत्रमनावश्यकं भवति। तच्च व्यक्तिपक्षे एव संगतं भवति। इदं हि व्यक्तिर्नामार्थ इत्यत्र प्रमाणमस्ति।

अत्र वक्तव्यम् – अस्मिन् मतेऽपि जातेराक्षेपो लक्षणा वा करणीया भवतीति गौरवम्। जातौ व्यक्तेराक्षेनो, लक्षणा वा, व्यक्तौ तु व्यक्त्यन्तरस्य लक्षणेति।

(2) द्वितीयः पक्षः द्विकं नामार्थः जातिर्व्यक्तिश्चेति। उभयं समुचितमेव पुष्पवच्छब्दवत्। तथाहि – "उक्तोक्त्या पुष्पवन्तौ दिवाकर-निशाकरौ" इत्यमरकोशात् तथा प्रतीयते। द्वयोरुपस्थितौ प्राधान्याद् व्यक्तेर्विशेष्यत्वं जातेर्विशेषणत्वम्।

अत्र प्रमाणं महाभाष्यकारवचनमेव। तथाहि –

"नह्यकृतिपदार्थकस्य द्रव्यः न पदार्थः, द्रव्यपदार्थकस्य वा आकृतिर्न पदार्थः। उभयोरुभयं पदार्थः। कस्यचित् किञ्चित् प्रधानभूतं, किञ्चिद् गुणभूतम्। आकृतिपदार्थकस्य आकृतिः प्रधानभूता, द्रव्यं गुणभूतम्। द्रव्यपदार्थकस्य द्रव्यं प्रधानभूतम्, आकृतिर्गुणभूता।।[18] इति।

अयं हि द्विकपक्षः एकमिति पक्षेऽपि सुसाधः। तथा हि 'घट' इत्येतादृशबोधे शक्तिज्ञानत्वेन कारणतालाघवात्। द्विकपक्षे हि घटत्वविशिष्टशक्तिज्ञनत्वेन कारणत्वे गौरवं भवति।

द्विकमित्यत्र भूषणसारकारः स्पष्टीकरोति यत् "बोध्यबोधकसम्बन्ध एव शक्ति। बोधकता शब्दे, बोध्यता च शब्दार्थनिष्ठा। तथा च द्वावपि वृत्याश्रयौ" इति।[19]

अयमेव पक्षः "प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रं प्रथमा"[20] इत्यत्र प्रातिपदिकार्थपदेन गृह्यते। तथा च सिद्धान्तकौमुद्यां "नियमोपस्थितिकः प्रातिपदिकार्थः[21] इत्युक्तम्। प्रातिपदिके

उच्चारिते नियतरूपेण जातिव्यक्त्योरेवोपस्थितिर्भवति। तात्पर्यमिदं यद् वागादिशब्देषु लिङ्गस्यापि व्यक्तित्वेनैवोपस्थितिर्भवति। अत एवानियतलिङ्गस्थले प्रातिपदिकार्थापेक्षया लिङ्गाधिक्ये प्रथमेत्येतदर्थे सूत्रे लिङ्गग्रहणं चरितार्थं भवति।

नागृहीतविशेषणा बुद्धिर्विशेष्य उपजायते' इति न्यायो हि विशेषणविशिष्टविशेष्यबोधं समर्थयन् जातिविशिष्टव्यक्तौ शक्तिं बोधयति। बोद्धुरनुभवोऽप्येवमेवेति।

(3) तृतीयः पक्षः - त्रिकं नामार्थ इत्यस्य जातिव्यक्तिलिङ्गानि इत्यर्थं लिङ्गस्य नामार्थत्वे मानं हि "ह्रस्वो नपुंसके प्रातिपदिकस्य"[22] इति पाणिनिसूत्रमेवत्र नपुंसकार्थे प्रातिपदिकस्य ह्रस्वो भवति इत्यर्थात्। तेन नपुंसकार्थः प्रातिपदिकस्येति सिद्ध्यति।

दधि इत्यत्र विनापि प्रत्ययं लिङ्गबोधेनैव इदमिति व्यवहारः सिद्ध्यति। स्त्रीप्रत्ययास्तु द्योतका एव, न तु वाचकाः। यद्यपि वैयाकरणैर्लुप्तप्रत्ययस्थले तत्स्मरणं सम्भवति, किन्तु प्रत्ययमजानतोऽपि तथा बोधसम्भावान्न लिङ्गत्र प्रत्ययार्थ इति सिद्यति।

सांख्यप्रसिद्धसत्वादिगुणानां कस्याप्युपचयविवक्षायां पुंसत्वम्, अपचये स्त्रीत्वं, समपरिणामे च नपुंसकत्वमिति वैयाकरणसिद्धान्तः। अत एव प्रतिवस्तु पदार्थः व्यक्तिः वस्तु इत्येवं व्यवहारो भवति। सत्वादिगुणानां क्षणपरिणामित्वेन तन्निर्णयो न सम्भवतीति लिङ्गज्ञानोपायो व्याकरण-कोष-लोकव्यवहारा एवेति। तच्च लिङ्गमत्र शास्त्रीयं गृह्यते, सति सम्भवे लौकिक-विशिष्टं शास्त्रीयमिति निष्कर्षः।

"द्वयेकयोर्द्विवचनैकवचने"[23] इतिसूत्रस्य नियमार्थकतायां भाष्यमेव। तत्र हि उक्तं यत् - एकवचनमुत्सर्गतः करिष्यते, द्वि बहुत्वस्थले द्विवचन-बहुवचने एवेति। नहि संख्याया नामार्थत्वाभावाद् द्वित्वे बहुत्वे चैकवचनप्राप्तिः संगच्छते। तस्मात् संख्यापि नामार्थः, प्रत्ययस्तस्य द्योतकः। अत एव दधि मधु इत्यत्र लुप्तप्रत्ययमजानतोऽपि संख्यावगम्यते। अतएव "आदिर्ञिटुडवः,[24] इत्यत्र बहुत्वे एकवचनं प्रयुक्तमस्ति।

अत्रार्थे भर्तुहरिरप्याह - द्योतिका वाचिका वा स्यु द्वित्वादीनां इति। संख्याया नामार्थत्वे एव विभक्तीनां द्योतकता संगच्छते।

(5) पञ्चमः पक्ष - कारकमपि नामार्थः। अत्र प्रमाणं "कर्मणि द्वितीया"[25] इत्यादि पाणिनिसूत्रमेव। अत्र महाभाष्यकारेण अस्य सूत्रस्य नियमार्थकता प्रतिपादिता। अर्थात् प्रादिपदिकादेव सकलकारकोपस्थितौ कर्मद्योतनायोपस्थिता द्वितीया कर्मणि द्वितीयैवेति नियमं करोति। न च प्रत्ययस्यैवार्थं कारकमिति मन्तव्यम्, लुप्तप्रत्ययस्थले 'वारि मधु' इत्यादौ प्रत्ययज्ञानशून्यस्यापि कारकार्थप्रतीतिदर्शनात्। अत एव हरिणा प्रत्ययानां द्योतकत्ववाचकत्वपक्षौ प्रदर्शितौ।

(6) षष्ठः पक्षः - एतत्पञ्चकातिरिक्तः शब्दोऽपि नामार्थः। 'विष्णुमुच्चारय' इतिवाक्यार्थे विष्णुशब्दस्यैवोच्चारणसम्भवात् न व्यक्तिरर्थो सम्भवति। न चात्र लक्षणयैवान्वयसम्भवे कथं तत्र पृथक् शक्तिरिति वाच्यम्, विष्णुपदस्य विष्णुशब्दे लाक्षणिकत्वेऽपि प्रयोजनप्रतिपादनाभावादियं लक्षणा निरूढा। सा हि शक्त्यपरपर्यायैवेति कथं न शक्तिरेवास्थेया? किञ्च 'जबगडदशमुच्चारय' इत्यत्र लक्षणा सम्भवत्वेव, नहि, शक्त्यभावात्, लक्षणायाश्च शक्त्याश्रितत्वात्।

अपरञ्च अनुकार्यानुकरणोयोर्भेदविवक्षायां शब्दस्य नामार्थत्वं सिद्धयति। अनुकरणत्वञ्च स्वसदृशशब्दमात्रबोधतात्पर्यकोच्चारणत्वम्। स्वसदृशशब्दप्रतिपाद्यत्वे सति शब्दत्वम् अनुकार्यत्वम। अभेदविवक्षायां 'गवित्ययमाह' 'भू सत्तायाम्' इत्यादौ यथोच्चारितं तथानुकृतमित्यर्थवत्वाभावात् न प्रातिपदिकत्वं, न वा विभक्त्युत्पतिः, प्राप्त्यभावात्। कस्यापि विधेः प्राप्त्याभावात स्वतः साधुता।

भेदपक्षे तु विषयतया अर्थानुपस्थितावपि स्वरूपोऽवभासते। तेनेवात्र वृत्तिमत्वम्। निरूपकता-विषयतान्यतरसम्बन्धेन वृत्तिमान् शाब्दबोधे भासते। अर्थों यथा निरूपकतासम्बन्धे वृत्तिमान् तथैव आश्रयतासम्बन्धेन शब्दोऽपि वृत्तिमान्। यदि शब्दो न नामार्थः स्यात् तदा 'अधिपरी अनर्थकौ'[26] इति सूत्रे अधिपरीत्यव्ययशब्दाद्विभक्तिश्रवणं न संगच्छेत। अत्र अनुकरणत्वेन शब्दस्वरूपमात्रमर्थमादाय तथाविधः प्रयोगोऽस्ति। स च शब्दस्य नामार्थत्वे एव संगच्छते।

अनुकार्यानुकरणयोरभेदपक्षे 'भू सत्तायाम्' इति निर्देश एव प्रमाणम्। भेदपक्षे च 'भुवो वुग् लुङ्लिटोः' इति सूत्रमेव प्रमाणम्।

शब्दो हि प्रदीपवद् वस्तुप्रकाशनेन सहेव स्वरूपमपि। अतस्तस्य अर्थप्रकाशकतया सहैव स्वप्रकाशकताप्यस्तीति सिद्धं शब्दस्य नामार्थकत्वम्। तथा चाह भर्तृहरिः -

**ग्राह्यत्वं ग्राहकत्वं च द्वे शक्तितेजसो यथा।**
**तथैव सर्वशब्दानामेते पृथगवस्थिले[27]।।** इति

इत्थं शब्दो नामार्थ इति षष्ठः पक्षो व्यस्थितो भवति। अयं चार्थः द्विकं प्रातिपदिकार्थ इति पक्षे समायाति। यतो हि शब्दस्यात्र अर्थः शब्द एवेति।

नामार्थयोरभेद एव सम्बन्धः। स च तादात्म्यस्वरूपः। तादात्म्यं च भिन्नत्वेऽप्यभेदस्वरूपत्वम्। तत्रापि अर्थो हि न वास्तविकोऽपितु बुद्धिपरिकल्पितः। अतएव तादात्म्यस्य अभेदेऽपि न मधुशब्दोच्चारणे माधुर्यरसास्वादापत्तिभवितुमर्हतीति।

**सन्दर्भाः -**

1. निरूक्तम्- 1.1.1
2. महाभाष्यप्रदीपोद्योतः, पस्पशाह्निके।
3. अष्टाध्यायी- 4.3.72
4. अष्टाध्यायी- 1.2.47
5. अष्टाध्यायी- 8.4.11
6. महाभाष्य- 6.1.9
7. अष्टाध्यायी- 3.1.8
8. शु.य.प्रा. 1.39
9. सारस्वतव्या. अजन्ते सू. 6
10. उणादिःसू. - 490

11. ऋक्प्राति. 12.18
12. शब्द शक्तिप्र.– नामप्रकरणम्।
13. वैयाकरणभूषण – नामर्थः।
14. महाभष्यम्– 1.1.69
15. का.प्र.– द्वितीयोल्लासे।
16. अष्टाध्यायी– 1.169
17. अष्टाध्यायी–1.2.64
18. महाभाष्यम्– सरूपसूत्रस्थम्– 1.2.64
19. वैत्र भूषणसारः शाक्ड्री– नामर्थः
20. अ.आ. 2.3.46
21. वै. सि0को.– कारकम्।
22. अष्टाध्यायी– 1.2.47
23. अष्टाध्यायी– 1.4.22
24. अष्टाध्यायी– 1.3.5
25. अष्टाध्यायी– 2.3.2
26. अष्टाध्यायी– 1.4.93
27. वाक्यपदीयम्– श्लोक 55 पृष्ठ. 70 चौखम्मा संस्कृत संस्थान वाराणसी



# विद्युद्द्रावना

-श्रीलालविहारिमिश्रः

चकितकृद् रे क्रान्तिकारी यद्यहं विद्युदभविष्यम्।

संसृतेरप्यणुकणेषू -
द्बुध्य शिथिलेषु स्थिरेषु
तीव्रतरविक्षोभनिवहै -
रद्धुतां क्रान्तिमकरिष्यम्।
निजकपिलसङ्केतजातैः
क्षुभितझञ्झावातघातैः;
वर्द्धमालाऽऽलसविटपिनो
मूलमहमुदमूलयिष्यम्।
विघ्नभूधरिरुद्धतश्चेत् ,
गुरुमदान्मां रोद्धुमिच्छेत्।
आत्मनादस्फूर्जितोऽहं
खण्डशस्तमचूर्णयिष्यम्।
व्यर्थमभ्रंलीयमानं ,
क्षीणवार्णीं शोषितानां
व्यस्य भूमे-रा-शिरायाः
शोषकानुदशोयिष्यम् ।

# भवभूतेराह्वानम्

अवतर त्वरयाऽविभवभूतेऽद्य करुणोच्छवास उदगात्।।
संसृतेः परिवर्त्य कटुशृङ्गारवातावरणमभितः,
त्वं युगान्तरमरमनैषी रेऽसमेऽपि युगेऽप्रविहतः
तीव्र-करुणकथानकामिलनात् तदानीमपि तडिद्वत्
त्वदुर 'उत्तररामचरिती' भूय जगति प्रादुरभवत्।

अद्य सामग्र्यः समग्रा अस्य प्रसृताः सन्मुखे ते
पश्य, कृषिक-कुटीरुदनतः संसृतेरितिहास उदगात्।
शिशिरयामिन्यामिमे कङ्कालशेषाः श्रमिकशिशवः,
बाहुपाशेऽन्योन्यमाश्लिष्यन्ति शीतं निरसिसिषवः।
रेऽन्तरितमालिङ्गनेऽप्येषां महद्विपदो रहस्यम्,
पतति रन्ध्रादिदमवेक्ष्येन्दुः शुचं न्वसहन्नुरस्वम्।।
दुःखदहनोष्णीकृतोच्छ्वसिताज्जनन्युष्णयति चैतान्,
शीतयोगात् पश्य हिममिदमेव भूत्वा घास उदगात्।।
बालविधवानां हृदिशया मूकशोकाः शून्यवर्त्मनि।
वारिदावलिमेत्य विसृताः सन्ति पीत्वा चापपणिणि?
उत्सरति शिशुभर्तृकानामुष्णमुच्छ्वसितं परं यत्,
तस्य संस्पर्शात् कथं रोत्स्यन्ति लोचनसलितमेतत् ?
तदतियातात्पश्य - आशातन्तुमात्रातत्तनूनाम्,
कर्षकानां जीवनायितसस्यकानां नाश उदगात्।।

## उन्मादगीतम्

शान्तसमीरादुग्रक्रान्ते -
रुत्क्रमते कथमर्चींषि?
कस्योच्छ्रवासात्प्रस्खलन्ति रे
निजकक्षातो ज्योतींषि?
लध्वीष्वणु - कणिकास्वपि
जागर्त्यद्य कथं विद्युत्स्फुरणम् ?
अग्रेर्गानमगीयत रे कथ-
मुदगाद्ध्वंसकमनुरणनम् ?
किं कथयस्यस्त्येष देशवलि -
दानोन्मादोदाहरणम् ।
अग्निर्वात्या, झञ्झावातः
सन्त्यस्यैवाप्युपकरणम् ?
मा रोदीः मातः पश्योपरि,
अपनयामि तेऽस्त्रं शून्ये।
तद्भ्रूभङ्गात् प्रतिफलति त्वत्-
सितभविष्यतो रेखाऽये?
अमरकुमारीकरमुक्तैः कुसुमै
श्छुरितं तस्योच्छ्वसितम्।
कर्णेऽपस्किरतेशृणु मात-
स्त्वत्स्वातन्त्र्यं। नान्तरितम्।।

# मेघालोके

अद्य रे कादम्बिनी कर-
शोषितान् सन्त्रातुमागात्
नदति पञ्जरबद्धसिंह -
स्तदनुमतये सिन्धुनादात्,

उष्णमुच्छ्वासं विमुच्यो
त्पीडनाऽऽख्याता धरण्या,
जीवनं रे मिलितमुद्धत-
जीवनायाः शैवलिन्याः।।

कृषिकवनितायाः कृशाया
आशया वदनं विकसितम्,
तन्नु बीजं वप्स्यतीयं
यत्क्षुधं न्ववहेल्य प्रचितम्;

रहसि खेलिष्यन्ति मरुता
सह यदैते शस्यशिशवः,
जागरिष्यति जीवनेऽस्या
नोत्सवो किं तर्ह्यपि शवः?

कृषति कृषकृषिकीमहा
मुदमुद्वहन् निजनिजहलं।,
दुःखिनामाशादयोऽप्या -
मोद बहुतायायलं रे;

एष एव घनो निराशभूय
किन्तूदेष्यतीति ,
क्वायमवगच्छति यदाप्स्यति
केवलं लघुपान्थवृत्तीः।

दीप्तदीपे जुह्वती आत्मान-
मेताः शलभमालाः,
वीक्ष्य चर्चाक्लान्तवदना -
प्रमुदिताऽभूद्दीनबाला ;

परिणयस्यासीत् समस्याऽऽ-
प्तं समाधानं तदीयम् ,
अद्य निजचितया पितु -
श्चिन्ताचितिं शमपिष्यतीयम्।

अयि बुभूक्षान्तरितसौन्दर्ये-
ऽपि मूकक्रन्दनन्ते,
क्रान्ति कृत्तडिदावलीभूया-
विरेष्यत्यरमनन्ते ;

प्रस्फुटिष्यति चाणुषूग्रतया-
पनेतुं रूढिवादान् ,
रे युगान्तरमीरयिष्यति
शोषकान् कर्त्तुं कणादान्।

क्लेषप्रतिभट! रे श्रमिक!
तस्या न सह वलिदानमेतत्,
अश्रुभिर्मन्युं शमय नहि
कुरु प्रतीकारं न चान्यत्,

क्रान्ति-कुक्षावेव मन्यस्वा-
न्तरित मयि शान्तिबीजम्,
शान्तिदूत! स्वर्गिकं सुख
मिदमतो भवितावनीजम्।

क्रान्तिप्रकरं ते शिरासु
स्फारोयितुमयमम्बुवाहः ,
अन्तरिक्षादागतो भूत्वा
प्रबल - वारि - प्रवाहः,

एत्य तेऽथकुटीं विविध-
दैन्यञ्च दत्त्वोत्तेजयति रे;
नवयुगस्य त्वत्समीपे
नूतनाध्यायं नयति रे!!

सहनप्रवण! त्वं घनंस्या
देशितानीमानि पालय,
घर्षणान्निःसरतिसरला -
द्भ्योऽपि तडिदालीतिदर्शय।

नबयुगाध्वानाद्विश्रृङ्खल
विभव - बैषम्यं समापय,
शीर्ण - पर्णे पुनरगेऽस्मिन्
मधुरमयमधुमाससमानय ।

## तात्त्विकी

सावधानं कर्तुमधुनाऽवातरन् रेऽमरकुमाराः।

(1)

अङ्कितााऽऽस्ते भूमि - भागे
भूमि - भौतिक - भाव - भूतिः,
तोलयितुमव्यक्तमीहत
अद्य रे पीनानुभूतिः,

'मानवानां शासिताऽसौ
स्वयमिदानीं शासितोऽस्ति'

इति प्रवृत्तिं व्योमयानात्
किरति रे जडवाददूती।

अववनि - दिवो, वाष्पत-
स्तडिताऽग्निवातौ दास्यमगमन्;

नास्तिकीं तनुते घनालीं
यन्त्र - गेहिक - धूम्रधारा;
सावधानं कर्तुमधुनाऽ-
वातरन् रेऽमरकुमाराः

(2)

मृत्युरेत्य विलासिताया
अन्तराले सा स्वपीति,
स्फुरति विसृताऽऽकाशवाण्यां
विश्वनाशस्याग्रगीतिः ;

नवनवास्त्राऽऽविष्कृतेस्तै -
र्वितथ - दयितैश्चाकचिक्यैः

अद्य पुनरुज्जीविताऽऽस्ते
रक्तरागस्योग्ररीतिः ।

वञ्चयित्वोषसमारुणिमा
मां प्रतीचीजाऽऽह्वयति रे!

सभ्यता - व्याजादुद्यतेऽ-
सभ्यतायाः सान्ध्यतारा;
सावधानं कर्तुमधुनाऽ-
वातरन् रेऽमरकुमाराः।

(3)

पान्थ आसीत् ; सोऽनुसन्धानेऽ
चलदनारत - सुखानाम् ,
पृष्ठ-सित-पाथेयमादायाऽऽ-
पदान्दैनन्दिनानाम् ;
कामिनीमादाय कामो वागुरा व्यकिरत् तदानीम् ,
सुख-धियाऽसौ भ्रान्तपथिकोऽ-
न्वन्तरैत् क्लेशोत्कराणाम् ,
तद्वदेव विलीय सम्प्रति
क्षयि-सुखानामन्तराले,
हन्त! मानवतां विलुनते
मायि-दानवतेद्धसाराः;

सावधानं कर्तुमधुनाऽ-
वातरन् रेऽमरकुमाराः।

(4)

अमर - मीरावल्लकी - रुति-
रद्य नासून् मादयित्री,
तु नु चलच्छाया गृहच्छाया
युवौत्क्यानां सवित्री;

क्लेशमूलोन्मूलनाय कैषि?
तेऽनन्तर्मुखित्वात्

किन्न जानासि त्वदन्त -
र्लीनमन एतद्धरित्री?

काम - मद - मात्सर्य - मोह-
क्रोध - लोभानां पृथक्त्वात् -

नास्ति सत्ता, किन्तु तेऽ-
स्यैव प्रतिच्छायां - प्रसाराः,

सावधानं कर्तुमधुनाऽ-
वातरन् रेऽमरकुमाराः!

(5)

दर्पण - प्रतिफलित - निज-
प्रतिबिम्बमनवाप्य प्ररुदतः
किं शिशोर्न हि बालिशत्वं
सिद्ध्यति प्रवयोऽनुभवतः?

सत्यमिति चेदद्य माया -
कृतबहिर्वृत्तिप्रचाराः

मानवा नो वञ्चिता किमु
पोषकास्ते स्थूलजगतः?

त्वत्सुखं दृश्येस्त्यतोन्त -
र्वृत्तिरयि भव चिरयियासित

पश्य, वहति त्वय्यपाराऽऽ -
नन्द - पारावार - धारा;
सावधानं कर्तुमधुनाऽ-
वातरन् रेऽमरकुमाराः।



# गोव्यक्तिर्वदतोऽब्रवीत्

– प्रो. रामकुमार शर्मा

''गौर्बाहीक'' इतीहत्यां लक्षणां गोपदे स्थिताम्।
गोस्थजाड्यादियोगेन गोव्यक्तिर्वदतोऽब्रवीत्।।1।।

अघ्न्यां यां निगदत्याद्या पावनीं याजुषी श्रुतिः।
नाम्नि यस्या गमिर्डोसा वक्ति ज्ञानं गतिं च मे।।2।।

प्राज्ञम्मन्याः कथं तस्यां पश्यन्तो जडतां मयि।
''गौर्बाहीक'' इति ब्रूथ कैषा वो रूढिवादिता।।3।।

वाच्यायां मयि नो जाड्यं गौर्गौणं तत् कथं पदम्।
वाहीके तत् कथं मूढाः सादृश्यं मम विद्यताम्।।4।।

''गौर्बाहीक'' इतीहास्ते यदा वो लक्षणाग्रहः।
तदा वाहीकशब्दोऽस्तु लक्षणायाः समाश्रयः।।5।।

''बाहीको गौ'' रिति स्पष्टं वदन्तस्तोषमाप्नुथ।
गोपदे लक्षणेत्येवं त्यज्यतां स्वो दुराग्रहः।।6।।

बाहीके वास्तवं जाड्यं मय्यारोप्यं बुधोत्तमाः।
चेतनां मां जडां कस्माद्धत्यया कुरुथाऽधुना।।7।।

सर्वे मयि स्थिता देवाः श्रीवासो मम गोमये।
वैतरण्यां गतिर्यस्याः प्रसादात् सा जडा कथम्।।8।।

कृतं त्रेता कलिर्वाऽस्तु द्वापरो वा प्रवर्तताम्।
चतुर्युगे मे साम्राज्यं मां विना किं युगं युगम्।।9।।

अपुत्राः पुत्रिणो जाताः पयसो मम सेवनात्।
के के न स्वः समारूढाः पात्रे सविधि मेऽर्पणात्।।10।।

पूज्ये सम्यक् प्रदीयेऽहं पूर्वं हन्ये कलौ त्वहम्।
विना मां शोभते नाद्य राजनीतिर्यथा स्पशम्।।11।।

कश्चिन्मामापणे हन्ति हत्यां कश्चित्तु निन्दति।
हेतुर्लोकमतप्राप्तिस्तत्र राजत्वसाधिका।।12।।

''हन्तव्याऽहमि''ति स्वीयं मतं साधयितुं बलात्।
वेदशास्त्रपुराणानि कश्चिदन्विष्यति क्षणात्।।13।।

''रक्ष्या पूज्याऽहमि'' त्येवं मतं साधयितुं चिरम्।
कश्चिन्निजानुसंधाननैपुण्यव्यञ्जने रतः।।14।।

संगोष्ठ्यो मां समाश्रित्य नाना शिक्षालयेऽधुना।
आयोज्यन्ते च पूर्यन्ते पत्राण्यद्य न कैश्चन?।।15।।

पठन्तः शोधपत्राणि तारं मद्विषयाण्यलम्।
नाऽऽप्तप्रमाणपत्राः के कामयन्ते पदोन्नतिम्।।16।।

अस्थि चर्म पयो मांसं पूज्यत्वं प्रतिरोम मे।
अक्रियं कुरुते नाद्य सक्रियं कं जनं द्रुतम् ?।17।।

नर्त्यन्ते निखिला लोका यया चेतनया मया।
तस्यां वो जडताबुद्धिः प्रभायां ध्वान्तदर्शनम्।
दैन्यं निराश्रयत्वं मे शोषितत्वं बलात्कृतिम्।
यदीक्षध्वेऽद्य ''गौः स्त्री''ति तदोदाह्रियतां मुदा।।18।।

दैन्यादयो यदेष्टा वो बाहीके मां गतास्तदा।
''गौर्बाहीक'' इति ब्रूथ गौण्या वृत्तेरुदाहृतिम्।।19।।

माताऽहं सर्वलोकानां मां प्रशंसत निन्दत।
रक्षयाऽत्थाऽथवा यूयं सर्वथा शिवमस्तु वः।।20।।



- Those teachers who are inclined in improving the quality of teaching, raising standards and gaining better standing in further education could explore, model and experiment with new approaches of lesson planning and preparation with the help of interface. The primary and secondary points of a lesson could be prioritized.
- One could easily develop similar domain specific interface or even create virtual courses by adopting the methodology.

Hence teachers and students can build on their own past learning and on each others' ideas with teachers taking the role of guides and facilitators of learning and not just as instructors.

## Conclusion

New developments in teaching and learning technology could open up new vistas in effective and efficient teaching and learning environment. With the help of available tools, a better approach for developing curriculum for teaching could be developed. Additionally, one could improvise or even customize the interface by adding additional information.

**प्रो. हरिदत्त शर्मा**
**पूर्व-अध्यक्षः**
संस्कृत-पालि-प्राकृत एवं
प्राच्यभाषाविभागः
राष्ट्रपति-सम्मानितः



**इलाहाबाद-विश्वविद्यालयः**
**इलाहाबाद - 211002**
ई-मेल -
hari_sanskrit@rediffmail.com
मोबाइल नं. 9839167212

---

## ग्रन्थ-समीक्षा

## श्रीशिवमहिम्नःस्तोत्रम्-'रहस्यप्रकाश'-व्याख्यया समलङ्कृतम्

**सम्पादकः** डॉ. रामकिशोरःझा

**प्रकाशकः** राष्ट्रिय-संस्कृत-संस्थानम्, गङ्गानाथझा-परिसरः, प्रयागराजः, २०१८ ई.

भारतीयपरिवेशे भक्ति-भावना-भावितं, भक्त-जनहृदयेषु पीयूषरससेचकं, समाराध्यं भगवन्तं प्रति स्वात्मसमर्पण-शरणागतिभावभरितं विद्यते **संस्कृतस्तोत्रसाहित्यम्**। तेषु शिखरायमाणं वर्तते गन्धर्वराज-पुष्पदन्त-मुखपङ्कज विनिर्गतं **श्रीशिवमहिम्नःस्तोत्रम्**। अस्य शिवस्तुति-परस्य स्तोत्रस्य विष्णुपरकव्याख्यानं परमविस्मयकरम्। इदं विस्मयजनकं कार्यं कृतं **मैथिलकविना श्रीजगदीशतर्कपञ्चाननभट्टाचार्येण**, येनास्य स्तोत्रस्य **'रहस्यप्रकाश'**-समाख्यायां व्याख्यायां **'हरि-हर-सूर्येति'** त्रिपक्षीयोऽर्थः कृतः। अहो! धन्यास्ते टीकाकारा ये स्वकीयैश्चमत्कारिभिः पद-पदार्थज्ञानैर्व्याख्यानैश्च **हरि-हरयोर्मध्ये** भेदं निराकुर्वन्ति। एतादृशस्यैव कार्यस्य **श्रीगीतगोविन्दमहाकाव्यस्य मैथिल-महाकविकृष्णदत्त-विरचितस्य**, हरि-हरोभयनिष्ठ-'गङ्गा' 'शशिलेखा'-व्याख्याद्वयस्य प्रथमं सम्पादनं प्रकाशनं कृतवान् कृती **रामकिशोरझा-महाभागः**। राष्ट्रिय-संस्कृत-संस्थानस्य गङ्गानाथझापरिसरे पाण्डुलिपि-प्रभागे सन्नियुक्तो बुधवर्योऽयं तत्रस्थानां दुर्लभाज्ञात-पाण्डुलिपीनामुद्धारणे कृतसङ्कल्पस्सन् पुनरिदं कार्यं साध्यवसायं निष्पादितवान् प्रकाशितवांश्च। गङ्गानाथझा-परिसर-मूलग्रन्थमालायाः अष्टसप्तति-प्रसूनायमानं स्तोत्रकाव्यमिदं मूलकवेः, टीकाकर्त्तुः, सम्पादकस्य चेति त्रयाणामपि भिन्नकालिकं योगं प्रदर्श्य तेषां सौरभं दिग्देशेषु विकिरति। सङ्ग्रहाध्यक्षः **डॉ. रामकिशोरः** टीकाग्रन्थसम्पादनात् पूर्वं परमवैदुष्यपूर्णमुपोद्घातं विलिखति, यस्मिन् सः विविध-श्रुति-स्मृति-शास्त्र-काव्यादीनां विभिन्नानामुद्धरणानामुट्टङ्कनं विधाय भगवतः शिवस्य माहात्म्य-संवलितानां रूपाणां विवरणं प्रकाशयति। पुनः **हरिहर-व्याख्यान-व्यापृतः** स **हरि-हरदेवयोः** समत्व-साधकान् सन्दर्भान् उपस्थापयति, पुनः **सूर्यदेवस्यापि** स्वरूप-निरूपणं करोति। अस्मिन् क्रमे सम्पादकः

**गन्धर्वराजपुष्पदन्तस्य** ऐतिह्यव्याख्यापरं, पौरस्त्य-पाश्चात्त्य-मतालोडनपूर्वकं परिचयं प्रददाति काल-निर्धारणञ्च विदधाति। यथाक्रमं टीकाकारस्य जगदीशभट्टाचार्यस्य प्रामाणिकं परिचयं प्रदाय स संस्कृत-जगत् भृशमुपकरोति। **झा-महोदयेन** मैथिलीलिप्यां बङ्गालिप्याञ्च लिखितयोष्टीकयोः साधिकारं संस्कृतीकरणं विधाय सम्पादनं प्रकाशनञ्च कृतम्। नूनं टीकाकृद् विद्वान् शिवमहिम्नःस्तोत्रस्य **हरपरकमर्थं हरिपक्षे** विदधद् स्वं पाण्डित्यप्रकर्षं प्रकटयति। यत्र द्वयोः पक्षयोरेकैव व्याख्या सङ्घटते, तत्र स 'सूर्यपक्षे विष्णुपक्षेऽप्येवम्' इति निर्दिशति, परन्तु यत्र भिन्नार्थकत्वं तत्र स्पष्टरूपेण 'सूर्यपक्षे, विष्णुपक्षे' इत्याटीकते। यत्र चांशिकं समत्वं तत्र '**सर्वमन्यत् समानमिति** दिक्' इत्यादि लिखति। द्विपक्षीयस्य त्रिपक्षीयस्य चार्थस्यावधारणायां पूर्णविश्वस्ततया स्वपक्षं स्थापयति सावधानष्टीकाकारः। ईदृशानां नितान्तभिन्नानामर्थानामुपस्थापयिता टीकाकारो नूनं पण्डितप्रवराणां प्रशस्त्यः। **झोपाह्वेन डॉ. रामकिशोरझा-महोदयेन** एतस्या गूढार्थप्रकाशिकाया 'रहस्यप्रकाश'-टीकायाः प्रकाशनं विधाय स्वसारस्वत-कर्तव्यं निर्व्यूढम्। अस्याष्टीकायाः प्रकाशनं नूनं भक्तिभरितान्तःकरणानां सहृदयानां, संस्कृतविद्यानिष्णातानां विदुषाञ्च हृदयेषु परं तोषं विधास्यतीति मन्ये।

**प्रयागराजः**
**पौषकृष्णषष्ठी**
**२८ दिसम्बर, २०१८**

**( प्रो. हरिदत्त शर्मा )**
**पूर्वाध्यक्षः-संस्कृत-विभागः**
**इलाहाबाद-विश्वविद्यालयः, प्रयागराजः**

**प्रो. हरिदत्त शर्मा**
**पूर्व-अध्यक्षः**
संस्कृत-पालि-प्राकृत एवं
प्राच्यभाषाविभागः
राष्ट्रपति-सम्मानितः



**इलाहाबाद-विश्वविद्यालयः**
**इलाहाबाद - 211002**
ई-मेल -
hari_sanskrit@rediffmail.com
मोबाइल नं. 9839167212

## ग्रन्थ-समीक्षा

# जयदेव-प्रणीतम् श्रीगीतगोविन्दमहाकाव्यम्

**महाकविकृष्णदत्तविरचित-हरिहरोभयनिष्ठ-**
**'गङ्गा'-'शशिलेखा'-व्याख्याद्वय-समलङ्कृतम्**
**सं. डॉ. रामकिशोर-झा, राष्ट्रिय-संस्कृत-संस्थानम्**
**गङ्गानाथझा-परिसरः, प्रयागः, 2015 ई.**

मधुर-कोमल-कान्त-पदावली-लालितं **श्रीजयदेवकविकलितं** गीतगोविन्दकाव्यं सम्प्रति **महाकविकृष्णदत्त**विरचित-हरिहरोभयनिष्ठ-गङ्गा-**शशिलेखा**-व्याख्याद्वय-समलङ्कृतं सत् गङ्गा-यमुना-सङ्गमस्थिते गङ्गानाथझा-**विद्याकेन्द्रे** विलक्षणं रूपं सन्धार्य नितरां संशोभते। प्रथमवारं प्रकृतस्य टीकाद्वयस्य प्रशस्त्यं प्रकाशनकार्यमकरोत् गङ्गानाथझापरिसरीयः पाण्डुलिपिविज्ञानविशेषज्ञः डॉ. **रामकिशोरझामहोदयः**, यो हि 2015 ईसवीयवर्षे ग्रन्थमिमं प्रकाशितवान्। महाकाव्यस्यास्य मुखपृष्ठ एव **हरिहरयोरुभयोर्देवयोरर्धार्धविमलं** सुभव्यं स्वरूपं निरीक्ष्य कस्य न मोमुद्यते चेतः? ग्रन्थस्यारम्भे उपोद्घाते सम्पादकेनानेन सविस्तरमस्याष्टीकायाः प्राप्तिः कथं जाता, कथं षष्टसंङ्ख्याकानां मातृकाणां छायाङ्किताः प्रतयः प्राप्ताः, कथञ्च अध्यवसायपूर्वकं ग्रन्थोऽयं प्राकाश्यमुपनीतं इति सर्वं वृत्तमुट्टङ्कितम्।

नूनं टीकाकारस्यास्य वैलक्षण्यं पाण्डित्यवैचित्र्यं **गङ्गाटीकामतिरिच्य शशिलेखाटीकायां** विभासते। समग्रस्य कृष्णभक्तिपरस्य, शृङ्गारपरस्य, विलास-कला-कुतूहलकरस्य गीतगोविन्दकाव्यस्य प्रतिगीतं प्रतिपद्यं, तत्रापि प्रतिपदं टीकाकृत् **शिवपक्षे** व्याचक्षते। निजप्रतिभाप्रकर्षं प्रयुञ्जानष्टीकाकारः कृष्णदत्तस्तत्र **शिवदत्तायते**। स मूलकविनाऽप्यकल्पितस्य हरपरकस्यार्थस्य स्फोरणे मूलकविकर्माप्यतिशेते। लीलावतारस्य कृष्णस्य मधुर-रसमयीं रासविलासलीलामपि **शिवपक्षे** व्याचक्षाणः व्याख्याकारः शङ्करस्य योगसमाधिपक्षे विविधविधदार्शनिकतत्त्वचिन्तने तां परिणमयति

इत्यहो! संस्कृतव्याकरणमर्मज्ञताऽस्य पण्डितस्य। **हरपरकार्थविश्लेषणे** सः व्याकरणगतव्युत्पत्तीनां प्रभूतां सामग्रीं प्रददाति। यथा "श्रितकमलाकुचमण्डल! धृतकुण्डल ए" इति गीतांशस्य हरपरकव्याख्यां कुर्वाणः स लिखति – "श्रितानां = भक्तानाम्, **कमलाकुः** = स्वर्गापवर्गाभ्युदय-लक्ष्मी-भूमिश्च, **मण्डलम्**=चरणरूपः कोटौ यस्य .... मण्डं लाति तादृशो **मण्डलः**-भूषणदः, **घृतकुण्डलः** = कुण्डलनामधारी **कुण्डली**=सर्पो यस्य, सर्पनूपुरभूषितचरणेत्यर्थः।" इत्थं **शिवपक्षे** अर्थस्य निर्धारणे विद्वान् टीकाकारः स्वकीयं कौशलं प्रदर्शयति। अर्थः पूर्णतया **शिवपक्षे** प्रपतति, तदैव सः विरमति।

ईदृशीमद्भुतां टीकासम्पत्तिम् अन्धकूपान्निस्सार्य तस्य संस्कृतसमाजसमक्षं प्रकाशनेन **डॉ. रामकिशोरझा** पण्डितमण्डली-प्रशस्तिभाजनत्वं वहति। शब्दानामुपयोगतारतम्यानुरूपं सम्यङ्निर्धारणं विधायैव तेषां टङ्कणं यथारूपं कारितम्। यथा कोषोद्धरणानि सर्वाणि गहनकालटङ्कणशैल्या टङ्कितानि। येऽपि विविधमातृकासु ये पाठभेदा वैकल्पिका वा प्रयोगास्ते ते सर्वे पादटिप्पणीषु यथास्थानं विलिखिताः। **कृष्णदत्त**कृतटीकयोः **गङ्गा-शशिलेखयो**र्मनोहरतररूपेण प्रकाशनं विधाय **डॉ. रामकिशोरझामहोदयाः** संस्कृतनिष्ठानां पण्डितानां, साहित्यमर्मज्ञानां, सहृदयानाञ्च प्रभूतमुपकारं कृतवन्तः। यथा गीतगोविन्दकाव्यं मधुरं सरसं, तथैव तस्य टीकाद्वयसंवलितरूपमपि मनोरममाकर्षकञ्च। अभिनवप्रकाशनस्यास्य प्रशस्तौ समासतः इदमेव कथयितुं शक्यते –

**संसृष्टं जयदेवेन गीतगोविन्दसुन्दरम्।**
**विमृष्टं कृष्णदत्तेन किशोरेण प्रकाशितम्।।**

**हरिदत्त शर्मा**

**दिनाङ्कः 02.04.2018 ई.**



## ग्रन्थ समीक्षा

# प्रातिशाख्यपारिभाषिक शब्दकोष

- डॉ. चिरञ्जीवि शर्मा

शास्त्राध्यनाध्यापनप्रचार-प्रसारपरायणैः प्रो. शिवकुमारमिश्र-डॉ. रामनारायणमिश्र-प्रो. शैलकुमारी मिश्रा-प्रो. बनमालीविश्वालैः सङ्कलितः व्याख्यातः सम्पादितः 'प्रातिशाख्यपारिभाषिक-शब्दकोष' नामकः हिन्दीभाषया प्रतिबोधितः कोषग्रन्थः भूमिकाभागं परिशिष्टभागं चादाय 296 पृष्ठात्मकः राष्ट्रिय-संस्कृत-संस्थानाङ्गभूतस्य गङ्गानाथझा प्रयागपरिसरस्य ग्रन्थमालायाः 76तमं प्रसूनम्। भाषानुभागस्य अध्यक्षेण प्रो. शिवकुमारमिश्रेण प्रस्तावितस्य तत्कालिकप्राचार्येण डॉ. गयाचरणत्रिपाठिना अनुमोदितस्य प्रातिशाख्यपारिभाषिकशब्दकोषस्य परियोजनासञ्चालनस्य स्वीकृतिः राष्ट्रिय-संस्कृत-संस्थान नवदिल्लीतः 1988 ईशवीयसंवत्सरे सञ्जाता परन्तु विद्यापीठीय-प्राचार्याणां पदस्थापनस्थानान्तरणादिकारणात् विलम्बितं सम्पादनकार्यं 2015 ईशवीयसंवत्सरे प्रो. शैलकुमारीमिश्रमहोदयायाः प्राचार्यकाले पूर्णतां गतम्। 2015 ईशवीयसंवत्सरे प्रकाशितेऽस्मिन् ग्रन्थे ऋग्वेदस्य ऋक्प्रातिशाख्यस्य शुक्लयजुर्वेदस्य वाजसनेयिप्रातिशाख्यस्य कृष्णयजुर्वेदस्य तैत्तिरीयप्रातिशाख्यस्य सामवेदस्य ऋक्तन्त्रस्य अथर्ववेदस्य च अथर्वप्रातिशाख्यस्य शौनकचतुरध्यायिकायाः पारिभाषिकशब्दाः सङ्कलिताः। सङ्कलितानां पारिभाषिकशब्दानां संख्या 575 (स्थूलाक्षराङ्कितसहिता) वर्तते। अस्य भूमिकायां प्रातिशाख्यानां प्रयोजनम्, छन्दोविचारः, प्रातिशाख्यानां कालः पारिभाषिकशब्दनिर्वचनम् परिभाषाभेदाः, शाब्दबोधे कोषस्य भूमिका, संस्कृतवाङ्मये शब्दकोषपरम्परा इत्येते विषयाः विवेचिताः। परिशिष्टे च सन्दर्भग्रन्थसूची कोशगत-आचार्याणां नामानुक्रमणिका, प्रातिशाख्यप्रयुक्त-आचार्यानुक्रमणिका, पदानुक्रमणिका सन्दर्भानुक्रमणिका इत्येते विषयाः प्रस्तुताः।

कस्मिंश्चिद् विज्ञानकलायां साहित्ये वा प्रवेशार्थम् उपायाः साधनानि वा पारिभाषिकशब्दाः। अतः प्रातिशाख्यानां विषयवस्तुज्ञानार्थं तत्र प्रयुक्तपारिभाषिकशब्दानां ज्ञानं परमावश्यकं वर्तते। पतञ्जलिना महाभाष्ये कथितमस्ति लघ्वर्थं संज्ञाकरणम्। ग्रन्थे केवलम् एकस्मिन् स्थाने विपुलार्थप्रकटनार्थम् एकस्य पारिभाषिकशब्दस्य विधानं क्रियते ग्रन्थे यत्र-यत्र तस्यार्थप्रकटन-स्यावश्यकता भवति तत्र तत्र तल्लघुपारिभाषिकशब्दस्योल्लेखः। एवं शब्दस्य लघुतायां विचाराणां विशदतायाः समन्वयः स्थानसमयाभिरक्षणे सहायको भवति।

सर्ववेदसम्बद्धव्याकरणस्य साधारणनियमानां विधानं कृतं पाणिनिव्याकरणे प्रातिशाख्येषु च वेदस्य शाखा विशेषसम्बद्धव्याकरणस्य नियमानां प्रतिपादनं कृतमस्ति। शाखां प्रति प्रतिशाखम्,

प्रतिशाखं भवं प्रातिशाख्यमिति समाख्यया पुराकाले वेदानां यावत्यः शाखा आसन् तासां सर्वासां शाखानां प्रातिशाख्यग्रन्था आसन् इति गम्यते। लभ्यते च यस्याः शाखायाः यत्प्रातिशाख्यं तत्र तस्यां शाखायां विद्यमानानां वर्णधर्माणां विवेचनम् । परन्तु तत्तच्छाखामात्रविषयकता तत्तत्प्रातिशाख्ये न दृश्यते। यथा– प्रकृत्या कखयोः पफयोश्च (वा.प्रा.3।।) इति सूत्रेण विष्णोः क्रमः (मा.सं. 12.5) ततः खनेम (मा.सं. 11.22) देवसवितः प्रसुव (मा.सं. 9.1) याः फलिनीः (मा.सं. 12.89) इत्यादौ माध्यन्दिनीयानां विसर्गस्य प्रकृतिभावे सिद्धेऽपि विष्णो क्रम (काण्व सं. 13.6) तत् खनेम (काण्व सं. 12.22) देवसवितः प्रसुव (काण्व सं. 9.1) इत्यादौ काण्वोदाहरणे जिह्वामूलीयोपध्नानीयसिध्यर्थं पुनर्वचनम् 'जिह्वामूलीयोपध्मानीयौ शाकटायनः (वा.प्रा. 3.12) इति न च वाच्यं जिह्वामूलीयादिकं माध्यान्दिनस्यापि विकल्पेन भविष्यतीति' तस्मिन् लल्ह जिह्वामूलीयोपध्मानीयनासिक्या न सन्ति माध्यन्दिनानाम् इति (वा.प्रा. 8.31) सूत्रकारेण निषिद्धत्वादिति (वा.प्रा. 1.1) सूत्रभाष्ये अनन्तभट्टः। एवमन्यानि अपि उदाहरणानि दर्शितानि आचार्येणानेन। एतदाचार्यमते काण्वादिपञ्चदशशाखासु एकमेव शुक्लयजुर्वेदप्रातिशाख्यम्। अनेकशाखानां सामूहिकरूपमपि प्रातिशाख्यं भवतीति तैत्तिरीयप्रातिशाख्यस्य वैदिकाभरणाख्यव्याख्याकृतापि कथितमस्ति – (तै.प्रा. 4.11)

द्वित्रिशाखाविषयत्वेऽपि तदसाधारणतया उपपत्तेः। तथा बह्वृचानां शाक–वाष्कलात्मकशाखाद्वयविषयं प्रातिशाख्यं प्रसिद्धम्।

अस्मिन् प्रातिशाख्यपारिभाषिकशब्दकोषग्रन्थे प्रातिशाख्येषु प्रयुक्ताः पारिभाषिकशब्दाः हिन्दीभाषया सरलतया सूत्रनिर्देशपूर्वकं स्फुटीकृताः। यथा 'कार' पारिभाषिकशब्दः अस्य कोषग्रन्थस्य 58 पृष्ठे–

**कार** वर्णनिर्देशक। अ क आदि वर्णों का निर्देशन 'कार' प्रत्यय से किया जाता है। यथा अकार, ककार।

– वर्णः कारोत्तरो वर्णाख्यः। तै.प्रा. 1.16

– वर्णकारौ निर्देशकौ। तै. प्रा. 22.4

– कारेण च। वा.प्रा. 1.37

– वर्ण इति पूर्वः कारा (हा) ख्यायाम् । व्यञ्जनमकारपूर्वात् । ऋ.तं.प्र.प्र.3

विशेष कार प्रत्यय से व्यञ्जन का निर्देश करने पर व्यञ्जन और कार 'अ' से व्यवहित होता है। अर्थात् उन दोनों के बीच में 'अ' जोड़ दिया जाता है। यथा क्+अ+कार– ककार

– अकारव्यपेतो व्यञ्जनानाम् । तै.प्रा. 1.17

– अव्यवहितेन व्यञ्जनस्य। वा.प्रा. 1.38

यथा अयोगवाहपारिभाषिकशब्दः अस्य कोष ग्रन्थस्य 25 पृष्ठे–

**अयोगवाह** – विसर्जनीय, जिह्वामूलीय, उपध्मानीय, अनुनासिक, यम तथा अनुस्वार। अकारादि वर्णों के साथ युक्त होकर उच्चारित वर्ण। यथा अः ॅ क ॅ प अं क ॅ इति जिह्वामूलीयः ॅ प इत्युपध्मानीयः अं इत्यनुस्वारः अः इति विसर्जनीयः हुँ इति नासिक्यः कुं खुं

गुं घुं इति यमाः। वा.प्रा. 8.19-24 – अथायोगवाहाः। अः इति विसर्जनीयः। ≍ इति जिह्वामूलीयः। ≍ प इत्युपध्मानीयः। हुमित्यनुनासिकः। अथ यमाः। कुं इति खुं इति गुं इति घुं इति यमाः। अनन्त्यान्त्य संयोगे यमः पूर्वगुणः। अथानुस्वारौ। अं आं इत्यनुस्वारौ। ऋ. तं. प्र.प्र.2।

अकारादिना वर्णसमाम्नायेन सहिताः सन्त एते वहन्त्यात्मलाभं प्राप्नुवन्त्ययोगवाहाः। वा.प्रा. 8.18 पर उ.भा.।

तुल प्रत्याहार सूत्र 5 वा. 5 पर म.भा.

विशेष ऋ.प्रा.तै. प्रा. तथा च.अ.में अयोगवाह संज्ञा का प्रयोग नहीं किया गया है।

विशेष 2 वा.प्रा. के व्याख्याकार अनन्त भट्ट ने अयोवाह के स्थान पर 'योगवाह' संज्ञा को अधिक समीचीन माना है। उनके अनुसार योगेन अर्थात् अकार आदि वर्णसमुदाय के साथ मिलकर ये अपना निर्वहण करते हैं। "योगवहत्वं च इत्थम् । योगेन अकारादिवर्णसमुदायेन सहिताः सन्ति। आत्मानं च वहन्त इति योगवाहाः।" इसके विपरीत ऋक्तन्त्रकार ने 'अ' से लेकर 'स' तक के समस्त वर्णों को योगवाह संज्ञा से अभिहित किया है। यथा– अ इति आ इति इ इति ई इति उ इति ऊ इति ऋ इति ॠ इति ऌ इति ॡ इति-इति समानि। ए इति ऐ इति ओ इति औ इति सन्ध्यक्षराणि। आयाहीवोथीनाम् (1.1.9) गतिरन्त इति स्वराः। अथ व्यञ्जनानि। किति खिति गिति घिति ङिति कवर्गः। चिति छिति जिति झिति ञिति चवर्गः। टिति ठिति डिति ढिति णिति टवर्गः। तिति थिति दिति धिति निति तवर्गः। पिति फिति बिति भिति मिति पवर्गः। इति स्पर्शाः। अथान्तस्याः। यिति रिति लिति इत्यन्तस्थाः। अथोष्माणो हिति शिति षिति सिति योगवाहाः। ऋ. तं प्र.प्र. 2

विशेष 3 पतञ्जलि के अनुसार वर्णसमाम्नाय में अनुपदिष्ट अयोगवाह का णत्व षत्व आदि प्रयोजन के लिए अट् शर् आदि प्रत्याहारों में उपदेश होना चाहिए।

अनेन विवरणेन ज्ञातं भवति यत् प्रातिशाख्यगत पारिभाषिक शब्दार्थबोधकः कोषग्रन्थोऽयम् अध्येतृणाम् अनुसन्धातृणां च कृते महते उपकाराय भविष्यति। यतो ह्यनेन कोषग्रन्थेन पारिभाषिक-शब्दः कस्य प्रातिशाख्यस्य कस्मिन् सूत्रे कस्मिन्नर्थे प्रयुक्तः इति सरलतया ज्ञातुं शक्यते। प्रातिशाख्यानां विषयवस्तुज्ञानार्थं तत्र प्रयुक्तपारिभाषिकशब्दानां ज्ञानमावश्यकम्। संसारे विभिन्नभाषायां कोषरचनायाः प्रारम्भिकविन्दोः अन्वेषणे निघण्टुः प्रथमा कोषकृतिः। यास्कस्य निघण्टोः अनन्तरम् अनेके कोषा रचिताः। चमूपतेः वेदार्थकोषः विश्वबन्धुशास्त्रिणः वेदार्थपारिजातः मधुसूदनस्य वैदिककोषः हंसराजस्य वैदिक कोषः केवलानन्दसरस्वत्याः ऐतरेय-आरण्यक शब्दकोषः गयानन्दशम्भोः उपनिषद्वाक्यमहाकोषः लक्ष्मणशास्त्रिणः धर्मकोषः भीमाचार्यझलेकीकरस्य न्यायकोषः। आधुनिकदृष्ट्या लिखिताः राथ-वाटलिङ्ग-स्मिथ-मोनियरविलियम्स-विल्सन-वेनफे-मैक्डानल-पिशल-गेलनर-हिलेब्रान्त-ग्रासमन-फोर्शगन-नीरसादि पाश्चात्यविदुषां वैदिक शब्दकोषैः वैदिक शब्दानां निर्वचने महत्त्वपूर्णं योगदानं कृतम्। सामान्यव्यवहारे प्रयुज्यमानानां शब्दानां कोषः सामान्यकोषः। विशेषक्षेत्रे प्रयुज्यमानानां शब्दानां विशेषकोषः। प्रातिशाख्यपारिभाषिक-शब्दकोषः विशेषे विशेषकोषः। अस्मिन् कोषे ऋक्प्रातिशाख्यवाजसनेयिप्रातिशाख्य-

तैत्तिरीयप्रातिशाख्यऋक्तन्त्रशौनकीयचतुरध्यायिका-अथर्ववेदप्रातिशाख्येभ्यः पारिभाषिकशब्दाः सङ्कलिताः। प्रातिशाख्यप्रयुक्तशब्दानां सङ्ग्रहः तेषामर्थविवेचने विहितो यत्नः श्लाघ्यः। प्रातिशाख्यविषयकपारिभाषिकशब्दार्थजिज्ञासूनाम् अनुसन्धातृणाम् अध्यापकानां छात्राणां वेदाध्येतृणां च समक्षम् एतादृशीकृतिः नासीत् । तदभावपूर्तये कृतिरियं विद्यते।

कर्तव्याकर्तव्यबोधक-जीवनपथप्रदर्शकज्ञानालोकप्रसारकानां वेदानां रक्षणार्थं व्याकरण-प्रातिशाख्यशिक्षादीनि शास्त्राणि रचितानि। वेदः सम्प्रति यूनेस्कोसूच्यां विश्वमानवस्य रिक्थरूपेण सम्मिलितः। वेदाध्ययनरक्षणे व्याकरणप्रातिशाख्यशिक्षादीनां महत्त्वपूर्णस्थानं वर्तते। वेदसंहिताः प्रातिशाख्यकालतः अद्यावधि अपरिवर्तितरूपेण विद्यन्ते। पारिभाषिकशब्दार्थज्ञानं प्रातिशाख्यविषय-वस्तुज्ञानार्थमपेक्षितम्। व्याकरणप्रातिशाख्यशिक्षादिप्रतिपादितनियमानुसरणादीनां परिणामो यत् सहस्रवर्षपूर्वं ततोऽप्यधिकवर्षपूर्वं वा यस्यां परम्परायां येन प्रकारेण वेदमन्त्राणां पाठः क्रियते स्म अद्यापि तस्यां परम्परायां तेनैव प्रकारेण वेदपाठो विधीयते।



राष्ट्रपति-सम्मानित, शास्त्र-विद्वन्मणि
**प्रो. (डॉ.) वाचस्पतिशर्मा त्रिपाठी**
पूर्व-आचार्य, डीन एवं अध्यक्ष
धर्मशास्त्र विभाग, का.सिं.द.सं.
विश्वविद्यालय, दरभंगा (बिहार)
एमेरिटस प्रोफेसर (यू.जी.सी.)
सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी (उ.प्र.)
पूर्व-विजिटिंग प्रोफेसर, (यू.जी.सी.)

निवास-सङ्केत -
1. (वाराणसी) - उर्मिला-निकेतनम्
शिव -16/114-25-यू, अन्नपूर्णा कॉलोनी कादीपुर,
शिवपुर, वाराणसी - 221003
2. (सिवान) - राज-गङ्गाधर-सदनम्
शिवाजीनगर, फत्तेपुर, बाईपासरोड, सिवान (बिहार),
पिन - 841226
मो.- 09431253819, 08604465574
ई-मेल : himanshu247788@gmail.com

---

## ग्रन्थ-समीक्षा

# सम्बन्धविवेक

राष्ट्रियसंस्कृतसंस्थानस्य प्रयागराजस्थ-गङ्गानाथझा-परिसरपक्षतः सद्यः प्रकाशितः बङ्गीयधर्मनिबन्धकारेण महामनीषिणः **शूलपाणिनोपनिबद्धः** परिसरीय- धर्मशास्त्रविभागाध्यक्ष-पदमलङ्कुर्वता **आचार्यरामकृष्णपाण्डेयेन** सुसम्पादितः नूतनाकर्षककलेवरः **'सम्बन्धविवेक'**-इत्यभिधेयः ग्रन्थः मया समीक्षणदृशा आमूलचूडं निपुणं निरीक्षितः। लघुकलेवरेऽप्यस्मिन् गभीरार्थप्रतिपादनपरे धर्मनिबन्धग्रन्थे **आचार्यशूलपाणिना** प्रमुखरूपेण विवाह-सम्बन्ध-स्वधा-सम्बन्धोपयोगिनां सगोत्र-सपिण्ड-समानप्रवर-समानोदकानां पिण्डभाजन-लेपभाजनादिपितॄणाञ्च विशदविमर्शः विविधोदाहरणपुरस्सरं सरलसुरगिरा विहितः। सगोत्र-सपिण्ड-समानोदक-समानप्रवरादिविविधसम्बन्धविमर्शप्रसङ्गे **शूलपाणिः** प्रायशः **मनु-याज्ञवल्क्य-विज्ञानेश्वर-जीमूतवाहनादिविदुषां** मतानि समर्थयति। एतदतिरिक्तं विषयविवेचनक्रमे यत्र-तत्र **व्यास-वसिष्ठ-गौतम-नारद-शातातप-बृहन्मनु-शङ्खलिखित-आश्वलायनादि**-विविधस्मृतिकाराणाम्, **अग्नि-मत्स्य-विष्णु-कूर्म-मार्कण्डेयाद्यनेकपुराणानामपि** मतानि यथावसरं प्रभूततया प्रमाणत्वेन समुद्धरति।

ग्रन्थेऽस्मिन् **शूलपाणिः** सापिण्ड्यसम्बन्ध-विवेचनप्रसङ्गे विवाहप्रकरणे उपन्यस्तं "पञ्चमात् सप्तमादूर्ध्वं मातृतः पितृतस्तथा"- इति याज्ञवल्क्यवचनमुद्धरति, समर्थयति, तद्व्याख्यानञ्च विदधाति। श्लोकांशस्यास्य आशयं स्पष्टीकुर्वन् स विज्ञानेश्वरमतं समर्थयति। 'असपिण्डाम्' इत्यत्र एकशरीरान्वयत्वेन साक्षात् परम्परया वा सापिण्ड्यमुक्तं, तच्च सर्वत्र सर्वस्य यथाकथञ्चिदनादौ संसारे संभवतीति अतिप्रसङ्ग इत्यत आह- मातृतः अर्थात् मातुः सन्ताने पञ्चमादूर्ध्वं, पितृतः अर्थात् पितुः सन्ताने सप्तमादूर्ध्वं सापिण्ड्यं निवर्तते। अतश्चायं 'सपिण्ड'- शब्दः अवयवद्वारा सर्वत्र प्रवर्तमानोऽपि निर्मथ्य-पङ्कजादिशब्दवत् नियतविषय एव। तथा च पित्रादयः षट् सपिण्डाः, पुत्रादयश्च षट् आत्मा च सप्तमः इति। पुनश्च **शूलपाणिः**

याज्ञवल्क्योक्तेऽस्मिन् श्लोकार्द्धे 'मातृतः पितृतस्तथा'– इति पदद्वयस्य 'मातृबन्धुतः' 'पितृबन्धुतः' इत्याशयं निरूपयन् पितृबान्धवैः मातृबान्धवैश्च सह विवाहसम्बन्धं निषेधयति। इत्थमेव सपिण्ड–सगोत्र–समानोदकादिविविधसम्बन्धाः प्रभूतशास्त्रीयवचन–युक्तिप्रदर्शनपुरस्सरं सरलसुरगिरा सोदाहरणं विमृष्टाः ग्रन्थेऽस्मिन् शूलपाणिना।

सद्यः प्रकाश्यं नीतस्यास्य ग्रन्थस्य कलेवरं चित्ताकर्षकं, सुसज्जितं, प्रतिपाद्यविषयानु–रूपञ्चास्ति। अक्षरयोजनं, टङ्कणं, मुद्रणञ्च निर्दुष्टं हृदयावर्जकञ्चायाति नयनपथम्। सम्पादकेन महताश्रमेण निष्ठया च बङ्गलिपि–मिथिलालिपि–निबद्धस्य मातृकाद्वयस्य देवनागरलिप्यां लिप्यन्तरकरणीकृतम्। कतिपयस्थलेषु खण्डितानामस्फुटानाञ्च अंशानां संशोधनं विधाय तेषामुल्लेखः [ ] (कोष्ठके) कृतः। प्रत्येकपृष्ठस्याधोभागे पाठभेदस्योल्लेखोऽपि विहितः। तदधस्तात् संयोजितः टिप्पणीभागः, मूलग्रन्थोद्धृतश्लोकानां श्लोकाध्यायादिसूचकः ग्रन्थसन्दर्भभागश्च ग्रन्थस्यास्यभिरामतां नितरां संवर्धयतितराम्। ग्रन्थस्य परिशिष्टभागे समुपन्यस्ता मूलमातृकाद्वयस्य छायाप्रतिकृतिरपि जिज्ञासुसुधियां सौकर्याय सन्तोषाय च कल्पते।

धर्मशास्त्रवाङ्मये अतिमहत्वपूर्णमुपादेयञ्च सपिण्ड्यादि गभीरविषयमाश्रित्य बङ्गोद्भवधर्मनिबन्धकारेणाचार्य**शूलपाणिना** सरल–सुललित–सुरगिरोपनिबद्धस्याद्यावधि निविडतिमिर–विलीनस्य ग्रन्थरत्नस्य **सम्बन्धविवेका**भिधेयस्य टिप्पणी–पाठभेदादिप्रदर्शनपुरस्सरं सम्पादनं प्रकाशनं च विधाय **आचार्यरामकृष्णपाण्डेय 'परमहंस'**– महोदयः समेषामपि सुरभारती–समुपासकानां, सुधीनां, समीक्षकाणां, सहृदयसमालोचकानाञ्च प्रभूत– श्रद्धासमादरभाजनं, सुतरां सभाजनीयश्च सञ्जात इत्यत्र नास्ति कश्चन सन्देहः। अतोऽहम् अधोङ्कितैः पद्यप्रसूनैः सभाजयामि ग्रन्थसम्पादकम् **आचार्यपाण्डेयमहोदयम्** –

**यत् सम्बन्धविवेकाख्यं ग्रन्थरत्नं मनीषिना।**
**बङ्गदेशोद्भवेनेह लिखितं शूलपाणिना।।1।।**
**टिप्पणी - पाठभेदादि - निरूपण - पुरस्सरम्।**
**सम्पादकः रामकृष्णः पाण्डेयो राजतां चिरम्।।2।। इति।**

शुभमस्तु।

(प्रो. वाचस्पतिशर्मा त्रिपाठी)



राष्ट्रपति-सम्मानित
महामहोपाध्याय
प्रो. रहसबिहारी द्विवेदी
कृतकार्य आचार्य
संस्कृत-विभाग
रानीदुर्गावती विश्वविद्यालय
जबलपुर (म.प्र.)



आवास
615, ग्रीनसिटी
माढ़ोताल
जबलपुर - 482 002

---

## ग्रन्थ-समीक्षा

# डॉ० रामकिशोरझा-सम्पादिता श्रीगीतगोविन्दस्य हरिहरोभयपरा टीका

पीयूषवर्षिणो महाकवेर्जयदेवस्य प्रसिद्धतमं महारागकाव्यं श्रीगीतगोविन्दम् । रागकाव्यस्य लक्षणं मया स्वकीयायां 'नव्यकाव्यतत्त्वमीमांसायामे'वं व्यधायि-

'लोकोत्तराह्लादमयं प्रसन्नं
सङ्गेयतालध्रुवकानुबद्धम् ।
रागात्मकं नाट्यकृतेऽपि युक्तं
तद्रागकाव्यं कथितं बुधेन्द्रैः ''

'सङ्गीतान्वितमि'ति (7.94.32) वाल्मीकिना, 'सर्गबद्धो महाकाव्यं महताञ्च महच्च यदि'ति काव्यशास्त्रपितामहेन भामहेन (1.19) प्रोक्तम् । भामहस्य 'महताञ्च महच्च' कथनमिदं महतां (श्रेष्ठजीवनमूल्यवतां) चरितमाधृत्य रचितं भवति, आकारदिशा च महद् भवति । अतः काव्य-शास्त्रदृशा रघुवंश-कुमारसम्भव-शिशुपालवधादिवन्नेदं समग्रचरितविन्यासदिशा विद्यते महाकाव्यम्, वस्तुत इदं महारागकाव्यमिति कथ्यतामित्युचितं प्रतीयते । भवतु नामास्य रचयितुः प्रदत्ताऽथवा सम्पादकैः कृता संज्ञा महाकाव्यम् । अत्र न काचिद्धानिः।

अस्य महारागकाव्यस्य श्रीगीतगोविन्दस्य बह्वयष्टीका वाग्विदांवरैरकारिषत। तासु प्रायशः श्रीकृष्णपराष्टीकाः सन्ति। मिथिलावासिना विद्वद्वरेण महाकविना श्रीकृष्णदत्तेन (1780 खिष्टाब्दे जातेन) श्रीगीतगोविन्दस्य तीर्थराजे प्रयागे वसता हरिपरा 'गङ्गा'टीका काश्याञ्च वसता शिवपरा 'शशिलेखा' टीका चाकारिषाताम्। द्वयोष्टीकयोः पाण्डुलिपीः महता प्रयासेन 'इण्डिया-ऑफिस-लाइब्रेरी, लन्दन-90 SAN. 197 इत्यतः, मधुवनीबिहारस्य बाबूश्रुतिधारीसिंहस्य संग्रहालयात्,

राष्ट्रियसंस्कृतसंस्थान-प्रयागस्थ-गङ्गानाथझापरिसरस्य पाण्डुलिपिसंग्रहालयात् (3066,3795, 4998) तिस्रः पाण्डुलिपीः, द पैलेस-लाइब्रेरी-अलवरराजस्थानतः (187) समवाप्य राष्ट्रियसंस्कृसंस्थाने प्रयागे पाण्डुलिपिविभागे कार्यलग्नेन बहुलिपिज्ञेन परमविदुषा कोकिलकण्ठेनानेकग्रन्थसम्पादकेन **आचार्यश्रीरामकिशोरझा** शर्मणाऽनयोर्द्वयोष्टीकयोः साधु सम्पादनमकारि। अस्य ग्रन्थस्य प्रकाशकः **डॉ. एन.आर.कण्णन्**-महाशयः प्राचार्यः, प्रयागस्थस्य राष्ट्रियसंस्कृतसंस्थानस्य गङ्गानाथझा-परिसरस्यास्ते। 2016 खिष्टाब्दे ग्रन्थोऽयं प्रकाशितः। एतदर्थं वर्धापनार्ह **आचार्यरामकिशोरझा**- महाशयो, यतो हि पाण्डुलिपिसंग्रहालयेषु ग्रन्थोऽयमन्धकारावृत आसीत्। तस्य यथासम्भवं प्रयासपूर्वकं सर्वाः पाण्डुलिपीः दृष्ट्वा विशिष्टभूमिका-(एकोऽपि सन् बहुधा योऽवभातीति)-सहितं ग्रन्थमिमं सम्पादितवानस्ति।

ग्रन्थादौ न्यायमीमांसादिशास्त्रनिष्णातस्य विद्वत्तल्लजस्य राष्ट्रियसंस्कृतसंस्थानस्य च कार्यवाहक-कुलपतिचरस्य प्रचार्यस्य **डॉ. एन.आर.कण्णन्**-महाशयस्य, कुलपति-निदेशककादिपदेषु काव्यरचनायां विद्वत्सु च लब्धकीर्तेराचार्यस्य **पं. रामकरणशर्मणः**, राष्ट्रस्य श्रेष्ठकवेः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य च पूर्वकुलपतेः **प्रो. अभिराज-राजेन्द्रमिश्रस्य** च क्रमशः **प्रधानसम्पादकीयम्, वन्दना, नान्दीवाक्** च राराज्यन्ते। शास्त्रविद्वन्मणेः **प्रो. वाचस्पतिशर्मत्रिपाठिनः** पद्यात्मकः **शिवसङ्कल्पोऽत्र** विद्यते। यस्मिन् श्रीगीतगोविन्दटीका-कर्तुर्मैथिलस्य **श्रीकृष्णदत्तस्य** अथ च सम्पादकस्य **डॉ. रामकिशोरझाशर्मणः** सद्भावनामयी प्रशस्तिर्विन्यस्ता विद्यते।

पुराणेष्वथवाऽन्यभक्तिपरकग्रन्थेषु प्रायो यं देवं वा यां देवीमाश्रित्य वस्तुविन्यासो भवति, तस्य तस्या वा सर्वश्रेष्ठत्वं वर्णितं दृश्यते। वस्तुत एकैव मानवीया जातिर्देवोऽप्येकः धराप्येका पराशक्तिरप्येका सौविध्याय सर्वमप्येतद्भिन्नं भिन्नं प्रतीयते व्यवह्रियते च। तथ्यमिदं मनीषिभिर्बहुधा प्रत्यपादि, मयापि स्वकीये 'तीर्थभारते' संस्कृतकाव्ये व्यलेखि-

**एका जातिर्निखिलवसुधावर्तिनां मानवानां**
**वर्णो भिन्नो विलसतितरां कर्मणा जीवनार्थम्।**
**देवोऽप्येकः सकलहितकृन्नामरूपैर्विभिन्न-**
**श्चैकैवास्ते सकलजनता मातृरूपा धरित्री ।।8।।**
**दिव्या शक्तिर्हृदयमनुवसेदेतदर्थं स एको**
**देवो जातो बहुतनुधरो भक्तवाञ्छानुरूपः।**
**एवं जातिं निजकुलगतां कुर्वते नामभिन्नां**
**मातुर्भूभेरपि विदधति स्थाननामानि तद्वत्।।9।।**

एकां परां शक्तिं विद्वांसो बहुधा वदन्ति। ऋग्वेदोऽत्र प्रमाणम्। तद्यथा-

**इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्।**

**एकं सद् विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः।।**

ऋग्वेदे 1.164.46

शिवपुराणे शिवस्यैव सर्वश्रेष्ठत्वं प्रतिपादितम्-

**आब्रह्मतृणपर्यन्तं यत्किञ्चिद् दृश्यते जगत्।**

**तत्सर्वं शिव एवास्ति स देवः शिव उच्यते।।** 4.43.4

**शिवमहिम्नः स्त्रोत्रमपि** सौहार्द्रमयं स्वरूपं शिवस्य प्रस्तौति-

**त्रयी साङ्ख्यं योगः पशुपतिमतं वैष्णवमिति**

**प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च।**

**रुचीनां वैचित्र्याद् ऋजुकुटिलनानापथजुषां**

**नृणामेको गम्यस्त्वमसि पयसामर्णव इव ।। 7।।**

अस्य ग्रन्थस्यादौ प्रदत्तायां नान्दीवाचि **प्रो. अभिराज-राजेन्द्रमिश्रो** मनुते यत् पूर्वसूरिं **मधुसूदनसरस्वतीमधीत्यैव श्रीकृष्णदत्तेन** शिवपक्षीया टीका व्यरचि, तत्कथनमेवं वरीवर्ति-

'**श्रीशिवमहिम्नः स्तोत्रं** विष्णुपक्षे व्याख्यातवन्तं पूर्वसूरिं **मधुसूदनसरस्वतीमधीत्यैव** सञ्जातव्याख्योत्कण्ठेन **श्रीकृष्णदत्तेन श्रीगीतगोविन्दमहाकाव्यस्येशानपक्षीयेयं टीकाऽऽ-टीकितेत्यन्तः**- प्रामाण्येनैव स्फारीभवति,

अत्र **श्रीकृष्णदत्तस्य** कथनमिदमुद्धृतम्-

**'शैवं नाद्रियते सुधीरपि मतं प्रायोऽधुना वैष्णवः**

**शैवो नैव च वैष्णवं निजनिजासद्वासनावासितः।**

**मत्वेत्थं मधुसूदनोऽपि मुरजित्पक्षे महिम्नः स्तुतिं**

**व्याचख्यौ जयदेवसूक्तिमपि तां शैवे नयाम्यध्वनि'।।**

**श्रीशिवमहिम्नः स्तोत्रं** शिवपरम्, **श्रीगीतगोविन्दं** च महारागकाव्यं श्रीकृष्णपरम्, नात्र विमतिर्विदुषाम्। सुरब्राह्म्याः कोषव्युत्पत्योरियं महिमा यद् व्युत्पन्ना वाग्विदो यथेच्छं स्वाभिमतं व्याख्यानं कर्तुमर्हन्ति। **श्रीमधुसूदनसरस्वतीस्वामिनः शिवमहिम्नः स्तोत्रस्य** विष्णुपक्षीया 'गङ्गा'ख्या टीकाऽथवा **श्रीकृष्णदत्तशास्त्रिणः श्रीगीतगोविन्दस्य** शिवपक्षीया 'शशिलेखा' भवतु, उभयोष्टीकाकारयोरद्भुतं प्रातिभं शब्दज्ञानसामर्थ्यं प्रमाणितं भवति । **'एकं सद्विप्रा बहुधा वदन्ति'** इति ऋग्वेदोक्तिरन्वर्थीभवन्ती दृश्यते। शैववैष्णवादिसम्प्रदायभेदोऽपि समाप्तिं यातीत्यवान्तरं प्रयोजनं सिद्धं भवति। अत उभौ टीकाकारौ नूनमेव समेषां विदुषां प्रेरकौ प्रणम्यौ च विद्येते ।

**महारागकाव्यस्य श्रीगीतगोविन्दस्य हरिहरोभयटीकाकर्तुश्च: परिचयः**

टीकासम्पादकस्य निरूपणानुसारेण महाकवेः श्रीकृष्णदत्तस्य समयोऽष्टादशख्रीस्तशताब्दी विद्यते। मधुवनीमण्डलस्य 'उजान'ग्रामेऽस्य जनिरभवत्। स्वकीये **श्रीगीतगोपीपतिकाव्ये** स्वपरिचयस्तेनैवं व्यलेखि–

**उद्यान-( उजान ) वास्तव्यसमस्तविद्यः श्रीकृष्णदत्तकस्य कवित्वमेतत्।**
**श्रीकृष्णपादार्पितमादरेण कुर्वन्तु सन्तः सततं स्वकण्ठे।। 12.28**

महाकविरयं 1780 ख्रीष्टाब्दे द्वादशसर्गात्मकं काव्यमिदमरचयत्। अस्मिन् काव्ये महामहोपाध्यायेन **पं. हर्षनाथझा**महाशयेन 'भावदीपक'नाम्नी टीका व्यरचि। **पं. हर्षनाथस्य** मातृमातामहमातुल आसीत् **श्रीकृष्णदत्तः**। प्रसिद्धपाण्डित्येन श्रीहर्षनाथेन 1869 ख्रीस्ताब्दे टीकेयं व्यधायि। यथोक्तं तेन–

**'चण्डीपदाम्भोजयुगं प्रणम्य श्रीहर्षनाथो लघुभिर्वचोभिः।**
**स्वमातृमातामहमातुलेन कृतप्रबन्धं विशदीकरोति।।'**

अस्याष्टीकायाः सम्पादनं **डॉ. गङ्गानाझा**–महाशयैः पाण्डित्यपूर्णभूमिकासहितमकारि। **डॉ. गङ्गानाथझामहाशयः** (ख्री. 1871–1941) **श्रीगीतगोपीपति**भूमिकायां दैवीकृपाविषयकमेकं वृत्तान्तं **श्रीकृष्णदत्त**जीवनसम्बद्धं प्रस्तौति–

*'अयं कविर्भवेशतनूजन्मा पुरन्दरादनुजन्मा बाल्य एव केनापि व्याधिना ग्रस्तो मृतश्चण्डिकाचरणाम्भोजषट्पदेन स्वपित्रा स्वग्रामगतचण्डिकायतनन्नीत्वा रात्रौ प्रतिमायाश्चरणयोः समीपं स्थापयाञ्चक्रे। प्रभाते तत्र गत्वा प्रत्यागतासून्तन्दृष्ट्वा तं पित्रादयो गृहन्निन्युः। ततः प्रभृत्येव स बालकोऽलौकिकप्रतिभाशाली चमत्कारिककविताशक्तिमाँश्चासीदित्यादिकिम्बदन्त्यद्यापि वरीवर्ति। संवदति चैषा कवेः स्वकीयोक्त्या'* –

***'विद्वद्वंशवतंसितःसुचरितस्तातो भवेशाभिधो***
***ज्येष्ठा यस्य पुरन्दरप्रभृतयः षट्शास्त्रपारङ्गमाः।***
***लब्ध्वा शैशव एव येन सकला विद्याः प्रसाद्याम्बिकां***
***तेनाकारि बुधेन कृष्णकविना 'श्रीगीतगोपीपतिः'।।***

(गीतगोपीपतिकाव्ये 12.27.)

महाकविरयं श्रीगीतगोविन्दकारसृतिमनुसृत्य 'चण्डिकाचरितचन्द्रिका' नाम्नाऽन्यं रागकाव्यं प्रणीतवान्। अस्मिन् काव्ये (11.61) पद्ये दैवीकृपाया उल्लेखं करोति–

**'देवीदत्तलसत्तमसन्मतिकृष्णदत्तकविनेदम् ।**
**निर्मितमम्बागीतमुदञ्चितमुदयतु हृदि हृतखेदम्'।।**

प्रायशो महाकविरयं गीतानां समाप्तौ स्वमातु 'भगवत्याः' पितुश्च 'भवेश'स्य नामोल्लेखं करोति। यथा-

'भगवतितनयकवेरिदमुदितम्।
जनयतु सुजनं समुदितमुदितम्'।।

तथा च –

'वदति भवेशसुतो जनरञ्जनमिदमम्बापदसेवी।
भुक्तिविमुक्तिमहोदयदा भुवि केवलमेव हि देवी'।।

उभयपक्षीयटीकाविषये टीकाकर्तुर्भावना-

'शैवं नाद्रियते सुधीरपि मतं प्रायोऽधुना वैष्णवः
शैवो नैव च वैष्णवं निजनिजासद्वासनावासितः।
मत्वेत्थं मधुसूदनोऽपि मुरजित्पक्षे महिम्नः स्तुतिं
व्याचख्यौ जयदेवसूक्तिमपि तां शैवे नयाम्यध्वनि '।।

तथा च

आस्योत्था जयदेवपण्डितकवेर्वाणी पवित्रा स्वतः
प्रव्यक्तं परिशीलिताच्युतपदा श्लाध्या बुधैः सर्वदा।
सम्प्रत्यद्भुतयोजनाभिवलनाभङ्ग्या शिवे सङ्गतिं
नीता पद्मभुवः कमण्डलुपयोधारेव किं कथ्यताम्।।

महाकविरयं श्रीकृष्णदत्तो महाराष्ट्रप्रदेशीयस्य नागपुरनृपतेः श्रीजानूजी-महाराजस्य (खी. 1755-1772) राज्याश्रये तद्गुणवर्णनपरं 'जानराजचम्पू'रिति काव्यं रचितवान्। एवमेव जानूजीमहाराजस्य धर्मपत्न्याः श्रीमत्या लक्ष्मीदेव्याश्चरितमाश्रित्य 'लक्ष्मीगुणमणिमाला' नामकं काव्यं प्रणीतवान्। एतत्काव्यद्वयं सम्यक् सम्पाद्याचार्य-पं. जगन्नाथपाठकेन प्रयागस्थ-राष्ट्रियसंस्कृतसंस्थानस्य गङ्गानाथझा-परिसरतः खि. 1976 वर्षे प्रकाशितम्। नाटकद्वयमपि श्रीकृष्णदत्तकविना व्यरचि-

1-कुवलयाश्वचरितं नाटकम्, 2-पुरञ्जनचरितञ्च।

आचार्यश्रीरामकिशोरझाशर्मणाऽस्य ग्रन्थस्य भूमिकायां (एकोऽपि सन् बहुधा योऽवभातीति नाम्ना विन्यस्तायाम्) टीकाकर्तुर्विषये विस्तृतं निरूपणमकारि। अतः पिष्टपेषणं विहायास्य महनीयश्रीगीतगोविन्दग्रन्थस्य हरिहरोभयटीका सम्प्रति सुलभेति सूचनार्थं निबन्धोऽयं मया व्यलेखि।

प्रथमसर्गस्य प्राक्कथने (सामोददामोदर इति शीर्षकीभूते) महाकविः कृष्णदत्तः स्वकृतटीकाविषयेऽकथयत्-

धनसमयनिबद्धादाविलत्वेऽपि पुण्यं
प्रथयति रसमच्छं भङ्गिभिर्विस्फुरन्ती।
गमयति पदमेषा वैष्णवं शाम्भवं वा
जयति जगति 'गङ्गा' गीतगोविन्दटीका।।3।।

स्फुटतरविवृतां श्रीकृष्णपक्षप्रकाशां
विशदितशिवपक्षां सर्वलोकोपकृत्यै।
रचयति 'शशिलेखां' गीतगोविन्दटीकां
त्रिपुरहरनगर्यां मैथिलः कृष्णदत्तः।।4।।

गौरीशङ्करपक्ष एव विवृतो यस्यां स्वपक्षद्वयी
तुल्यार्थानि पदानि विस्फुटतया नो विद्रियन्ते क्वचित्।
व्युत्पन्नप्रतिपत्तिरेव तनुते सा 'चन्द्रलेखा' ततः
प्रारब्धोभयपक्षबोधनकरी सर्वोपकारी ह्यसौ।।5।।

दोषान्विताऽपि कुटिलाऽपि विमार्गगाऽपि
शुद्ध्यास्पदं शिवपदं कथमप्यवाप्ता।
केषां विशेषविदुषामपि मोदमेषा-
माधास्यति स्फुटपदा भुवि 'चन्द्रलेखा'।।6।।

उक्तेषु पद्येषु स्वत एव टीकाकर्त्रा श्रीकृष्णदत्तेन यथार्थं टीकायाः प्रयोजनं वैशिष्टयं च प्रत्यपादि। प्रायशः पुराणेषु स्तोत्रेषु यस्य वर्णनं भवति, तस्यैव सर्वशक्तिमत्वं श्रेष्ठत्वञ्च प्रतिपाद्यते । अत्र प्रश्नोऽयं समुदेति यत्सर्वे देवाः सर्वश्रेष्ठाः कथं भवितुमर्हन्ति?

**'एकं सद् विप्रा बहुधा वदन्ति'** (1.64.46) इति ऋग्वेदोक्तिः प्रमाणयति यद् एकं परमं सत्तत्त्वम्, परा शक्ति र्वा साधकस्य भावनानुसारेण भिन्ना सत्यपि तथाऽनुभूयते, दृश्यते वा यथा साधको वाञ्छति । गोस्वामिना तुलसीदासेनापि रामचरितमानसे प्रोक्तम्-

'जाकी रही भावना जैसी प्रभुमूरति देखी तिन तैसी।'

श्रीमद्भागवतेऽपि रङ्गमञ्चं प्रविशन्तं भगवन्तं श्रीकृष्णं दृष्ट्वा तत्स्वरूपं भिन्नं भिन्नं विलोक्यते- **'मल्लानामशनिर्नृणां नरपतिः स्त्रीणां स्मरो मूर्तिमानि'**त्यादिकथनेन तथ्यमिदं स्फारीभवति। यस्य देवस्याराधनायां भक्तः स्वभावनानुरूपं फलं प्राप्नोति तं देवं सर्वश्रेष्ठं मनुते वर्णयति च। तथापि देवविशेषे विन्यस्ते ग्रन्थे तस्यान्यदेवस्य गुणवर्णनपरा टीकाकरणे महच्छब्दसामर्थ्यं, भिन्नदेवस्य गुणादिज्ञानं नूनमेवापेक्षितं भवति । अस्यां दिशि मैथिलकवेः श्रीकृष्णदत्तस्य सामर्थ्यं परमाद्भुतं दरीदृश्यमानं वरीवर्ति । इति शम् ।

## Our Contributors

| | |
|---|---|
| **Dr . N.R. Kannan** | Principal, Rashtriya Sanskrit Sansthan (D.U.). G.n. Jha Campus Azad Park, Allahabad. U.P. Pin -211002 |
| **President Awardee**<br>**Prof. Haridatta Sharma** | Ex. H.O.D. Sanskrit<br>Allahabad University, Allahabad (U.P.) |
| **President Awardee**<br>**Prof. Vachaspati**<br>**Sharma Tripathi** | Ex. Head & Dean<br>Deptt. of Dharmashastra, K.S.D. Sanskrit<br>University, Darbhanga, Bihar. |
| **President Awardee**<br>**Prof. Umashankar Shama 'Riahi'** | Sansidhih, V-33 Vidyapuri<br>Kankarbagh, Patna- 800020 Bihar |
| **Prof. Kishor Chandra Mahapatra** | Ex. Head, Deptt. of Dharmashastra, Shri Jagannath Sanskrit University, Shri Vihar, Puri, Orrisa |
| **President Awardee**<br>**Prof. Brijesh Kumar Shukla** | Professor & Head Deptt. of Sanskrit and Prakrit Languages<br>Lucknow University<br>Lucknow (U.P.) |
| **Prof. G.S.R. Krishnamurti** | Deptt. of Sahitya, RashtriyaSanskrit Vidyapeeth Tirupati (Andhra Pradesh ) |
| **Prof. Gangadhar Panda** | Ex. V.C., Shri Jagannath Sanskrit<br>University, Shri Vihar. Puri, Orissa. |
| **Prof. Lalit Kumar Sahu** | H.O.D, Dharmashastra, Rashtriya Sanskrit Sansthan (D.U.) Shri Saďashiv Campus Puri, Orissa |
| **Prof. Ramkrishna Pandey `Paramhansa'** | H.O.D. Dharmashastra, Rashtriya Sanskrit Sansthan (D.U.) G.N. Jha Compus, Azad Park, Allahabad (U.P.) |
| **Prof. Minati Rath** | H.O.D. Puranetihas, Rashtriya Sanskrit Sansthan (D.U.) Shri Sadashiv Campus, Puri, Orissa |
| **President Awardee** | Ex. H.O.D. Sanskrit, |

| | |
|---|---|
| **Prof. Prabhunath Dwivedi** | Mahatma Gandhi Kashi Vidyapeeth (D.U.) Varansi. (U.P.) |
| **Dr. Himanshu Shekhar Tripathi** | K.M.B. Inter college, dhanawati math, siwan, Bihar . |
| **Dr. Sudhanshu Shekhar Mahapatra** | H.O.D. Dharmashastra, Rashtriya Sanskrit Vidyapeeth (D.U.) Tirupati, Andhra Pradesh |
| **Dr. Shipra Rai** | Associat Professor, Deptt. of Sanskrit, Tripura University, Tripura |
| **Mr. Damodar Mahanta** | Rashtriya Sanskrit Vidyapeeth (D.U.) Tirupati, Andhra Pradesh |
| **Mr. Saurabh Mandal** | Rashtriya Sanskrit Vidyapeeth (D.U.) Tirupati, Andhra Praded |
| **Mr. Vishvanath Hegade** | Asst. Professor (Vedant ) Rashtriya Sanskrit Sansthan (D.U.) Akalavya Campus, Agartala (Tripura) |
| **Dr. Pramodini Panda** | C/o Prof. Gangadhar Panda New Q.No-6, Sampurnanand Sanskrit University Varanasi( U.P. ) |
| **Dr. Udayanath Jha** | Associat Professor, Deptt. of Sahitya, Rashtriya Sanskrit Sansthan (D.U.) Sadashiv Campus Puri (Orissa ) |
| **Dr. Suresh Pandey** | Assistant Professor, Deptt. of Vyakaran Rashtriya Sanskrit Sansthan (D.U.) G.N. Jha Campus, Azad Park, Allahabad (U.P.) |
| **Shri Lal Vihari Mishra** | Lalita Ghat, Varanasi (U.P.) |
| **Prof. Ram Kumar Sharma** | Deptt. of Sahitya, Rashtriya Sanakrit Sansthan (D.U.) Jaipur Campus, Rajasthan |
| **President Awardee Prof. Abhiraj Rajendra Mishra** | Ex. V.C., Sampurnanand Sanskrit University Varanasi( U.P. ) |
| **Dr. Kishor Nath Jha** | Vill-Bittho,P.O-Sarisopahi Dist. Madhubani, Bihar. |
| **Prof Shail Kumari Mishra** | H.O.D. Sahitya, (Dean) Rashtriya Sanskrit Sansthan (D.U.) G.N. Jha Campus Azad Park, Allahabad. (U.P.) |
| **Prof. Girija Shankar Shartri** | Deptt. of Jyotish, Sanskrit Vidya Dharmvigyan Sankay, Banaras Hindu University, Varanasi (U.P.) |

| | |
|---|---|
| **Prof Vasant Kumar Bhatta** | Ex. Director Bhasha Sahitya Bhawan Gujarat University, Ahmedabad, Gujarat - 380009 |
| **Dr. Shree Ranjan Suri dev** | 'Shubhaishana' M. Co Factory Compus, Shree Nagar Colony, Near, Sanskar School, Sandalpur Patna -8600006 (Bihar) |
| **Prof. Ramakant Pandey** | Director, Mukt Swadhyay Peeth, Rashtriya Sanskrit Sansthan (D.U.) 56-57d Institutional Aria Janakpuri, New Delhi -58 |
| **Prof. Vibha Rani Dubey** | Professor, Deptt. of Sanskrit, Mahila Mahavidyalaya, Banaras Hindu Univer sity Varanasi (U.P.) |
| **Dr. Manjulata Sharma** | H.O.D . Deptt. of Sanskrit, St. Jons College Agara (U.P.) |
| **Dr. Aprajita Mishra** | Assistant Professor, Deptt. of Sahitya, Rashtriya Sanskrit Sansthan (D.U.) G.N. Jha Campus Azad Park, Allahabad (U.P.) |
| **Dr. Shailja Pandey** | Assistant Professor, Deptt. of Puranetihas, Rashtriya Sanskrit Sansthan ( D.U.) G.N.Jha Campus, Azad Park, Allahabad (U.P.) |
| **Dr. Vishnukant Tripathi** | Assistant Professor, Deptt. of Sanskrit, Kashi Naresh Govt. P.G. College Gyanpur, Bhadohi, (U.P.) |
| **Dr. Rashmi Yadav** | Assistant Professor, Deptt. of Sanskrit, Kashi Naresh Govt. P.G. College Gyanpur, Bhadohi, (U.P.) |
| **Pooja Mishra** | Reseaerch Scholar, Deptt. of Sanskrit, Delhi University, Delhi |
| **Ram Roop** | Assistant Librairian, Rashtriya Sanskrit Sansthan (D.U.) G.N. Jha Campus, Azad Park, Allahabad (U.P.) |
| **Prof. Lalit Kumar Tripathi** | H.O.D. Vyakaran, Rashtriya Sanskrit Santhan (D.U.) G.N. Jha Campus Azad Park, Allahabad (U.P) |
| **K.G. Sheshadri** | Rmv Clusters, Phase -2 Block -2, 5th Floor Flat- 503 . devinagar Lottegollahalli, Bangalore -560094 |

ISSN 0377-0575

Published under Gairvāṇī-Gaurava-Granthamālā
Series - 39

# Aryābheda-Prakāśikā

Edited By
Dr. Aprajita Mishra
Assistant Professor




Rashtriya Sanskrit Sansthan
Ganganath Jha Campus
Chandrashekhar Azad Park
Allahabad – 211002
2018

ISSN 0377-0575

# गैर्वाणी - गौरव - ग्रन्थमाला - 39

## गीर्वाणवाणीगौरवभूत - प्रत्न - नूतन - लघुग्रन्थानां सङ्कलनम्

गङ्गानाथझा-परिसरशोधपत्रिकायाः परिशिष्टम्

## आर्याभेदप्रकाशिका

सम्पादिका

**डॉ० अपराजिता मिश्रा**

सहायक आचार्या (साहित्य)




**राष्ट्रिय-संस्कृत-संस्थानम्**

गङ्गानाथझा-परिसरः,

चन्द्रशेखर-आजादोद्यानम्

प्रयागः - 211002

2018

# आर्याभेदप्रकाशिका

## प्रस्तावना

### सम्पादित ग्रन्थ परिचय –

प्रस्तुत लघुग्रन्थ का सम्पादन उपलब्ध एकमात्र हस्तलेख, जो गङ्गानाथ झा परिसर के हस्तलेख संग्रहालय में संरक्षित है, के आधार पर किया गया है। इस मातृका में पाँच पत्र हैं तथा इसकी अधिगम संख्या – 50517 है। मातृका की लिपि देवनागरी है। मातृका पूर्ण एवं पठनीय है। जहाँ पर पाठ अशुद्ध लगे हैं वहाँ नीचे पादटिप्पणी के रूप में सम्भावित शुद्ध पाठ का उल्लेख किया गया है तथा जहाँ पाठ नहीं पढ़े जा सके उन स्थलों को रिक्त स्थान के साथ प्रश्नवाचक चिन्ह रखते हुए (......?) छोड़ दिया गया है। प्रत्येक पृष्ठ पर औसत 7 से 8 पंक्तियाँ हैं। प्रतिपृष्ठ पंक्ति संख्या पृथक् है सात से लेकर दस तक पंक्तियाँ उपलब्ध सभी पृष्ठों में हैं। मातृका का आकार 24.3×8.2 से.मी. है। मातृका की पुष्पिका में ग्रन्थकार के नाम का उल्लेख स्पष्ट रूप से **दामोदर शर्मा** के रूप में किया गया है। मातृका लेखक के नाम का उल्लेख नहीं है। दामोदर शर्मा के पिता नारायण सूरि का भी नाम पुष्पिका में प्राप्त होता है। इनके समय के विषय में तथा इनसे सम्बद्ध अन्य कोई सूचना हस्तलेख की पुष्पिका से प्राप्त नहीं होती है। यह दामोदर शर्मा कौन है इस विषय में कहना कठिन है। कैटलागस् कैटलागरम् में दामोदर नामक अनेक ग्रन्थकारों का उल्लेख है परन्तु उनमें यह कौन से हैं यह सिद्ध करने का कोई साक्ष्य सम्प्रति प्राप्त नही हो सका है। क्यों कि 'आर्याभेदप्रकाशिका' नामक ग्रन्थ का नामोल्लेख भी कहीं प्राप्त नहीं होता है।

ग्रन्थकार ने 'पैंसठ' (65) आर्या छन्दों के माध्यम से आर्या के भेदोपभेदों का लक्षण प्रस्तुत किया है। छठवीं आर्या में दामोदर ने अपनी शैली का उल्लेख किया है –

**यस्याऽयं विषयं कान्ते कथयिष्यामि शोभने।**
**सैवोदाहरणं तस्य पश्य तत्रैव मानिनि।।7।।**

अतः इन्होंने भी लक्षण और उदाहरण एक साथ प्रस्तुत करने की शैली को अपनाया है। अर्थात् जो लक्षण है वही उस भेद का उदाहरण भी है। पिङ्गलाचार्य के लक्षणों को स्वीकार करते हुए वह बार-बार आचार्य पिङ्गल का उल्लेख करते हैं यथा – विषराट् (12), फणिराज (13,05), प्रभंजनाशनपति (15), विषधरवरेण (17) आदि सम्बोधन उनके लिए प्रयुक्त हैं। पिङ्गल के टीकाकार 'हलायुधवृत्ति' के लेखक हलायुध के द्वारा किए गए आर्या के 80 भेदों को यह स्वीकार नहीं करते। इनके स्थान पर यह मात्र पैंतालिस (45) भेद ही मानते हैं।

## 'आर्याभेदप्रकाशिका' में प्रतिपादित आर्या छन्द का स्वरूप एवं भेद-

भारतीय छन्दः शास्त्र में छन्दों का विभाजन स्थूलतः वृत्त और जाति दो रूपों में किया गया है। वैदिक परम्परा से प्राप्त वर्णिक छन्द वृत्त तथा लोक में उद्भूत होने के कारण ही सम्भवतः मात्रिक ही जाति कहे गए।[1] लौकिक छन्दों का विभाजन मात्रा वृत्त और वर्णवृत्त में किया गया है। वर्णवृत्त के पुनः तीन भेद पिङ्गल ने माने हैं सम, अर्धसम और विषम। मात्रिक छन्दों का वर्ग-विभाजन आरम्भिक आचार्यों ने आर्या, मात्रसमक और वैतालीय वर्गो में, छन्द की व्युत्पति के आधार पर किया है।[2] एक मूल से या समान मूलों से व्युत्पन्न छन्द एक वर्ग में रखे गए हैं। लक्षणकारों ने मात्रिक छन्दों का विभाजन द्विपदी, चतुष्पदी और अर्द्धसम चतुष्पदी रूप में भी किया है। आर्या द्विपदी मात्रिक छन्दों का प्रतिनिधित्व करता है, मात्रासमक चतुष्पदी का तथा वैतालीय अर्द्धसमचतुष्पदी का प्रतिनिधित्व करता है।

मात्रिक छन्दों में आर्या सर्वाधिक प्राचीन है। लक्षण ग्रन्थों में पिङ्गल के ग्रन्थ में भेद सहित इसका प्रथम बार उल्लेख प्राप्त होता है। आर्या का प्राकृत रूप गाथा है। काव्य के बीच इसका प्रथम प्रयोग कालिदास के ग्रन्थों में दिखाई देता हैं। आर्या प्राकृत का प्रधान छन्द रहा है। आर्या या गाथा का प्रयोग प्राकृत साहित्य में काव्य, धार्मिक सिद्धान्तों के निदर्शन, छन्दलक्षण आदि के लिए मुक्तक और प्रबन्ध दोनों ही शैलियों में किया गया है। प्राकृत की ही भाँति संस्कृत काव्य परम्परा में भी अन्य मात्रिक छन्दों की अपेक्षा आर्या का प्रयोग अधिक दिखाई पड़ता है। गाथा छन्द की प्रचीनता और लोकप्रियता का ज्वलन्त प्रतीक है हाल की 'गाथासत्तशती' (200-450 ई)। इसके 700 पद्य आर्या छन्द में निबद्ध हैं। प्राकृत के प्रसिद्ध छन्द के रूप में इसका प्रयोग दिखाई पड़ता है। प्राकृत काव्यों में तो कई ऐसे हैं, जो आर्या छन्द में ही निबद्ध हैं। प्राकृत में जा कर ही आर्या छन्द गाथा के नाम से प्रयुक्त हुआ है। विमलसूरि रचित 'पउमचरिय' (द्वितीय शती ई.) आर्यासप्तशती, वाक्पतिराय कृत गउडवहो (700-425ई.) धनपाल कृत भविसयत्तकहा (10वीं शती) तथा अब्दुल रहमान के संदेशरासक (12वीं शती का उत्तरार्द्ध) इत्यादि में गाथा का प्रयोग विशेष रूप से किया गया है। संस्कृत ही नहीं प्राकृत, अपभ्रंश तथा हिन्दी के काव्यों में भी आर्या छन्द का प्रयोग किया गया। 14वीं शती, के पश्चात आर्या छन्द के प्रयोग में ह्रास की स्थिति दिखाई देती है। 17वीं शती के बाद के काव्य में भी इस छन्द का प्रयोग वैचित्र्यार्थ ही कवियों द्वारा किया गया है। संस्कृत प्राकृत तथा हिन्दी तीनों ही साहित्य में आर्या का प्रयोग परवर्ती काल में न्यून होता दिखाई पड़ता है।

मात्रिक छन्दों की चर्चा पिंगल[3], जयदेव[4], जयकीर्त्ति[5], हेमचन्द्र[6], केदार[7], गंगादास[8] आदि ने की है। आर्या का लक्षण पिङ्गल मुनि के ग्रन्थ में जो प्राप्त होता है उसी का अनुवर्तन पश्चात् के लक्षणकारों ने भी किया है। आर्या के पूर्वार्ध भाग में सात गण तथा आठवाँ गण आधा तथा इसी प्रकार उत्तरार्द्ध भी होता है।[9] अर्थात् सम्पूर्ण आर्या छन्द में 15 गण होते हैं। विषम पद प्रथम, तृतीय, पञ्चम, सप्तम गण में जगण का प्रयोग वर्जित है।[10] परन्तु छठा गण अनिवार्यतः

जगण[11] (दोनो पादों में) अथवा विकल्प से नगणलघु पूर्वार्द्ध में तथा उत्तरार्द्ध में छठा गण जगण के स्थान पर एक मात्रा वाला (1) गण का प्रयोग ही सदा करना चाहिए।[12] आर्या छन्द में असमान लम्बाई वाली दो पक्तियाँ होती हैं। प्रथम पंक्ति का परिमाण साढ़े सात चतुर्मात्रिक गण हैं, जब कि दूसरी पंक्ति में पाँच चतुर्मात्रिक गणों के पश्चात एक लघु और फिर डेढ़ चतुर्मात्रिक गण होते है। अत: प्रथम पंक्ति में 30 और द्वितीय में 20 मात्राएं हुई। प्रत्येक पंक्ति की (12वीं) मात्रा के बाद यति होती है, अर्थात पंक्तियों में मात्राओं की संख्या क्रमशः 12+18+,12+15 होती है। इसी कारण आर्या को कभी कभी चार पादों का छन्द भी माना जाता है, जिनमें प्रथम और तृतीय पादों में से प्रत्येक में 12 मात्राएँ, द्वितीय में 18 मात्राएँ तथा चतुर्थ में 15 मात्राएँ मानी जाती हैं।[13]

आर्या को पिगंल, जयदेव, जयकीर्ति, हेमचन्द्र, केदार आदि ने द्विपदी माना है किन्तु बाद के ग्रन्थों में इसका उल्लेख चतुष्पदी के रूप में भी मिलता है। प्राकृत छन्द 'ग्रन्थ प्राकृत पैंगलम्, छन्द:कोश' में तथा कालिदास आदि ने इसमें चार पादों का विधान स्वीकार किया है। परन्तु आर्या छन्द में वर्णवृत की भाँति चार पादों का विधान करना अयुक्त है। क्यों कि इसमें 'पाद के स्थान पर पूर्वार्द्ध तथा उत्तरार्द्ध होते हैं। श्लोक में जहाँ यति=विराम होता है, वही तक उसका पाद मान लेना चाहिए। भामह ने ऐसा ही स्वीकार किया हैं। कालिदास ने 'श्रुतबोध' में आर्या की मात्रावृत्त की भाँति पाद व्यवस्था स्वीकार की है वह प्रमादजन्य है, क्यों कि आर्या मात्रावृत्त न होकर गणवृत्त है। इसी प्रकार अन्य गंगादास, कुमारभट्ट तथा जगन्नाथ ने भी जो आर्या को मात्रावृत्तात्मक माना है, वह अज्ञानवश ही है, ऐसा पिगंल छन्द:सूत्र के संस्कृत टीकाकर श्रीमदाखिलानन्द शर्मा ने अपनी व्याख्या में अपना मत प्रस्तुत किया है।[14] आर्या के भेद के विषय में भी प्राय: लक्षणकारों ने पिङ्गल का ही अनुगमन किया है। पिङ्गल ने आर्या के पथ्या, विपुला आदिविपुला, अन्त्यविपुला, उभयविपुला, चपला, मुखचपला, जघनचपला, महाचपला गीति, उद्गीति, उपगीति और आर्यागीति आदि भेद किए हैं।[15] वृत्तरत्नाकरकार ने पिगंल के द्वारा दिए गए आर्या भेदों मे से केवल पथ्या, विपुला, चपला, मुखचपला, जघनचपला, गीति, उद्गीति, उपगीति और आर्यागीति का उल्लेख किया है।[16] केदारभट्ट ने इन भेदों के भी दो उपवर्ग बनाते हुए पथ्या से जघनचपला तक आर्या प्रकरण में तथा गीति से आर्यागीति तक गीति प्रकरण में रखा है। छन्दोंमञ्जरीकार ने स्पष्ट रूप से आर्या के नव भेद माने हैं[17] – पथ्या, विपुला, चपला, मुखचपला जघनचपला, गीति, उपगीति, उदगीति तथा आर्यागीति। जयदेव ने पिगंलकृत सभी भेदों का ही उल्लेख किया है।[18] जयकीर्ति ने भी पिङ्गल के भेदों को स्वीकार करते हुए महाचपला के स्थान पर सर्वचपला भेद तथा आर्यागीति के स्थान पर उसके ही प्राकृत नामस्कंध (स्कंधक) का उल्लेख किया है। इसके उपभेद उपस्कन्ध, उत्स्कंध अवस्कंध बताए हैं।[19] जयकीर्ति ने गीति के रूपान्तर रिपुत्छंद, ललिता, भद्रिका, विचित्रा, ध्रुवक और मालागाथा का कथन किया है।[20] हेमचन्द्र ने गाथा के अन्तर्गत पथ्या, विपुला, चपला, गीति,

उपगीति, उद्गीति, रिपुच्छन्द, ललिता, भद्रिका, विचित्रा, स्कंधक, गीतिस्कंध संकीर्ण माला गाथा आदि जयकीर्ति द्वारा उल्लिखित भेदों के अतिरिक्त जातीफल से लेकर गाथिनी तक के भेदों को स्थान दिया है।[21] आर्या के शुद्ध मुख्य भेदों की गणना में अधिक मतभेद नहीं है। छन्द प्रस्तार के आधार पर आर्या के अवान्तर भेद भी किए जाते हैं। संस्कृत काव्य के साथ ही प्राकृत काल में इस छन्द के भेदोपभेद की संख्या उत्तरोत्तर बढ़ती गई जो लक्षण ग्रन्थों से प्रमाणित होता है।आर्या के असंख्य भेदोपभेद सम्भव है। वृत्तरत्नाकर की नारायणी टीका में उदिष्ट विधि से[22] आर्या के भेदोपभेद का निर्धारण किया गया है, वह इस प्रकार है

1.आर्या आठ करोड, उन्नीसलाख, बीस हजार (81920000)
2.पथ्या
3.विपुला
4.चपला पाँच सौ बारह (512)
5.मुखचपला दो लाख चार हजार आठ सौ (204800
6.जघमचपला दो लाख चार हजार आठ सौ (204800)
7.गीति सोलह करोड़, अड़तीसलाख, चालीस हजार (163840000)
8.उपगीति चार करोड़, नौ लाख साठ हजार (40960000)
9.आर्या गीति सोलह करोड़ अड़तालीस लाख, चालीस हजार[23] (163840000)

प्रस्तुत सम्पादित ग्रन्थ में ग्रन्थकार ने हलायुधकृत अस्सी आर्याभेदों को अस्वीकार करते हुए आर्या के मात्र पैंतालिस भेद ही माने हैं।

सातवें से ग्यारहवें पद्य पर्यन्त आर्या का सामान्य और विशेष लक्षण दिया गया है। तदुपरान्त बारहवें पद्य से पन्द्रहवें तक क्रमशः गीति, उपगीति, उद्गीति तथा अर्यागीति आदि आर्या भेदों के लक्षण हैं। सोलहवें छन्द से तेईसवें तक आर्या के भेद पथ्या, विपुला (आदि विपुला, अन्त्य विपुला) तथा चपला (मुखचपला, जघनचपला, महाचपला) के लक्षण दिए गए हैं। इसके पश्चात् छब्बीसवीं आर्या से आर्या के भेदोपभेदों का विस्तारपूर्वक कथन किया गया है। आर्या भेद प्रकरण में इन्होंने भी पूर्वछन्दशास्त्रकारों का उल्लेख किया है। भेदों की संख्या के विषय में कुछ अन्तर दिखाई पड़ता है। इसका कारण यह है कि दामोदर ने विपुला के दो भेद ही किए है जबकि वृत्तरत्नाकर की नारायणी टीका में तथा 'छन्दोमञ्जरी' में इसके तीन भेद किए गए है हलायुध ने भी इसके तीन भेद किए हैं। अतः दामोदर ने आर्या के मुख्य भेदों गीति, उपगीति आदि पाँचों में प्रत्येक के नव-नव अवान्तर भेद ही दर्शाए हैं। इस प्रकार 9×5=45 यह पैंतालिस उपभेद ही आर्या आदि पाँच भेदों के मानते हैं। दामोदर द्वारा किए गए नव भेद इस प्रकार हैं -

**1. आर्या**

पथ्यात्वविशिष्टा आर्या
विपुलात्ववती आर्या
आदिविपुलास्वरूपा आर्या
अन्त्यविपुलास्वरूपा आर्या
मुखचपला पथ्या आर्या
जघनचपला पथ्या आर्या
महाचपला पथ्या आर्या
मुखचपला अन्त्यपथ्या आर्या
महाचपला आदिविपुला आर्या

**2. गीति**

पथ्याभिन्ना गीति
विपुलारूपा गीति
आदिविपुलात्ववती गीति
अन्त्यविपुलात्ववती गीति
मुखचपला पथ्याभिन्ना गीति
जघनचपला पथ्याभिन्ना गीति
महाचपला पथ्याभिन्ना गीति
मुखचपला अन्त्यविपुलात्वती गीति
महाचपला आदिविपुलात्ववती गीति

**3. उपगीति**

पथ्यात्वविशिष्टा उपगीति
विपुलाभिन्ना उपगीति
आदिविपुलाभाववती उपगीति
अन्तिमविपुलास्वरूपा उपगीति
मुखचपला पथ्यात्वविशिष्टा उपगीति
जघनचपला पथ्यात्वविशिष्टा उपगीति
महाचपला पथ्यात्वविशिष्टा उपगीति
मुखचपला अन्तिमविपुलास्वरूपा उपगीति
महाचपला आदिविपुलाभाववती उपगीति

**4. उद्‌गीति**

पथ्यारूपा उद्गीति
विपुलात्ववती उद्गीति
आदिविपुलाभिन्ना उद्गीति
अन्त्यविपुलात्ववती उद्गीति
मुखचपला पथ्यारूपा उद्गीति
जघनचपला पथ्यारूपा उद्गीति
महाचपला पथ्यारूपा उद्गीति
मुखचपला अन्तिमविपुलात्ववती उद्गीति
महाचपला आदिविपुलाभिन्ना उद्गीति

**5. आर्यागीति**

पथ्यारूपा आर्यागीति
विपुलात्ववती आर्यागीति
अग्रिमविपुलाभिन्ना आर्यागीति
अन्तिमविपुलात्ववती आर्यागीति
मुखचपला पथ्यारूपा आर्यागीति
जघनचपला पथ्यारूपा आर्यागीति
महाचपला पथ्यारूपा आर्यागीति
मुखचपला अन्तिमविपुलात्ववती आर्यागीति
महाचपला अग्रिमविपुलाभिन्ना आर्यागीति

**गणों के प्रयोग के भेद से इन पैंतालिस के प्रस्तार आदि के द्वारा असंख्य भेद सम्भव हैं। जिनका उल्लेख दामोदर ने किया है। प्रत्येक आर्या भेद के कितने प्रकार सम्भव है उनकी गणना 'आर्याभेदप्रकाशिका' के अनुसार इस प्रकार है –**

| | | | |
|---|---|---|---|
| पथ्या आर्या | – 20274688 | अन्तिमविपुलामुखचपलार्या | – 102400 |
| विपुलार्या | – 20480000 | अग्रिमविपुलाअन्त्यचपलार्या | – 102400 |
| आदिविपुला आर्या | – 20377900 | आर्या | – 81920000 |
| अन्त्यविपुला | – 20377900 | गीति | – 163840000 |
| चपला आर्या | – 512 | उपगीति | – 40960000 |
| मुखचपला आर्या | – 102400 | उद्गीति | – 81920000 |
| अन्त्यचपलापथ्यार्या | – 102400 | आर्यागीति | – 655360000 |

इस प्रकार आर्या के लक्षण और भेदोपभेदों पर प्रणीत यह लघुकाय अप्रकाशित, अज्ञात एवं महत्त्वपूर्ण ग्रन्थ है, जिसमें आर्या के उपभेदों की दृष्टि से किञ्चित् नावीन्य लक्षित होता है।

अपराजिता मिश्रा

## सन्दर्भ एवं पादटिप्पणी

01. पिङ्गल – 5/1 वृत्ति, मूलतः मात्रिक छन्दों का विकास ग्रन्थ से उद्धृत, पृ – 15
02. पिङ्गल – अ. – 41, जय. – 1/4 जकी. – 1/21 तथा अ. – 5-6, वृ. र. – अध्याय– 2, हे. छं. अ. – 3-4
03. छन्दः शास्त्र – 4/14-47
04. जयदेवच्छदस्– 4/6-29
05. छन्दोऽनुशासन– 5-1-32 तथा 61-1-26
06. छन्दोंऽनुशासन– 3/53-73
07. वृत्तरत्नाकर– 2/1-20
08. छन्दोमंजरी– 5
09. स्वरा अर्द्धञ्चार्य्यार्द्धम् ।।5।। छन्दः सूत्रम्, पृ.–79
10. अत्रायुङ्न ज् – 16 पृ. 81 वहीं
11. षष्ठो ज् – 17, पृ. – 81, वहीं
12. षष्ठश्च ल् – 22, पृ. – 84, वहीं
13. मात्रिक छन्दों का विकास– पृ.–162 से उदधृत।
14. छन्दः सूत्रम्– पृ.– 85
15. पिङ्गल – 4/23-32
16. वृत्तरत्नाकर – 2/1-11
17. छन्दोमञ्जरी– 5/3
18. जयदेव – 4/6-41
19. जयकीर्ति – 5/1-18
20. वहीं – 5/19-24
21. हेमचन्द्र छंदोऽनुशासनम् – 4/1-24
22. उदिष्ट विधि वह प्रत्यय है जिससे अज्ञात वृत्तों के अभीष्ट भेद का ज्ञान किया जाता है।
23. छन्दोमञ्जरी – पृ.–282

# आर्याभेदप्रकाशिका

।। श्रीगणपतये नमः।।

आर्यापतिचरणाम्बुजमघहरं मतिप्रदं शुभदम्।
भक्त्या विचिन्त्य हृदि चिरमार्याभेदान्सलक्षाणान्ब्रूमः।।01।।

सानुस्वारश्च दीर्घश्च युक्तस्याद्यो विसर्गवान्।
वर्णप्रोक्तो गुरुः कान्ते विकल्पेनावसानगः।।02।।

द्वे मात्रे गुरुवर्णस्य लघोरेकैव सुन्दरी।
मात्राचतुष्टयस्यैव गणसंज्ञा प्रकीर्तिता।।03।।

अपि पञ्चविधा गणाश्च ते द्विगुरुः स्यादादिर्गुरुर्वरानने।
अयि मध्यगुरुः सलोचनेऽन्त्यगुरुः सर्वलघुर्विलासनी।।04।।

द्विगुरोर्गाविति संज्ञा मध्यगुरोस्तन्वि ज इति सर्वलघोः।
न्लावित्युवाच फणिराडाद्यान्तगरिष्टयोर्भसाविति।।05।।

यस्यायं विषयं कान्ते कथयिष्यामि शोभने।
सैवोदाहरणं तस्य पश्य तत्रैव मानिनि।।06।।

यस्या अर्धे प्रथमे सार्धर्षिगणास्स्युरुत्तरार्धे तु।
षष्ठगणे लघुरेकः शेषाः प्राग्वत्प्रिये सार्या।।07।।

अत्राम्बुजदलनयने विषमो जगणस्तु नैव संयोज्यः।
षष्ठः स एव योज्यः सर्वलघुर्वैव नियमेन।।08।।

सर्वलघुश्चेत्तस्मिन् द्वितीयवर्णाद्विपदसमारम्भः।
स च सप्तमो यदि स्यात् प्राग्वर्णादेव शशिमुखसः( ? )।।09।।

यदि पञ्चमोऽन्तिमार्धे सर्वलघुः तर्हि तन्वि तत्रापि।
प्राचो वर्णादेव प्राग्वद्वरतनु पदारम्भः।।10।।

तिस्त्रष्वेतासु चार्यासु कथिता नियमाश्च ये।
गीत्यादिष्वपि ते बाले मत्तेभगामिनि।।11।।

आर्या प्रथमार्धसमं कान्ते यदि जातमुत्तरार्धमपि।
चन्द्रानने तदानीमांशी विषराडुवाच तां गीतिम्।।12।।

आर्यान्तिमार्धतुल्यं जातं यदिपूर्वमर्धमपि।
तामुपगीतिं सुभगे ह्युवाच तन्वङ्गि फणिराजः।।13।।

आर्यापूर्वार्धं यत्तदुत्तरार्धं तथान्त्यार्धं।
पूर्वार्धं चेज्जातं कथिता हीन्द्रेण तन्वि सोद्गीतिः।।14।।

अस्याष्टाष्टगुणा द्वयोरपीन्द्वानने‍ऽर्द्धयोः सुदति स्युः।
आर्यागीतिः कथिता सा सुकुमारे प्रभंजनाशनपतिना।।15।।

आसूक्तासु च यस्यामवसानं त्रिषु गणेषु मुग्धे स्यात्।
लीला विलोलनयने कथिता हि वरेण सा पथ्या।।16।।

अर्धं विना नितम्बिनी नैव विरामो मनोहरे यस्याम्।
पार्वणजैवातृकमुखि कथिता विषधरवरेण सा विपुला।।17।।

यत्प्रथमार्धे सुन्दरि नास्त्यवसानं प्रिये भूयः।
अस्ति च तदुत्तरार्धे तदादिविपुलैव सा कथिता।।18।।

एवं यदि चरमार्धे नास्ति विरामश्च पूर्वार्धे।
अस्ति च सुधांशुसममुखि तदान्त्यविपुलाऽयतक्षि सा प्रोक्ता।।19।।

यस्यां द्वितीयसूर्यौ ( तूर्यौ ) मनोरमे रत्नदीपके जगुणौ।
गुरुवर्णमध्येयसंस्थो मृगाक्षि सोक्ता प्रिये चपला।।20।।

पूर्वार्ध एव यस्या नितम्बनीन्दीवराक्षि चपलायाः।
लक्षणमस्ति विलासिनि कथिता हीशेन सैव मुखचपला।।21।।

सा तन्वि जघनचपला कथिता चन्द्रानने यस्याः।
अन्त्यार्ध एव कान्ते मनोहरे भवति चपलात्वम्।।22।।

रंभासमोरु यस्या मृगाक्षि चाद्येऽन्तिमेऽर्धेऽपि।
चपला त्वमंबुजास्ये भवेत्तदा तन्वि सा महाचपला।।23।।

एतैश्च लक्षणैसर्वेऽशीति भेदा भवन्त्विति।
हलायुधादयश्छन्दोविद आहुरसुप्रिये।।24।।

रम्यत्वान्मन्मते पञ्चचत्वारिंशत् श्रुतिप्रियाः।
भेदा भवन्ति तन्वङ्ग्गि कथयिष्यामि तान्यपि।।25।।

पथ्यार्ययोः सुनेत्रे भवतस्तन्वङ्ग्गि लक्षणे यस्याम्।
पथ्यात्वविशिष्टार्या व्यवहर्तव्या तदा सैव।।26।।

कामिनि विपुलायोर्भयलक्षमस्ति यदि तर्हि सा कान्ते।
छन्दोविद्भिर्मानिनि कथिता विपुलात्ववत्यार्या।।27।।

आर्यादिविपुलयोर्यदि विधुसममुखि लक्षणे प्रिये भवतः।
घनपीनस्तनयुगले तदादिविपुलास्वरूपार्या।।28।।

कमलाक्षि लक्षणे चेदन्तिमविपुलार्ययोः प्रिये स्याताम्।
पञ्चेषु ज्वरकारिणि सान्ति ( म? ) विपुलास्वरूपार्या।।29।।

पथ्यागीत्योर्यस्यां भवतोऽमृतवाणि लक्षणे सुभगे।
पथ्या भिन्नागीतिर्विद्वद्वर्यैर्मनोरमे सोक्ता।।30।।

पार्वणशशिवदने यदि विपुलागीत्योश्च लक्षणे स्याताम्।
तर्हि प्राणप्रेयसि विपुलारूपा मृगाक्षि सा गीतिः।।31।।

गीत्यादि विपुलयोरपि गजगामिनि यत्र लक्षणे भवतः।
विद्वद्भिः स प्रथिता गीतिः सादि विपुलात्ववत्यबले।।32।।

अन्तिमविपुलागीत्योः स्तः सुन्दरि यत्र लक्षणे मुग्धे।
अवनिधरोत्तुंगस्तनि सान्तिमविपुलात्ववत्ययो गीतिः।।33।।

अयि यत्र लक्षणस्यात्पथ्यायाश्चोपगीतेश्च।
सा पथ्यात्वविशिष्टाकथिता विद्वद्भिरुपगीतिः।।34।।

लक्षणमस्ति विपुलासिनि यद्युपगीतेश्च विपुलायाः।
विपुलाभिन्ना मानिनि तर्ह्युपगीतिः प्रसिद्धासौ।।35।।

यत्रास्ति तन्वि लक्षणमुपगीतेश्चादिविपुलायाः।
उपगीतिरादिविपुलाभाववती सा प्रिये कथिता।।36।।

अन्तविपुलागीत्योः शशधरमुखि लक्षणे यत्र।
उपगीतिः शैलस्तनि सान्तिमविपुलास्वरूपोक्ता।।37।।

पथ्योगीत्योर्य यस्यां सुन्दरमुखि लक्षणे भूताम्।
अकथिता श्रुतिनयने पथ्यारूपामृगाक्षि उद्गीतिः।।38।।

विपुलोद्गीत्योः सुन्दरि सुधांशुमुखि लक्षणे चे ( ? )त्स्तः।
विपुलात्ववति कामिनि सोद्गीतिर्मेनकासमे कथिता।।39।।

प्रमदे स्याद्यदि लक्षणमुद्गीतेश्चादिविपुलायाः।
अग्रिमविपुलाभिन्ना प्रथिता सोद्गीतिरगने( ? ) कविभिः।।40।।

अन्तिमविपुलोद्गीत्योः प्रेयसि यदि लक्षणे भवतः।
उद्गीतिः सीमन्तिनि तदान्त्यविपुलात्ववत्यसौ प्रोक्ता।।41।।

पथ्यार्यागीत्योश्च भवतस्तन्वङ्गि लक्षणे चन्द्रमुखि।
आर्यागीतिः सुभगे पथ्यारूपा कवीश्वरैः कथिता।।42।।

आर्यागीतेर्मानिनि विपुलायाश्चापि लक्षणं सुभगे।
विपुलात्ववती प्रेयसि सार्यागीतिः प्रशंसितैणीव ( ? )।।43।।

आर्यागीतेश्च सुन्दरि मुखविपुलायाश्च लक्षणं स्याद्यस्याम्।
अग्रिमविपुलाभिन्ना सार्यागीतिर्मनोरमे हंसगते।।44।।

अन्तिमविपुलायाश्चेदार्या लक्षणं संभवति।
आर्यागीतिः सुन्दरि सान्तिमविपुलात्ववत्ययीं दुसमाख्ये।।45।।

कान्तेऽमी विंशतीर्भेदा चपलात्व विवर्जिताः।
बालानां शीध्रबोधाय प्रोक्ताः सर्वे पृथक् पृथक्।।46।।

एषु ये पञ्चपथ्यात्ववन्तो भेदाश्च सन्ति ते।
तिसृणां चपलानां हि लक्षणैर्मिश्रिता यदा।।47।।

जातास्तदा भवन्त्यन्ये भेदाः पञ्चदशापि च।
तथान्त्यविपुलाभाववन्तःस्युः पञ्च ये च ते।।48।।

चेदादि चपलात्वेन मिश्रिताः पञ्च ते परे।
तद्वत् प्राग्विपुलाभावविशिष्टाः पञ्च सन्ति ये।।49।।

तेऽप्यन्त चपलाभाववन्तो जाताः प्रिये तदा।
तदा तेऽप्यपरे पञ्च भेदाः कान्ते भवन्ति हि।।50।।

इत्थं गजेन्द्रगामिन्यार्यादीनां शुभाङ्गि पञ्चानाम्।
नव नव भेदा जाताः एवं बाणाब्धि परिमिताः सर्वे।।51।।

एते लक्षणघटिता गणप्रयुक्तास्तु कोटिशो भेदाः।
तान्यपि कथयाम्यधुना सर्वान्निष्कर्षसंख्ययास्तु शुभे।।52।।

सुन्दरि वसुवसुशास्त्रश्रुतिमुनिपक्षान्तरिक्षपक्षामितः।
पथ्यार्या स्यात्भेदा छन्दोविद्भिः प्रिये कथिताः।।53।।

प्रेयसि खाबरखखवसुनीरध्याकाशपक्षसंख्याकाः।
विपुलार्यायाः कामिनि भेदा गणिता प्रिये कविभिः।।54।।

कान्ते खशून्यरसमुनिमुनिलोकाकाशपक्षसंख्याकाः।
अग्रिमविपुलार्यायाः प्रथिता भेदास्तु विद्विद्भिः।।55।।

भूधरपयोधरे प्राग्विपुलार्या भेदतुल्यसंख्याकाः।
भेदा प्रोक्ताः अन्तिमविपुलार्याया अपीन्दुमुखि।।56।।

चपलास्वरूपपथ्यात्वयोगवत्यो मृगाक्षि चार्यायाः।
ज्ञेयाः शुभाङ्गि भेदा वराङ्गि वक्षावनीषुमिताः।।57।।

व्योमाम्बराब्धिपक्षान्तरिभूपरिमिता कुरङ्गाक्षि।
सुन्दरमुखि मुखचपला पथ्यार्यायाः प्रिये भेदाः।।58।।

अन्तिमचपलापथ्यार्याया अपि रत्नदीपके कान्ते।
तावन्त एव भेदा स्मितानने स्युः करींद्रगते।।59।।

कवयो वदन्ति तस्या अपीन्दुमुख्येव तावतो भेदाः।
अन्तिमविपुलात्वं मुखचपलात्वं यत्राचार्यात्वं।।60।।

अप्यग्रिमविपुलान्तम चपलार्यायास्तथैव विधुवदने।
तावन्त एव कान्ते वराङ्गि भेदाः बुधै प्रोक्ताः।।61।।

एवं शून्यचतुष्टयपक्ष-गृहभूमिसिद्धिसंख्याकाः।
आर्याभेदाजाताः छन्दोविद्भिः प्रिये गणिताः।।62।।

गीतेस्त्वार्या भेदद्विगुणित भेदा भवन्ति हंसगीते।
गीति चतुर्थांशमिता उपगीते स्युः प्रिये भेदाः।।63।।

आर्याभेदैस्तुल्या मृगाक्षि भेदास्युरुद्गीतेः।
अपि गीति चतुर्गणिता* आर्यागीतेर्मनोहरे भेदाः।।64।।

अथ ये गीत्यादीनां नवनवभेदास्युरार्यायाः।
तद्भेदानां संख्या अर्योपमानेन✪ ।।65।।

इत्थं नारायणिना दामोदरशर्मणा अर्य..शिष्येण संतुष्ट्यर्थं विदुषामार्याभेदप्रकाशिका रचिता इति श्रीनारायणसूरिसूनुदामोदरेण विरचिता आर्याभेदप्रकाशिका समाप्ता ।

* चतुर्गुणिता

✪ आर्योपमानेन



ISSN 0377-0575

Published under Gairvāṇī-Gaurava-Granthamālā
Series - 40

# Vaidyanātha Bhattācārya Praṇitam
# Tulasi - Dūtam

Edited By
Dr. Ram Kishor Jha
Curator (i/c)




Rashtriya Sanskrit Sansthan
Ganganath Jha Campus
Chandrashekhar Azad Park
Allahabad – 211002
2018

..........................................................................................................................................

| | | |
|---|---|---|
| **ISSN** | : | **0377-0575** |
| **BOOK** | : | **Vaidyanātha Bhattācārya Praṇitam Tulasi - Dūtam** |
| **Edited By** | : | **Dr. Ram Kishor Jha** |
| **Published by** | : | **Rashtriya Sanskrit Sansthan**<br>**Ganganath Jha Campus**<br>**Chandrashekhar Azad Park**<br>**Allahabad – 211002** |
| **©** | : | **Publisher** |
| **First Edition** | : | **2018** |
| **Printed at** | : | **Academy Press**<br>**Daraganj, Allahabad - 211006** |

ISSN 0377-0575

# गैर्वाणी - गौरव - ग्रन्थमाला - 40

## गीर्वाणवाणीगौरवभूत - प्रत्न - नूतन - लघुग्रन्थानां सङ्कलनम्

गङ्गानाथझा–परिसरशोधपत्रिकायाः परिशिष्टम्

वैद्यनाथभट्टाचार्य-
प्रणीतम्

# तुलसीदूतम्

सम्पादकः
डॉ॰ रामकिशोरः झा
संग्रहाध्यक्षः (प्रभारी)



राष्ट्रिय-संस्कृत-संस्थानम्
गङ्गानाथझा–परिसरः,
चन्द्रशेखर–आजादोद्यानम्
प्रयागः – 211002
2018

ISSN : 0377-0575
कृतिः : वैद्यनाथभट्टाचार्यप्रणीतं तुलसीदूतम्
सम्पादकः : डॉ० रामकिशोरः झा
प्रकाशकः : राष्ट्रिय-संस्कृत-संस्थानम्
गङ्गानाथझा-परिसरः
चन्द्रेशेखर-आजादोद्यानम्,
प्रयागः - 211002


प्रथमं संस्करणम् : 2018 ई.
मुद्रकः : एकाडेमी - प्रेस
दारागंज, इलाहाबाद - 211006

# आत्मनिवेदनम्

परमप्रमोदस्य विषयोऽयं यद् बङ्गप्रान्तोद्भवेन श्रीमता वैद्यनाथभट्टाचार्येण प्रणीतं सर्वथाऽप्रकाशितं 'तुलसीदूता'ख्यं सन्देशकाव्यमिदमिदानीं मया सुसम्पाद्य विदुषां समक्षं प्राकाश्यमानीयते। काव्यरत्नस्यास्य बङ्गलिप्यां समुपनिबद्धा एका मातृका राष्ट्रियसंस्कृतसंस्थानस्य गङ्गानाथझा-परिसरीये पाण्डुलिपिग्रन्थागारे सुरक्षिता विद्यते। अपरा च मातृका बङ्गीयसंस्कृतसाहित्यपरिषदि, कोलकातायां संरक्षिता वरीवर्ति। किन्तु कृतेऽपि प्रयासबाहुल्ये बङ्गप्रान्तीया वाञ्छितमातृका मया नैव समासादिता। एतदर्थं गङ्गानाथझा-परिसरेऽवस्थितामेकामेव मातृकामाधारीकृत्याप्रकाशितं सन्देशकाव्यमिदं मया ग्रन्थसंरक्षणधिया सुसम्पाद्य गङ्गानाथझाजर्नलमध्ये गैर्वाणीगौरवग्रन्थमालायां प्राकाश्यमानीतम्।

लौकिकसंस्कृतवाङ्मये कविकुलगुरुणा महाकविना कालिदासेन विरचितं 'मेघदूता'ख्यं खण्डकाव्यं सन्देशकाव्यत्वेन प्रथितमिति विदितचरम्। तदनुकृतौ परवर्तिभिरन्यैरपि भारतीयैः कविभिः प्रायेण पञ्च-पञ्चादशत्संख्याकानि दूतकाव्यानि सन्देशकाव्यानि वा संगुम्फितानि। तानि सर्वाण्यपि काव्यजातानि प्रो. चिन्ताहरणचक्रवर्तिमहाशयै[1]: आङ्लभाषायां विलिखिते **'origin and development of Duta Kavya- literature in Sanskrit'** नाम्नि शोधनिबन्धे सुविशदं विवेचितानि सन्ति। प्रो. चक्रवर्तिमहाशयानां शोधनिबन्धोऽयं **'The Indian Historical Quarterly'** नामधेये जर्नलमध्ये तृतीयभागे प्रकाशितोऽस्ति[2]। निबन्धेऽस्मिन् नारायणकवेः 'सुभगसन्देश'- नामधेयस्य सन्देशकाव्यस्याप्युल्लेखोऽवाप्यते। तत्काव्यस्यान्तिमे भागे सन्देशकाव्यस्य वैशिष्ट्यख्यापनमुखेन कविरयं सुस्पष्टं लिखति-

'विद्वत्प्रीत्यै बहुरससुधास्यन्दि सन्देशकाव्यमिति[3] ।'

एतावता निश्चप्रचमेतत्कथयितुं शक्यते यन्मेघदूतसरणिमनुसृत्यान्यैरपि भारतीयैः कविभिराचरितानि दूतकाव्यानि सन्देशकाव्यानि वा सहृयहृदयेषु सद्यःसहजानन्द-समुल्लासजननक्षमानि सन्तीति न तिरोहितं विद्वल्लोचनेभ्यः। साम्प्रतं स्थालीपुलाकन्यायेन कतिपयेषां सन्देशकाव्यानामुल्लेखोऽत्र विधीयते-

सन्देशकाव्यप्रणयनपरम्परायां प्रायेण जैनकवीनां विशिष्टं स्थानमस्तीति विदितमेव मतिमताम्। महाकविकालिदासादनन्तरं खिष्टाब्दस्य 814 वर्षे लब्धजन्मनः 'जिनसेन'नाम्नः

जैनकवेरुल्लेखोऽवाप्यते। अनेन 'जिनसेन'कविना पार्श्वनाथतीर्थङ्करस्य जीवनवृत्तमाश्रित्य चतुर्थसर्गात्मकं 'पार्श्वनाथाभ्युदया'ख्यं सन्देशकाव्यमारचितम्। काव्येऽस्मिन् कविना जिनसेनाचार्येण मेघदूतकाव्ये समस्यामुत्पाद्य प्रतिपद्यस्य पंक्तिद्वयं कालिदास -प्रणीतमेव यथावत् स्थापितम्, केवलं पद्यस्य तृतीयचरणे चतुर्थचरणे च स्वसर्जनशक्त्या इतिवृत्तानुरूपं स्वातन्त्र्येण पदबन्धनं कृत्वा प्रतिपद्ये चरणद्वयं न्ययोजि। यद्यपि समस्यापूर्तिकारणादत्रत्यं कथानकं किञ्चिच्छिथिलमिव प्रतिभाति तथापि कलाकौशलदृष्ट्या भावगाम्भीर्यदृष्ट्या च काव्यमिदं सर्वथा श्लाघनीयतामवाप्नोतीति वयं निश्चप्रचं वक्तुं शक्नुमः।

एवमेव ख्रिष्टाब्दस्य द्वादशशताब्द्यां लब्धजन्मना '**श्रुतिधर**'नाम्ना सुविख्यातेन **धोयीकविराजेन** 104-पद्यात्मकं 'पवनदूता'ख्यं काव्यरत्नमारचितम् । संक्षेपेण तत्रत्यमितिवृत्तमत्र प्रस्तूयते-

बङ्गालप्रान्ते गौडदेशाधिपतेर्बल्लालसेनस्य पुत्ररत्नं **लक्ष्मणसेनः** ख्रिष्टाब्दस्य द्वादशशताब्द्यां शासनमकार्षीत्। तस्यैव नृपतेस्सभापण्डितोऽयं **धोयीकविरिति जयदेवस्य श्रीगीतगोविन्द-मभिलपति**[4]। यदा हि सामन्तः **लक्ष्मणसेनो**ऽयं स्वदिग्विजयक्रमेण दक्षिणदिग्भागेऽवस्थितं मलयाचलमाससाद, तदा तत्रासौ 'कुवलयवती'ति नामधेयामेकां गन्धर्वकन्यां ददर्श। साऽपि गन्धर्वकन्या प्रथमदर्शनेनैव नृपतिचक्रवर्तिनं **लक्ष्मणसेनं** प्रति अनुरक्ता जाता। कालान्तरे यदाऽसौ नृपतिः स्वराजधानीं प्रति पुनराजगाम, तदा 'कुवलयवती' नामा सा गन्धर्वकन्या स्वानुरागहेतुभूतस्य नृपतेर्लक्ष्मणसेनस्य विरहवेदनायां व्याकुला सती वसन्तपवनमेव दौत्यकर्मणि नियोज्य स्वप्रियतमं प्रति विरहसन्देशं प्रेषयति। काव्येऽस्मिन् कविरयं आमलयाचलाद् बङ्गप्रान्तेऽवस्थितं 'विजयनगरं' यावत् समागतस्य मार्गस्य मनोहारि वर्णनं प्रस्तौति। काव्यरत्नमिदं मनमोहनचक्रवर्तिमहाशयेन प्रथमतः सुसम्पाद्य 'एशियाटिक-सोसाइटी ऑफ बङ्गाल'नाम्नि जर्नलमध्ये 1905 ख्रिष्टसम्वत्सरे प्राकाश्यमानीतम्[5]। काव्यरत्नस्यास्य भूमिकाभागे मनमोहनचक्रवर्तिमहाशयेन षोडशसंख्याकानां दूतकाव्यानामथ च तत्तत्काव्यकर्तृणामेका तालिका प्रदर्शिता। तदनु गच्छता कालेन 1926 ख्रिष्टसम्वत्सरे 'संस्कृतसाहित्यपरिषद्-सिरीज-13 मध्येऽपि प्रो. चिन्ताहरणचक्रवर्तिमहाशयेन स्वरचितसुविस्तृतभूमिका- सटिप्पणसंवलितं **पवनदूताख्यं** काव्यरत्नमिदं सुसम्पाद्य प्राकाश्यमानीतमिति 'न्यू कैटलागेज्-कैटलागोरुम-नामधेयः पाण्डुलिपिकोशग्रन्थोऽभिधत्ते[6]।

अस्यामेव परम्परायां ख्रिष्टाब्दस्य सप्तदशशताब्द्यां समुद्भवेन 'वादिचन्द्रसूरी'ति व्यपदिष्टेन जैकविनापि पवनदूताभिधमपरं सन्देशकाव्यमारचितम्। काव्येऽस्मिन् उज्जयिनीनगरस्य नृपतिः विद्यानरेशः केनापि विद्याधरेणापहृतां 'तारा'नामधेयां स्वपत्नीं प्रति पवनमाध्यमेन सन्देशं प्रेषयति। एतदपि काव्यं **काव्यमालायाः** त्रयोदशगुच्छे प्रकाशितं वरीवर्ति। अनन्तरं 1914 ख्रिष्टसम्वत्सरेऽपि

हिन्दी–जैनसाहित्यसिरीज– माध्यमेनापि 'वादिचन्द्रसूरि'प्रणीतं 'पवनदूता'ख्यं काव्यमिदं पुनर्मुद्रितं जातमिति 'न्यू कैटलागेज्–कैटलागोरुम'नामधेयः पाण्डुलिपिकोशग्रन्थः विवृणुते [7]।

नैतावन्त्येवापि तु सप्तदशखिष्टसम्वत्सरेऽपि बङ्गप्रान्तोद्भवेन वैशेषिकदर्शनस्य प्रख्यातपण्डितेन विश्वनाथसिद्धान्तपञ्चाननभट्टाचार्येणापि 'पवनदूत'नाम्ना सन्देशकाव्यमेकमारचितम्। काव्यरत्नस्यास्य मातृका 'अमेरिका'–देशे सुरक्षिताऽस्तीति 'न्यू कैटलागेज्–कैटलागोरुम'– नामधेयः कोशग्रन्थः स्पष्टयति। एतदपि 'पवनदूता' भिख्यं काव्यरत्नमद्यपर्यन्तमप्रकाशितमेवास्ति।

एवमेव पञ्चदशविक्रमसम्वत्सरे सङ्गमपुत्रेण 'विक्रम'नामधारिणा जैनकविना महाकविकालिदासप्रणीत–'मेघदूत'पद्येषु समस्यामुत्पाद्य तन्निराकरणव्याजेन 123 पद्येषु 'नेमिदूता'ख्यं सन्देशकाव्यमेकं विरचितम्। यदा हि जैननृपतिर्नेमिनाथः स्वराज्यस्य सर्वविधमैश्वर्यं परित्यज्य ऐहिकसुखभोगाद् विरक्तो भवति, तदा तदीया धर्मभार्या पर्वतमेकं दौत्यकर्मणि नियोज्य स्वपत्युः पार्श्वे स्वकीयं सन्देशं प्रेषयति। 'नेमिदूता'भिधं सन्देशकाव्यमिदं काव्यमालायाः द्वितीये गुच्छे प्रकाशितं विद्यते। काव्येऽस्मिन् कविरयं स्वकाव्यनिर्मितिप्रकर्षानुसारं प्रतिपद्ये त्रिषु चरणेषु इतिवृत्तानुरूपं वर्णनं कृत्वा चतुर्थचरणे महाकवेः कालिदासस्य मेघदूतपंक्तिं यथावदुपस्थापयति। तत्रत्यं पद्यद्वयमत्र निदर्शनत्वेनोपस्थाप्यते। तद्यथा–

प्राणित्राणप्रवणहृदयो बन्धुवर्गं समग्रं
हित्वा भोगान्सह परिजनैरुग्रसेनात्मजां च।
श्रीमान्नेमिर्विषयविमुखो मोक्षकामश्चकार
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु।।1।।

अपि च –

स तत्रोच्चैः शिखरिणि समासीनमेनं मुनीशं
नासा न्यस्तानिमिषनयनं ध्याननिर्धूतदोषम्।
योगासक्तं सजलजलदश्यामलं राजपुत्री
वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श।।2।।

यथा हि बङ्गप्रान्ते मेघदूतसरणिमनुसृत्य प्रभूतसंख्यायां दूतकाव्यानां प्रणयनमभूत्तथैव दक्षिणाभारते केरलप्रान्तोद्भवैः कविभिरपि मेघदूतस्यानुकृतौ बहूनि दूतकाव्यानि/सन्देशकाव्यान्यारचितानि, तान्यखिलानि काव्यजातानि डॉ. एन. पी. उन्नीमहोदयेन 'केरलीयसंस्कृतसन्देशकाव्यसमीक्षा'–नामधेये ग्रन्थरत्ने सुविशदं विवेचितानि सन्ति। डॉ. उन्नीमहोदयस्य ग्रन्थरत्नमिदं नवदेहल्यां स्थितेन राष्ट्रियसंस्कृसंस्थानेन 1996 खिष्टसम्वत्सरे

प्रकाशितं विद्यते। ग्रन्थविस्तरभयात्तेषां सन्देशकाव्यानामुल्लेखं परिहृत्य प्रसङ्गवशादत्र सम्पाद्यमानस्य 'तुलसीदूत'स्येदिवृत्तं मया प्रस्तूयते।

बङ्गप्रान्तोद्भवेन श्रीमता वैद्यनाथभट्टाचार्येण 1784 खिष्टसम्वत्सरे विरचितेऽस्मिन् 'तुलसीदूता'ख्ये काव्ये वृन्दावने स्थिताभिः श्रीराधाप्रमुखाभिर्गोपबालाभिः तुलसीपादपं दौत्यकर्मणि नियोज्य मथुराप्राप्तं श्रीकृष्णं प्रति सन्देशः संप्रेष्यते। विप्रलम्भशृङ्गारप्रधानेऽस्मिन् दूतकाव्ये समागतानि पद्यानि प्रायेण मन्दाक्रान्ताछन्दसि विरचितानि सन्ति। प्रसङ्गवशात् कुत्रचिन्मालिनी-शिखरिणि-वसन्ततिलका-शार्दूलविक्रीडितप्रभृतीनां छन्दसां प्रयोगोऽत्र कविना कृतः। निदर्शनत्वेन तुलसीदूतस्य कतिपयानि पद्यानि प्रस्तूयन्ते-

आसंसारं विदितमयि ! ते नाम-नावं गृहीत्वा
गत्वा पारं भवजलनिधेराश्रमास्वं लभन्ते।
एतच्चित्रं वयमिह भवे दुःखसिन्धौ निमग्नाः
प्राप्यापि त्वां व्रजकुलपते ! गोपिकाप्राणबन्धो[1]।।

तथा च-

दत्तं स्थानं हृदयमनिशं वासतस्तत्सरोजं
मत्वा कुद्धो नवघनरुचे कृष्णचन्द्रेति मन्ये।
नान्यत्स्थानं तव पदरजो योग्यमालोकि लोके
चेतःपद्मं न कुमुदमहो ! मादृशां नैष दोषः[2]।।

अपि च- एकं पुष्पं सुरभिविमले पादपद्मे त्वदीये
दातुं चित्ते नवघनरुचे वासना चेत्कदाचित् ।
सामीप्यन्ते भजति सततं नूनमेतद् विचित्रं
दत्वा हारं बहुसु कुसुमं यद्वयं दूरतस्थाः[3]।।

गोप्यः स्ववाञ्छानुरूपं दौत्यकर्मनिष्पादनार्थं तुलसीमेवम्प्रकारेण निवेदयन्ति-

अयि वृन्दे वन्द्ये ! किमपरमनिन्द्ये त्वयि वयं
वदामः श्यामाङ्घ्रेरुपरि तव वासो यदनिशम् ।
सदा तस्याख्यानैः क्षयितततनवः शून्यहृदया
दयालेशः कस्य क्षणमपि न चास्मासु भवति[4]।।

एवञ्च

एकं दलं यदि हरेश्चरणारविन्दे भक्त्या ददाति तव तस्य फलं कियच्चित्।
ब्रह्मादिभिर्न हि सुरैर्विदितं तदस्ति किन्तत्फलं मनुजभूतजना वदामः[3]।।

अन्यच्च- आस्ते श्रुतं बहुश एव पुरा पुराणे
काशीश्वरः स्मरहरः पुरुषप्रधानः ।

**अङ्गीचकार सहसा किल कालकूटं**
**त्राणाय सर्वजगतां जगतां हितैषी[4]।।**

अस्तु।

साम्प्रतं मया स्वसम्पादितपुस्तकस्याधारभूतायाः मातृकायाः परिचयो दीयते-

❖ मातृकाया उपलब्धिस्थानम्-राष्ट्रियसंस्कृतसंस्थानम्, गङ्गानाथझा-परिसरीयः पाण्डुलिपिग्रन्थागारः।

❖ अधिगमसंख्या-39412.

❖ ग्रन्थकारस्याभिधानम्-वैद्यनाथभट्टाचार्यः।

❖ पत्राणां संख्या-1-6.

❖ पूर्णता/अपूर्णता, पूर्णः।

❖ मातृकायाः लिपिः-बङ्गलिपिः।

❖ प्रतिपत्रे पंक्तयः-5.

❖ प्रतिपंक्तौ अक्षराणि-58.

❖ स्थितिः- सम्यक्।

उपर्युक्तामेकामेव मातृकामाधारीकृत्य सम्पादितेऽस्मिन् काव्यरत्ने काश्चन त्रुटयः किं वा मुद्रणजन्यदोषा अपि भवितुमर्हन्ति, तदर्थं क्षमायाचनैकशरणम्। सुधियस्तत्तद्दोषपरिमार्जनपुरस्सरं काव्यस्यास्य रसास्वादनं करिष्यन्तीति विनम्रनिवेदनमस्माकम्।

अन्ततोगत्वा महाकालसंहितायामुल्लिखितेन निम्नपद्येन भूमिकाविलेख-नादत्रैवोपरम्यते-

**मिश्रिताभ्यां पयोऽम्बुभ्यां क्षीरं हंसो यथा पिबेत्।**
**शुभाशुभाभ्यां हि तथा शुभमेव श्रयेत् सुधीः।। इति शम्।।**

**विद्वच्चरणानुचरः**
**झोपाह्वो डा. रामकिशोरः**
**संग्रहाध्यक्षः ( प्रभारी )**

**सन्दर्भाः**

1. Prof. Chintaharan Chakravarti, M.A. Kavyatirtha was born in May, 1900. Educated at Calcutta Sanskrit Collegiate School, St. Paul's college, city College, Post-Graduate Classes, Calcutta university. Graduated with Honors in Sanskrit 1923, M.A. in Sanskrit 1925 and in Indian Vernaculars 1930. Lecturer in Sanskrit and Bengali, Bethune College, 1929-1940. Presidency College, 1941 January-July, Professor, Krishnanagar College, July 1941, Edited Pavandûta of Dhoyi, Manodûta of Visnudasa and Sataranjakutuhala. Compiled and edited descriptive cattalouge of Sanskrit and Bengali Manuscripts in Royal Asiatic Society of Bengal (Vol-VII and VIII). Author of numerous papers on different aspects of Ancient Indian History and

Culture (especially Sanskrit and old Bengali literature) published in different oriental Journal's and referred to in a number of standared work. The Jaina Gazette. Vol. 44, Number 1-2, year 1947. page N. 60

2. The Indian Historical Quarterly, Vol-III, Page No.-273-297
3. नारायणकविप्रणीतः सुभगसन्देशः, जर्नल ऑफ एशियाटिक सोसाइटी, कोलकाता। खिष्टाब्दः 1884, पृष्ठसंख्या - 449
4. वाचः पल्लवयत्युमापतिधरः सन्दर्भशुद्धिं गिरां
   जानीते जयदेव एव शरणः श्लाध्यो दुरूहद्रुतेः।
   शृङ्गारोत्तरसत्प्रमेयरचनैराचार्यगोवर्धन-
   स्पर्धी कोऽपि न विश्रुतः श्रुतिधरो धोयी कविक्ष्मापतिः।। श्रीगीतगोविन्दम्, 1/4
5. जर्नल ऑफ एशियाटिक-सोसाइटी, खिष्टाब्दः 1905, पृष्ठ संख्या- 41 - 68
6. न्यू कैटलागेज्- कैटलागोरुम, वाल्युम-IX, पृष्ठ संख्या-304
7. न्यू कैटलागेज्-कैटलागोरुम, वाल्युम-XI, पृष्ठ संख्या-247
8. तुलसीदूतम्, 27
9. तुलसीदूतम्, 28
10. तुलसीदूतम्, 29
11. तुलसीदूतम्, 34
12. तुलसीदूतम्, 36
13. तुलसीदूतम्, 40



# वैद्यनाथभट्टाचार्यप्रणीतम्

## तुलसीदूतम्

### ॐ नमः श्रीकृष्णाय ।।

नाथे याते मधुपुरमतिक्षोभविभ्रष्टचित्ता
गोपी काचित् कलयति सखीरन्तरङ्गी समीपे।
प्राणत्यागादतिगुरुतरे तस्य बन्धोर्वियोगे
केन स्थेयं मुहुरिति वचो व्याकुलास्तां बभाषे।।१।।

पुरा प्राप्तप्राणा प्रणयवशतामेत्य विपुलं
कलालेशं तावद् युगमितवती सौम्यहृदया।
वियोगे तद्बन्धोः सकलमनुतापस्य विषयो
न जानेऽहं भाले विधिलिखनमास्ते किमपरम्।।२।।

पुरा संपीयूषार्णवसलिलजाता प्लवतनु-
स्तदाख्याने प्राणेश्वरि ! सततमानन्दहृदया।
अहं सैवेदानीं जलदजलदश्यामवपुषो-
र्वियोगव्यालान्मे विषजलधिजा दग्धहृदया।।३।।

किमन्यद् वक्तव्यं विकचनवनीलोत्पलरुचे-
स्तनोस्तुल्यं तावत् सुरभिनवनीलोत्पलमिदम्।
मनोऽत्यन्तं क्लिश्नात्यनिशमनिशं तस्य वपुषो
मुरारेरामोदैर्मुदितमयि! बन्धुप्रियतमे! ।।४।।

यदा म्लानैर्म्लानिः समजनि मयैतन्मुखरुचेः
कृपासिन्धुर्बन्धुस्तदनु मुखमाश्लिष्य सलिलैः।
न चैतत्ते युक्तं कथमपि मदीयप्रियतमे!
तदा शान्तिं स्निग्धैर्बहुभिरिति वाक्यैः समकरोत्।।५।।

मयैतस्यास्तस्याः पथि पथि खरैः सूर्यकिरणैः
परिश्रान्तिश्रान्त्या जनितमुखमालिन्यमतुलम्।
न कोऽप्येवं लोके प्रियजन इहालोकि मनसा
समाश्वासं वाक्यैः सकृदपि करोत्यब्जवदने।।६।।

इदानीं व्यामोहाद्विगलितमनल्पं श्रमजलं
दुनोत्यन्तं स्वान्तं तदिदमयि! वेद्यं न वचसा।
तदीयाङ्गासङ्ग - श्रमजनितनीरं परमनु-
व्यवस्यन्त्याः सत्यं वद सखि! सहेऽहं कथमिदम्।।७।।

इदं नीलं वामो जनयति मनःश्वासमसमं
समालोकादस्य प्रियतमकराकर्षणमहो!।
स्फुरत्युच्चैर्नित्यं कथमपि निवार्यं हृदि नु कैः
करिष्यामि प्रेयः स्मरणविरसा किं किमधुना।।८।।

न मे चित्ते किञ्चित् स्फुरति नवनीलाम्बुदरुचिं
विनान्यत् प्राणेशं सरसिजमुखं नन्दतनयम्।
यथास्माकं चेतस्त्वरति सहसाऽऽनन्दजनिका-
स्तथाऽचिन्त्यं चिन्तामणिविरहचिन्ताजलनिधिम्।।९।।

मनोऽस्माकं ज्ञातुं निविडगहने नूनमधुना
नमत्येको नाथः सघनघनवृन्दद्युतिधरः।
न चास्मत्प्रेमाब्धिं मधुपुरमगाज्जातु सहसा
समुल्लङ्घ्य प्राणप्रियतमविभुः पीतवसनः।।१०।।

सदोद्विग्नाः खिन्नाः प्रियतममुखालोकविरहे
वसामः केनाङ्गैर्गुरुभिरयि! सार्द्धं किल वयम्।
सखि! त्यक्त्वा गेहं गमन-गमनं श्रेय इति ताः
परामर्षं चक्रुर्विरहभुजगी दष्टहृदया।।११।।

ततः पाणौ सख्या सपदि करमारोप्य सहसा
सखीवृन्दैर्वृन्दावनविपिनमुच्चैः समगमत्।
वदन्ती गोविन्द - क्षणहतमहाप्रीतिनिचय!
क्व गन्तासीत्युच्चैर्वचनमनिशं प्रेमतरला।।१२।।

अथावश्यं गत्वा तरुतलमवालम्ब्य परितः
समालोकं कृत्वा क्षणमुदितनेत्रोत्पलदला ।
समादेशञ्चक्रे विशतवनमध्ये प्रियतमाः
समन्वेष्टुं कृष्णं घनतरघनाभं मुरहरम्।।१३।।

आयासैर्बहुभिः प्रियाः प्रियतमाः प्राणेशमन्वेषितुं
कुञ्जं मञ्जुलमञ्जुलाञ्जलनमत्पद्माक्षिनीलोत्पलाः।
शैलानां शिखरं तथैव च गुहा शाखा तथा शाखिनां
मूलञ्चापि दरी विलोच्यमपरं यद्यत् स्थलं सम्भवम्।।१४।।

क्षणं गत्वा किञ्चित् क्षणमपि चतुर्दिक्षु नयनं
परिभ्राम्याकर्ण्य क्षणमपि चतुर्दिक्षु जनितम्।
निनादं गन्तव्यं कतिपयसुदूरे प्रियतमाः
समन्वेष्टुं यातप्रियमपहतव्रीडमसितम्।।१५।।

यथा चित्तं नित्यं हरिविरह - वह्निर्दहति मे
तदुक्त्वा युष्मान् किं गमयितुमशक्ता न हि वराः।
न किं स्वीये स्वीये निरवधिविजानीत हृदये
विलम्बेनालं तं व्रजत खलमन्वेष्टुमधुना।।१६।

वारं वारं प्रियतमसखी चेष्टितं वाक्यजालं
स्मारं स्मारं सजलजलदाभाससंहासि भासम् ।
कारं कारं मनसि सततं गोपिकानां समूहा
दुर्गं दुर्गं गहनमनगाः सर्वमालोकयन्ति।।१७।।

काचिद् गोपी निविडगहने दूरतः क्षुद्रवृक्षं
दृष्ट्वा कृष्णभ्रममितिमती कालिमालोकनेन ।
गोपीकन्यां कलयति सुधासिन्धुनीरे निमग्ना
भूयः प्राप्तो घनरुचिरिति प्रोच्चरन्तीति सोच्चैः।।१८।।

भूयः सख्यः प्रियतमहरिः प्रात एवं वचस्ताः
श्रुत्वा जग्मुर्विगलितकचाः स्त्रस्तवस्त्रा विषण्णाः।
क्वास्ते क्वास्ते प्रकृतिचपलो गोपिकाप्राणचौरो
नूनं तूर्णं प्रियतमसखि ! प्रेक्षयेत्युच्चवाचा।।१९।।

अस्मच्चित्तचकोरसञ्चयमहोल्लासैकबीजं विभुं
पश्येमं सखि! दूरतो घनघटानिन्दत्सु चारुद्युतिम्।
इत्युक्त्वा करशाखया प्रियसखी सा दर्शयन्ती मुहु-
स्तस्याः पाणिसरोरुहं निजकरेणाकृष्य तूर्णं ययौ।।२०।।

गत्वा तत्र सखीभिरेव विमलाम्भोजाननं माधवं
नालोक्य प्रियबान्धवं क्व नु भवांस्त्यक्त्वा गतो मादृशीम्।
इत्यालापवचोभिराप्तविरहा खेदाब्धिमग्ना मुहु-
र्भूमौ सा निपपात कातरतया किञ्चित् सखीं भाषते।।२१।।

इमां तावत् पश्य प्रियसखि! हि मादृग्जनदशां
दृशोरग्रीभूतः प्रियहरिरितः कुत्र गतवान्।
पुनर्लाभाशङ्कां कथमपि न कुर्म्मः प्रियहरे-
र्हृतं द्रव्यं लब्धं पुनरपि हृतं कः क्व लभते ? ।।२२।।

एवं विचिन्त्य बहुधा व्रजगोपबालाः
प्राणेश्वरस्य विरहैरतिदीनभावाः।
वृन्दावनान्मधुपुरीगमनं तदीयं
निश्चित्य चेतसि तदा मुहुराविलेपुः।।२३।।

गतं चेतोऽस्माकं विरहदहनैस्तत्र भवता
विदाह्ये तद्युक्तं कथमयि! यतां कर्म्मकठिनम्।
तदीतो गन्तव्यं मनसि तव वृत्तं किल पुरा
पुरैव प्रेमाब्धिप्रकटनमयुक्तं व्रजपते !।।२४।।

नास्ति किञ्चित् प्रियतमवरेर्गुप्तमेतत्त्वदग्रे
व्यक्तश्चैतन्मम तु भवता बन्धुना पूर्वमुक्तम्।
गुप्त्वा मानं वचनमधुनाकारि मिथ्या स्वकीयं
प्रामाण्यन्ते वचसि न पुनर्जायते सज्जनानाम्।।२५।।

अप्रामाण्यं श्रुतिषु बहुभिर्मीयते त्वद्वचस्त्वा-
दाप्तेरेतद्वितथवचने वीक्ष्य दृष्टान्तताञ्च।
पश्चात् केषां कथमपि जनानामपि स्वर्गहेतौ
यागे वृत्तिर्न भवति जगन्नाथ! नैतत् सुयुक्तम्।।२६।।

आसंसारं विदितमयि ! ते नामनावं गृहीत्वा
गत्वा पारं भवजलनिधेराश्रमास्त्वं लभन्ते।
एतच्चित्रं वयमिह भवे दुःखसिन्धौ निमग्नाः
प्राप्यापि त्वां व्रजकुलपते! गोपिकाप्राणबन्धो!।।२७।।

दत्तं स्थानं हृदयमनिशं वासतस्तत्सरोजं
मत्वा क्रुद्धो नवघनरुचे कृष्णचन्द्रेति मन्ये।
नान्यत् स्थानं तव पदरजो योग्यमालोकि लोके
चेतः पद्मं न कुमुदमहो ! मादृशां नैष दोषः ।।२८।।

एकं पुष्पं सुरभिविमले पादपद्मे त्वदीये
दातुं चित्ते नवघनरुचे वासना चेत् कदाचित्।
सामीप्यन्तो भजति सततं नूनमेतद् विचित्रं
दत्वा हारं बहुसु कुसुमं यद्वयं दूरतः स्थाः।।२९।।

सुरभिविमलपुष्पैः फुल्लमल्लीलवङ्गैः
सुललितवनमाला - दानकाले त्वदङ्गे।
मृदूनि कठिनपुष्पाघातजातापराधाः
किल वयमतिबाला युज्यते नापि रोषः।।३०।।

इत्थं चारु विचारचारुचतुरा चित्रं चरित्रं हरे-
र्भूयोऽसौ सुविचार्य चेतसि चलत्स्वाशा सशोका तृषा।
आयासैरवसारि-योगविरसा भूमौ लिखद् दुर्दशा
त्यक्ता सा भगवत्तृषा तव पुनः खेदाब्धिवासाऽभवत्।।३१।।

दीनां संवीक्ष्य सख्यः ससलिलजलदश्यामबन्धोर्वियोगे
निन्दच्चन्द्राननान्तां सुललितवचसा बोधयामासुरन्याः।
खेदौघभ्रान्तचित्ताः सुललिततुलसीकाननं संविलोक्या-
नन्दाब्धौ सन्निमग्ना विरहजलनिधिप्राप्तपारा इव स्युः।।३२।।

ततस्ताभिर्वाग्भिस्तनुभिरतनुनीताभिरुचितान्
स्वकीयानाख्याय प्रशमयितुमन्तर्दहनजाम्।
अराधां कृद्धाधां सपदि तुलसीं मञ्जुलदलां
प्रपद्यन्ते स्वान्ते सततमनुचिन्त्ये प्रियतमे।।३३।।

अये वृन्दे वन्द्ये ! किमपरमनिन्दे! त्वयि वयं
वदामः श्यामाङ्घ्रेरुपरि तव वासो यदनिशम्।
सदा तस्याख्यानैः क्षयिततनवः शून्यहृदया
दयालेशः कस्य क्षणमपि न चास्मासु भवति।।३४।।

अस्मन्निनिवेद्यमभिवेद्य सुरैरवेद्ये
गत्वा त्वया यदि पुनर्हरिपादपद्मे।
सर्वं निवेद्य मम वद्यगुणे तदद्य
वन्द्यामहे प्रियपदं तपसा प्रपद्यम्।।३५।।

एकं दलं यदि हरेश्चरणारविन्दे
भक्त्या ददाति तव तस्य फलं कियच्चित्।
ब्रह्मादिभिर्न हि सुरैर्विदितं तदस्ति
किन्तत्फलं मनुजभूतजना वदामः।।३६।।

अस्मिन्नियोगवशतो यदि तत्पदाब्जे
गच्छस्यवश्यमतिदीनदये ! प्रसन्ना।
तेनैव भावि तुलसीदलदानमस्या
(ह्यस्मा- ) कमाशु भविता किल दुःखनाशः।।३७।।

त्वञ्चाधिकप्रियतमा तुलसि ! श्रियोऽपि
जानीम एव किल बन्धुजनस्य तस्य।
तस्मादतिप्रियकरी भवती सखी नो
नूनं त्वया मधुपुरीगमनं विधेयम्।।३८।।

युक्तं कदापि न हि ते किल दौत्यकर्म्म
नूनं ततो मधुपुरीं यदि नेष्यसि त्वम्।
एतन्मतं न हि सता विहितं शरण्ये
नाङ्गीकृतं भवति किं महता परार्थम्।।३९।।

आस्ते श्रुतं बहुश एव पुरा पुराणे
काशीश्वरः स्मरहरः पुरुषप्रधानः।
अङ्गीचकार सहसा किल कालकूटं
त्राणाय सर्वजगतां जगतां हितैषी।।४०।।

अन्यच्छ्रुतं दिवि प्रमदामधिपस्य
वृत्रासुरैरुपहतस्य हिताय नूनम्।
वज्रं विधातुमपि तेन परं कृपालु-
स्त्यक्तासुराशु वपुरस्थि ददौ दधीचिः।।४१।।

त्वञ्चेद् गता भगवतश्चरणारविन्दे
कस्त्वां विनिन्दति न विन्दति के जना वा।
त्वं नीलनीरदवपुश्चरणाम्बुजस्था-
मालोकयन्नविकलो न भवेन्न चैवम्।।४२।।

केनैकया मधुपुरीगमनं विधेयं
मैवं त्वया हृदि कदापि विभावनीयम्।
एतद्धि चन्दनवनं न निरीक्षसे त्वं
नूनं प्रयाणसमये भविता सगन्धा।।४३।।

गन्धेन सार्द्धमधुना मथुरापुरीं त्वं
गोविन्दचन्द्रपदवीक्षणकार्यसिद्ध्यै ।
दास्यामि भक्तिमपरां तव पोषणाय
भूयान्न चाङ्गपरिपीडनमाशु गच्छेः।।४४।।

यास्यामि नैव परिहाय वदेद् यदीति
वृन्दावनं त्वयि कदापि भवेन्न युक्तम्।
वृन्दावनं निगदितं कविभिस्तदेव
यत्रास्ति ते निवसतिर्भुवनेषु वृन्दे!।।४५।।

नैवाद्धारं प्रियतमपदे गन्तुमत्युत्सहेऽहं
मैवं चिन्तां कुरु सखिवरे ! पूर्वमस्मन्मनांसि।
प्राणेशो यान्युदहरदहो ! तैस्त्वया तत्प्रपद्यं
पूर्वस्वामिप्रणयमपरैराहृताः किं त्यजन्ति ? ।।४६।।

एतेन त्वं यदिह मनसा शङ्कसे किं मनांसि
दौत्ये युक्तान्यपि वयमहो ! प्रेरयामः स्म नैवम्।
किं वाऽस्माभिः प्रहितगमनान्यागतानीति नैवं
चौरैर्नीते विरमति यतः सूत्तमे तन्निरस्तम्।।४७।।

आस्ते भूरि प्रियतमपदश्चिह्नमेतद् वनान्तो
दौत्येऽस्माभिर्न हि सखिवरे! किं प्रयुक्तं प्रयुक्तम्।
आशङ्केयं न पुनरुचिता ज्ञानवत्या भवत्या
वृत्तान्तः किं रहसि जनितो बन्धुजन्येन गोप्यः।।४८।।

अद्य त्वं किल गच्छ गच्छ मथुरामानन्दसम्वर्द्धिनि
प्राणेशप्रियकारिणि त्वयि पुनर्वाच्यं किमस्मादृशाम्।
सर्वं वीक्ष्य गतासि यद्यपि तथाप्याकाङ्क्षया पीनया
नोक्तापि स्थिरतां वयन्तु कियतीं यास्याम एवं न हि।।४९।।

यथा कामं कामे न हि खरकरैः पञ्चभिरसून्
यदा दग्धुं दिग्धैर्व्यवसितमहो ! पुष्पधनुषा।
तदा नस्तच्छान्तिं नवजलदकान्तिः समकरो-
न्न चास्मत् प्राणेशः क्षणमपि च भीतो मनसिजात्।।५०।।

तेनाधुना मधुसखेन निदर्शकेन
तैस्तैः शरैरनुलवं कुसुमायुधेन।
दह्यामहे वयमहो! असहं त्वदीयं
पूर्वानुवृत्तमनुचिन्त्य विविक्तगेहाः।।५१।।

आस्ते यद्यत् प्रमितिविषये ज्ञानिनां वस्तुगत्या
तत्रैदानीं भवति सहसा भ्रान्तिरन्यप्रकारा।
मन्येऽस्माकं झटिति भविता त्वद्वियोगे वियोगो
बुद्धिभ्रंशो भवति सततं यस्य तस्याशु नाशः।।५२।।

विषांशुस्त्वं चन्द्रे भ्रमरपिकयोस्त्वां व्रणदता
जनेऽस्मिन् कालिन्द्या विषमविषपूर्णत्वमपरम्।
घनात्पाथोर्धारा निशितशरधारा धृतिहरा
भवत्येषा बुद्धिः सततमधुना तस्य विरहे।।५३।।

निगदितमिति धन्येऽस्माभिरेकान्तमन्ये
प्रियतमविरहेण व्याकुलाभिस्त्वदग्रे।
विरहज़लधिपारं येन यामो भवत्या
प्रियतमपदपद्मे तत्तथाज्ञापितव्यम्।।५४।।

शाके तर्कनभो-हयेन्दुगणिते श्रीवैद्यनाथो द्विजो
गोपिकैरवकाननप्रियकलानाथाङ्घ्रिपाथोरुहम्।
ध्यायंस्तच्चरणारविन्दरसिकप्रज्ञावतां प्रीतये
प्रीत्यैतस्य चकार चारु तुलसीदूताख्यकाव्यं महत्।।५५।।

इति श्रीवैद्यनाथभट्टाचार्यविरचितस्तुलसीदूतः
समाप्तः

श्रीरामादिन्दुलालस्य श्रीकाञ्चीकुलजन्मनः।
श्रीशाननगरस्थस्य पुस्तकं स्वाक्षरं तथा।।
।।श्रीहरिः।।



ISSN 0377-0575

Published under Gairvāṇī-Gaurava-Granthamālā
Series - 41

# Ākhyāta Viveka

by

Mauni Śrīkṛsṇa Bhaṭṭa

Edited By
Prof. Lalit Kumar Tripathi




Rashtriya Sanskrit Sansthan
Ganganath Jha Campus
Chandrashekhar Azad Park
Allahabad – 211002
2018

ISSN 0377-0575

# गैर्वाणी - गौरव - ग्रन्थमाला - 41

गीर्वाणवाणीगौरवभूत - प्रत्न - नूतन - लघुग्रन्थानां सङ्कलनम्

गङ्गानाथझा–परिसरशोधपत्रिकायाः परिशिष्टम्

मौनिश्रीकृष्णभट्ट

विरचितः

# आख्यातविवेकः

सम्पादकः

प्रो० ललितकुमारत्रिपाठी




राष्ट्रिय-संस्कृत-संस्थानम्

गङ्गानाथझा–परिसरः,

चन्द्रशेखर–आजादोद्यानम्

प्रयागः – 211002

2018

# प्रस्तावना

श्रीसच्चामहापुरुषाय नमः।।

मातृपितृचरणकमलेभ्यो नमः।।

श्रीगुरुभ्यो नमः।।

मौनिश्रीकृष्णभट्टो नागेशभट्टात् परवर्तिषु वैयाकरणेषु महान् वैयाकरणः दार्शनिकोऽजायत। मौनिश्रीकृष्णभट्टस्य पितामहस्य नाम गोवर्धनभट्टः पितुर्नाम रघुनाथभट्टो मातुर्नाम जानकी आसीत्। तेन व्याकरणदर्शनस्य नैकाः कृतयो विरचिताः। तस्य कृतिषु 1. स्फोटचन्द्रिका 2. वृत्तिदीपिका 3. लघुविभक्त्यर्थनिर्णयः 4. शब्दार्थतर्कामृतम् 5. आख्यातविवेकश्च प्रमुखाः सन्ति। एतासु स्फोटनिर्णयः, वृत्तिदीपिका, शब्दार्थतर्कामृतं प्रकाशिताः सन्ति। मौनिश्रीकृष्णभट्टस्य आख्यातविवेकः प्रकाशितरूपेण नैव लभ्यते। आख्यातविवेकस्यापरमभिधानम् आख्यातवाद इत्यपि वर्तते।

स्फोटचन्द्रिकायां मौनिश्रीकृष्णभट्टेन वैयाकरणानां स्फोटवादः स्थापितो वर्तते। अयं ग्रन्थः प्रथमं वाराणीतः 1899 ख्रीस्ताब्दे शब्दकौस्तुभस्य परिशिष्टे प्रकाशितः पुनश्च मुम्बईतो गुजराती मुद्रणालयेन 1913 ख्रीस्ताब्दे प्रकाशितः। 1913 संस्करणस्य सम्पादको ब्राक्रे इत्युपाह्वो महादेवशर्मा वर्तते। अस्मिन् ग्रन्थे वर्णपदवाक्याखण्डपदाखण्डवाक्यस्फोटभेदेन पञ्च व्यक्तिस्फोटाः पुनश्च वर्णपदवाक्यभेदेन त्रिविधो जातिस्फोटो निरूपितः। आहत्य अष्टौ स्फोटा अत्र निरूपिताः सन्ति।

अस्य लेखकस्य वृत्तिदीपिकाख्यो ग्रन्थः प्रिन्सेस आफ वेल्स सरस्वतीग्रन्थमालायाः एकोनत्रिंशत्तमग्रन्थरूपेण 1930 ख्रीस्ताब्दे प्रकाशितः। अस्य सम्पादको भारद्वाजो गङ्गाधरशास्त्री महोदय आसीत्। अस्य ग्रन्थस्य पुनः प्रकाशनं राजस्थानपुरातनग्रन्थमालायां सप्तमग्रन्थरूपेण 1956 ख्रीस्ताब्दे जोधपुरतः जातम्। वृत्तिदीपिकायां शक्तिलक्षणाव्यञ्जनाधात्वर्थतिङर्थसनाद्यर्थ-समासार्थ- स्त्रीप्रत्ययार्थतद्धितार्थाः संक्षेपेणैव विचारिताः सन्ति।

लघुविभक्त्यर्थनिर्णयो मुम्बय्यां स्थितेन गुजरातीमुद्रणालयेन 1915 ख्रीस्ताब्दे प्रकाशितो विद्यते। अस्य सम्पादको बाक्रे महादेवशर्मा आसीत्। अस्मिन् ग्रन्थे विभक्त्यर्थविषये न्यायमतखण्डनपूर्वकं वैयाकरणमतं स्थापितमस्ति। अत्र मौनिश्रीकृष्णभट्टो नागेशमतस्यापि खण्डनं विधत्ते।

शब्दार्थतर्कामृतम् इत्याख्यो ग्रन्थो राष्ट्रियसंस्कृतसंस्थानस्य गङ्गानाथझापरिसरात् 2009 ख्रीस्ताब्दे तत्रत्यशोधपत्रिकायाः परिशिष्टरूपेण, अनन्तरं च 2010 ख्रीस्ताब्दे स्वतन्त्रग्रन्थरूपेण

प्रकाशितः। प्रकृतग्रन्थसम्पादकेनैवास्य सम्पादनं व्यधायि। शब्दार्थतर्कामृतम् इत्याख्ये ग्रन्थे व्याकरणदर्शनानुसारं प्रमाणप्रमेयविषयिणी विचारणा विहितास्ति। अस्मिन् ग्रन्थे तार्किकमतखण्डनपूर्वकं वैयाकरणमतं समुपस्थापितं विद्यते।

मौनिश्रीकृष्णभट्टस्य आख्यातवादापरनामा आख्यातविवेक इति ग्रन्थ आख्यातार्थविषये वैयाकरणानां मतं प्रस्तौति। ग्रन्थस्यास्य प्रकृतं सम्पादनं प्राधान्येन हस्तलेखद्वयमाश्रित्य विहितं ययोरुल्लेखोऽत्र क, ख इति सङ्केताभ्यां विहितम्।

क- हस्तलेखस्य विवरणम्

स्थानम् – वाराणसेयसंस्कृतविश्वविद्यालयः, सरस्वतीभवनम्

विषयः – व्याकरणम्, नाम – आख्यातवादः

ग्रन्थकारः – कृष्णभट्टः, पत्रसङ्ख्या – 1-6, 38888

पङ्क्तिसङ्ख्या पृष्ठे 14, अक्षरसङ्ख्या पङ्क्तौ 42

आकारः 9.6 x 4.9, लिपिः – देवनागरी

आधारः कर्गदम्, पूर्णः, नं 3128

.......

ख- हस्तलेखस्य विवरणम्

स्थानम् – वाराणसेयसंस्कृतविश्वविद्यालयः, सरस्वतीभवनम्

विषयः – व्याकरणम्, क्रमसङ्ख्या – 2, नाम – आख्यातविवेकः

ग्रन्थकारः – कृष्णभट्टः, पत्रसङ्ख्या – 1-12, 38370,

पङ्क्तिसङ्ख्या पृष्ठे 07, अक्षरसङ्ख्या पङ्क्तौ 29, आकारः 90.9 x 3.8

लिपिः – देवनागरी, आधारः कर्गदम्, पूर्णः, नं 114

अस्मिन् ग्रन्थे मौनिश्रीकृष्णभट्टेन आख्यातार्थविषये नैयायिकानां मीमांसकानां च मतानि खण्डयता वैयाकरणानां सिद्धान्तः समुपस्थापितो वर्तते। आख्यातार्थविषये वैयाकरणानां मतप्रतिपादनप्रसङ्गे मौनिश्रीकृष्णभट्टः प्रायेण भट्टोजिदीक्षितस्य कौण्डभट्टस्य च मतमेवानुसरति। साम्प्रतं प्रकृतग्रन्थस्य प्रकाशनमुद्दिश्य ग्रन्थस्यातीव संक्षिप्तं परिचयं प्रस्तूय प्रास्ताविकं वचः समाप्यते।

सम्पादकः

प्रो० ललितकुमारत्रिपाठी

मौनिश्रीकृष्णविरचितः

# आख्यातविवेकः

श्रीगणेशाय नमः।[1]

आख्यातस्याश्रयोऽर्थः सङ्ख्या च। लट्त्वादिना तु वर्तमानत्वादि। तत्र समानपदोपात्तत्वेन[2] प्रत्यासत्त्या[3] सङ्ख्याऽऽश्रयेऽन्वेति। वर्तमानत्वादिकं तु धात्वर्थविशेष्ये व्यापारे, न तु फले। अत एव फलसत्त्वे व्यापारविगमे पाको विद्यत इति न प्रयोगः, अपितु अभूदित्येव। तत्रापि फलाश्रयव्यापाराश्रयबोधे यक्शबादिसमभिव्याहारः कारणम्।

ननु 'पच्यते ओदनः स्वयमेव' इत्यादौ यक्समभिव्याहारसत्त्वेऽपि कर्मबोधाभावेन व्यभिचार इति चेन्न, सकर्मकधातुसमभिव्याहृतभावसाधारणविधिविधेयत्वेन कारणत्वस्वीकारात्। प्रकृते च ''कर्मवत्कर्मणा०'' इति सूत्रेण ''भावकर्मणोः'' इत्यस्यातिदेशेन भावसाधारणविधिविधेयत्वेऽपि सकर्मकधातुसमभिव्याहाराभावात्। एवं च 'देवदत्तः पचति ओदनम्', 'देवदत्तेनौदनः पच्यते' इत्यादौ एकदेवदत्ताभिन्नाश्रयिका तण्डुलनिष्ठविक्लित्त्यनुकूला क्रियेति उभयत्राप्येकरूपेणैव बोधः। एवं 'घटं जानाति' इत्यत्र घटनिष्ठावरणभङ्गानुकूलो व्यापारः। ईश्वरेऽपि घटनिष्ठावरणभङ्गानुकूलव्यापारसत्त्वाद् 'ईश्वरो घटं जानाति' इत्यादौ न काप्यनुपपत्तिः।

ननु प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यमिति न्यायेन विक्लित्त्यनुकूल-व्यापारैकाश्रयाभिन्नश्चैत्र इति कर्तृविशेष्यक एव बोधः कुतो न स्वीक्रियते। न च 'क्रियाप्रधानमाख्यातं सत्त्वप्रधानानि नामानि' इति निरुक्तविरोधः, 'सर्वमाख्यातजं नाम' इत्यादौ आख्यातपदस्य धातावपि शक्तत्वेन फलनिष्ठप्रकारतानिरूपित-व्यापारविशेष्यतायास्तत्र सत्त्वेनाविरोधात्। 'एधाञ्चक्रे' इत्यत्रामन्तस्य अतिङन्तत्वेऽपि क्रियाप्राधान्यदर्शनेन नामत्वेऽपि सत्त्वप्राधान्यादर्शनेन च व्यभिचाराच्चेति चेन्न, 'पचति भवति' इत्यादीनां पचिक्रिया भवतीत्यद्यर्थे साधुत्वानुशासनार्थं प्रवृत्तैर्भाष्यकारादिभिस्तत्स्वीकारेण क्रियाविशेष्यकबोधस्य आवश्यकत्वात्।

ननु एवं 'तिङतिङः' इति सूत्रस्थातिङ्-ग्रहणप्रत्याख्यानपरभाष्यविरोधः 'पचति भवति' इत्यादीनामप्येकवाक्यत्वे तत्र निघात[4]व्यावर्तनेनातिङ्ग्रहणस्य सार्थक्यादिति चेत् , न, तत्र 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद् विभागे स्याद्' इत्येकवाक्यतासत्त्वेऽपि निघातादिप्रयोजक 'एकतिङ्वाक्यम्' इति पारिभाषयैकवाक्यतास्वीकारात्।

नन्वेवमपि ''सार्वधातुके यक्'' इति सूत्रस्थ- 'न हि क्रिया क्रियान्तरसमवायं[5] गच्छति' इति भाष्यविरोध इति चेन्न, कर्तृकर्मेतररूपेण सम्बन्धं न गच्छतीति तदर्थात्।

यत्तु 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादौ करणरूपेणाप्यन्वयदर्शनात्[6] [7]करणेतररूपेणेत्यपि वाच्यम् इत्याहुर्वैयाकरणनव्याः, तन्मन्दम्। तत्र हि फलस्य क्रियायामन्वयो न तु क्रियायाः। न च 'कृष्णं नमेच्चेत् सुखं यायत्' इत्यादौ नमनक्रियायाः करणरूपेणान्वयोऽस्तु इति वाच्यम्,[7.1] तत्र हेतुत्वेन बोधात्। ननु तथापि पचति क्रियायाः असत्त्वभूतत्वेन क्रियान्तराकाङ्क्षाया अभावे कथमेकवाक्यतेति चेत्, न, अन्यतराकाङ्क्षयापि वाक्यत्वदर्शनात्।

अत्रेदमवधेयं पुष्पवन्तपदवाच्याभिन्नाश्रयत्वविवक्षायां 'स्त' इति नियतद्विवचनमिव अदृष्टसैन्धवपदवाच्याभिन्ना[8]श्रयत्वविवक्षायामपि द्विवचनमेव स्यादिति चेत्, न, पुष्पवन्तशब्दस्येवादृष्टसैन्धवशब्दस्य[9] अनियतद्विवचनान्तत्वाभावेन[10] अदृष्टमस्तीत्येव प्रयोगः। यद्यपि अदृष्टशब्दस्य पुण्यपापरूपार्थ[11]बोधकत्वमपि[12] कार्यमात्रं प्रति अदृष्टत्वेन कारणतया कारणतावच्छेदकतयाऽदृष्टत्वजातिसिद्धेः।

अत्र नैयायिकाः– आख्यातस्य यत्नो वाच्यः। यत्नार्थककरोतिना विवरणात्। कृ–स्थले तु कृत्याश्रयः कर्तेत्यत्र[13] ज्ञानादिवदाश्रये लक्षणेत्याहुः, तन्न, कर्तरि शक्तिग्राहकानुशासनविरोधात्।

नन्वसति बाधके व्याकरणस्य शक्तिग्राहकत्वं, प्रकृते तु अनन्तकृतीनां[14] शक्यतावच्छेदकत्वे गौरवाल्लाघवानुसारेण कर्तृपदस्य कृतौ लक्षणया कृतिरेव सूत्रकर्तुर्विवक्षितेति चेन्न, स्वायत्ते शब्दप्रयोगे किमिति अवाचकं प्रयुञ्ज्महे इति न्यायेन मात्रालाघवेन च कृतिपदे एवोच्चारयितव्ये[15] कर्तृपदोच्चारणवैयर्थ्यापत्तेः। न च कृतां कर्तृशक्तिबोधनार्थं तदावश्यकमिति वाच्यम्, कृतिपदस्य लक्षणया तद्बोधोपपत्तेः।

किं च आख्यातस्य कर्तरि शक्तावनन्तकृतिशक्यतावच्छेदकत्वे गौरवमेवम् आकाशादि-शब्दस्य शब्दादिविशिष्टे शक्तिकल्पनेऽनन्तशब्दादौ शक्यतावच्छेदकत्वकल्पने गौरवम्। तस्मात् तत्रापि शब्दत्वादिजातेः शक्यतावच्छेदकत्वे लाघवमिति तत्रापि शब्दादावेव शक्तिकल्पनं स्यात्। न चाकाशपदस्य शब्दादौ स्वारसिकः प्रयोगो नास्तीति वाच्यम्, कृतावपि स्वारसिकप्रयोगविरहस्तुल्य एवेत्यादिना आख्यातशिरोमणौ उभयोस्तुल्यत्वाभिधानात्।

किं चाख्यातस्य यत्नवाचकत्वे 'पाचक' इत्यस्य पचतीति विवरणमप्यसङ्गतं स्यात्। विवरणविव्रियमाणयोः समानार्थकत्वाभावात्। किं चाख्यातस्य कृतिवाचकत्वे पचतीत्यत्र पाककृतिरित्यर्थे संख्याबोधाभावात् 'देवदत्तः पचति' इत्यादौ तु सुपैव सङ्ख्याभिधानादाख्यातस्य सङ्ख्यावाचकत्वं व्यर्थं स्यात्। आश्रयवाचकत्वे तु एकाश्रयिका विक्लित्यनुकूलक्रियेत्याश्रये एकत्वबोधार्थं तदावश्यकत्वात्। न च 'चैत्रो मैत्रश्च गच्छतः' इत्यादौ सुपा द्वित्वानभिधानेन तत्र द्वित्वबोधार्थं तदावश्यकमिति वाच्यम्, उक्तयुक्त्या द्वित्वादिवाचकत्वे सिद्धेऽपि एकत्ववाचकत्वे युक्त्यभावात्।

वस्तुतस्तु 'नारद इत्यबोधि' इत्यत्रेतिना कर्मत्वादिबोधवच्चकारेण व्यासज्यवृत्तिद्वित्वबोधन-सम्भवेनाख्यातसङ्ख्यावाचकत्वानावश्यकत्वात्। किं चाख्यातस्य कृतिवाचकत्वे

आख्यातार्थकृति[16]संख्याप्रकारकबोधं प्रति विशेष्यतासम्बन्धेन इतराविशेषणकप्रथमान्त-पदजन्योपस्थितेर्हेतुत्वमिति पदद्वयघटितकार्यकारणभावः।

तथा च 'मैत्रेण पच्यते तण्डुलः' इत्यादौ मैत्र[17]निष्ठपाकभावनाविषयस्तण्डुलः मैत्र[18]निष्ठभावनाविषयपाकजन्यफलशाली वा तण्डुल इति बोधः। तत्राद्ये आख्यातकृतेराश्रयतया मैत्रे[19] विषयतया च तण्डुले साक्षादन्वयः। द्वितीये तु परम्परयेति। 'रथेन गम्यते ग्रामः' इत्यत्र रथनिष्ठगमनानुकूलव्यापारजन्यफलशाली ग्राम इति बोधः।

आश्रये शक्तिस्वीकारे तु आख्यातार्थसङ्ख्याप्रकारकबोधं प्रति विशेष्यतासम्बन्धेन[20] आख्यातार्थाश्रयोपस्थितिर्हेतुरित्येकपदघटितः कार्यकारणभावः। इतराविशेषणक इति च[21] मास्तु इति लाघवम्। किञ्च कृतिवाचकत्वे पचतीत्यादौ वर्तमानत्वादेः कृतावन्वयः जानातीत्यादौ धात्वर्थव्यापारेऽतिगौरवम्। आश्रये शक्तिस्वीकारे तु सर्वत्र धात्वर्थव्यापार एवेति लाघवम्।

न च तव मते भिन्नपदोपात्तव्यापारे वर्तमानत्वान्वयः, मन्मते तु समानपदोपात्तकृताविति इति लाघवमिति वाच्यम् , कृतौ वर्तमानत्वान्वये यत्नस्य वर्तमानत्वे भाविव्यापारदशायां पचतीत्यापत्तेः। जानातीत्यादौ तथा भवद्भिरपि स्वीकृतत्वाच्च। किं चाख्यातस्य कृतिवाचकत्वे कृतित्वं शक्यतावच्छेदकम् आश्रयत्वं लक्ष्यतावच्छेदकं कृत्स्थले कृतिः शक्यतावच्छेदिका इति गौरवम्। आश्रयवाचकत्वे तु सर्वत्राश्रयत्वमेव शक्यतावच्छेदकमिति लाघवम्।

किं च लाघवाद् व्यापाराश्रयस्यैव कर्तृत्वं, न तु कृतिमतः, गन्तेत्यादौ धात्वर्थव्यापारस्य तृच्-प्रत्ययार्थैकदेशकृतावनुकूलतासम्बन्धेनान्वये पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशेनेति व्युत्पत्तिभङ्गापत्तेः। ननु मैत्रादन्य इत्यादौ पञ्चम्यर्थप्रतियोगिकत्वस्यान्यपदार्थैकदेशे भेदेऽन्वय इव प्रकृतेऽपि भविष्यतीति चेन्न, तत्रागत्या तत्स्वीकारेऽपि प्रकृते गतिसम्भवे तत्स्वीकारे गौर्नित्या पशुरपशुरित्यादीनामपि साधुत्वापत्त्या व्युसत्तेरुच्छेदापत्तेः।

[22]ननु मैत्रादन्य इत्यादौ पञ्चम्यर्थप्रतियोगिकत्वस्य नान्यपदार्थैकदेशे भेदेनान्वयोऽपि तु स्वाश्रयभेदत्वसम्बन्धेन भेदविशिष्टे मैत्रप्रतियोगित्वस्यान्वयः। एवं गन्तेत्यादावपि स्वानुकूलकृतिमत्वरूपपम्परासम्बन्धेन धात्वर्थगमनादेः कर्तादिरूपकृत्प्रत्ययार्थेऽन्वयः, न तु पदार्थैकदेशे इति चेन्न, गौर्नित्या पशुरपशुरित्यादीनामप्येवं साधुतापत्तेः।[22-1] साक्षादन्वयेनाप्युपपत्तौ परम्परासम्बन्धे गौरवाच्च। एवं चानन्तकृतिशक्यतावच्छेदकत्वे गौरवमतिरिक्तं वचः।

किं च कृतेरपि व्यापारविशेषतया धातुलभ्यत्वात् तत्राख्यातस्य शक्तिकल्पनमन्याय्यम्, अनन्यलभ्यो हि शब्दार्थ इति न्यायात्। न च पाकं करोतीति विवरणात् कृतिर्न धात्वर्थ इति वाच्यम्, घञन्तपाकशब्देन फलमात्रबोधनात्। न च 'काष्ठैः पाक' इति न स्यादिति वाच्यम्, करोति समभिव्याहृतपाकपदस्यैव फलमात्रबोधकत्वात्। धातोरंशद्वयमुभाभ्यां बोध्यते इति दिक्।

ननु न वयं लाघवात् कृतिवाचकत्वमाख्यातस्य ब्रूमः, पूर्वोक्तरीत्या गौरवात्, किन्तु यत्नार्थककरोतिना विवरणादिति चेत् , न , करोतेर्यत्नार्थकत्वस्यैव वक्तुमशक्यत्वात्। तथाहि

यदि करोतिर्यत्नार्थकस्तदा दृश्धातोरिव कर्तृस्थभावकत्वेन कर्मवद्भावो न स्यात्। किं चाख्यातस्य कृतिवाचकत्वे सामानाधिकरण्यानभिहितव्यवस्थे न स्याताम्। तथा च चैत्रः पचति, चैत्रेण पच्यते ओदन इत्यादौ तृतीया द्वितीये स्याताम्।

ननु तन्निष्ठसंख्याभिधानादभिधानत्वम्[23] , कृता संख्यानभिधानेन चैत्रः पक्तेत्यादौ तृतीयापत्तेः। न च कृत्यनभिधानादभिधानम्, कृत्प्रत्ययेऽपि विशेषणत्वेन कृतेरभिधानत्वमस्त्येवेति वाच्यम्, 'चैत्रेण क्रियते घटः' इत्यादौ धातुना कृतेरभिधानात् तृतीयानापत्तेः। न च तिङ्कृत्तद्धितैरेवाभिधानतेति[24] वाच्यम्, विषवृक्षोऽपि संवर्ध्य इत्यत्र निपातेनोक्तेऽपि तैरनुक्तत्वाद् द्वितीयापत्तेः।[25] कर्मप्रत्ययेऽपि कृत्यभिधानेन देवदत्तः पच्यते ओदन इत्यापत्तेश्च। यदि कर्मप्रत्यये फलमेवार्थः कृतिस्तृतीयार्थ इति विभाव्यते तर्हि पूर्वोक्त एव दोषः।

किं चाख्यातस्य कृतिवाचकत्वे कृत्यपि कर्तृवाचकत्वं न स्यात् , युक्तेस्तौल्यात्। न च सामानाधिकरण्यात् तत्र कर्तृवाचकत्वम् , आख्यातव्यावृत्तस्य सामानाधिकरण्यस्य तत्र वक्तुमशक्यत्वात्। न च विशेष्यतासम्बन्धेनाभेदसम्बन्धकतत्रार्थप्रकारकशाब्दबोधं प्रति तन्नामोत्तरसार्थकविभक्त्युपस्थित्यकालिकतन्नामसमभिव्याहृतपदजन्योपस्थितिः कारणमिति कार्यकारणभावात् तत्र कर्तृवाचकत्वमावश्यकमिति वाच्यम्, तस्य वस्त्वव्यवस्थापकत्वात्। अत एव द्वित्वप्रत्यक्षविचारे गुणोपायेऽपि प्रयोगस्य वस्त्वव्यवस्थापकत्वमुक्तम्। आख्यातेऽपि तथा वक्तुं शक्यत्वाच्च। पक्ता जातः पाचको जात इत्यत्र कृतिबोधेन व्यभिचाराच्च। न च तत्र लक्षणया कृतिबोधः, लाघवात् कर्तर्येव लक्षणा कृति शक्तिरित्यस्यापि वक्तुमशक्यत्वात्।

ननूक्तयुक्त्याख्यातस्य कर्तृवाचकत्वेऽपि तद्गतसंख्याया 'एको वृक्षः पञ्च नौका भवन्ति' इत्यादौ 'गृह्णातिवाचकः संख्यां प्रकृतेर्विकृतेर्नहि' इति नियमाद् वृक्षगत एकत्वाभिधानेनैकवचनमेव प्राप्नातीति चेन्न, गृह्णातीत्यादिवचनस्य[26] च्व्यन्तविषयत्वात्। अत एव 'संघा भवन्ति ब्राह्मणः' इत्यादौ बहुवचनम्। च्व्यन्तो सर्वत्र मद्भवसि त्वं त्वद्भवाम्यहम् इत्यादौ प्रकृत्यर्थयुष्मदर्थसामानाधिकरण्यान्मध्यमोत्तमदर्शनेन संख्याया अपि प्रकृतावेवान्वयस्योचितत्वात्। एतेन गृह्णातीति वचनं दृष्ट्वा 'एको वृक्षः पञ्च नौका भवति' इति एकवचनं भवतीति वदन्तः परास्ताः।

अत्राख्याते आख्यातवाच्यकारकसमानवचनत्वं नियमः। तेनादृष्टस्य पुण्यपापादिद्व्यर्थबोधकत्वेऽपि 'अदृष्टमस्ती'ति[27] एकवचनमेव। दारा शब्दस्य बह्वर्थत्वाभावेऽपि 'दाराः सन्ति' इति बहुवचनमेव। 'पुष्पवन्तौ स्तः' इति द्विवचनमेव। सैन्धवपदे यथाविवक्षमेकवचनद्विवचने भवतः। एवं 'वेदाः प्रमाणम, 'समुदिता हेतुः' इत्यादौ उद्देश्यविधेययोर्भिन्नविभक्तित्वे अध्याहृतक्रियावाचकपदमेकवचनान्तमेव प्रयोक्तव्यम्। विधेययोः प्रमाणहेत्वोरेकवचनान्तत्वानुरोधात्। यदि तु 'शास्त्राणि चेत् प्रमाणं स्युः' इत्यादिप्रयोगदर्शनात् सन्तीति बहुवचनान्तमेव प्रयुज्यते इति निश्चयस्तदाख्यातेनोद्देश्यगताऽपि संख्योच्यते क्वचिदित्याश्रयणीयम्, न तु विशेषणविशेष्यवाचकयोः, समानवचनत्वनियामाद्। 'वेदाः प्रमाणम्',

'समुदिता हेतुः' इत्यादीनामसाधुत्वमेवेति चेन्न, असति प्रयोजने समानवचनत्वनियमः। प्रकृते तु सर्ववेदेसु एकरूपप्रामाण्यबोधकत्वेन व्यासज्यवृत्तिहेतुत्वबोधकत्वेन च सार्थक्यात्। अत एव प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीत्येव प्रयोगः। अत भिन्नरूपप्रामाण्यस्यैव विवक्षितत्वात्। अत एव वेदाः प्रमाणानि प्रत्यक्षानुमानोपमानशब्दाः प्रमाणमित्यादीनामसाधुत्वम्।

किं च नैयायिकमते 'न पचति' इत्यादौ पाकानुकूलकृत्यभाव इति बोधः। तथा च भावनान्वयिनि संख्यान्वयनियमादभावे एव संख्यान्वयः स्यात्, न चेष्टापत्तिः, अभावेस्यैकत्वेन पचतः इति द्वित्वसंख्याऽनन्वितैव स्यात्। ननु साधुत्वार्थमेव तत्र वचनम्, सम्भवत्यर्थसाधुत्वे शब्दसाधुत्वस्यान्याय्यत्वात्। ननु तद्वाक्यमसाध्वेवेति चेन्न, सूत्ररीत्या साधुत्वे सम्भवति स्वेच्छयाऽसाधुत्वकल्पनस्यान्याय्यत्वात्। वैयाकरणमते तु 'न पचति' इत्यस्यैकाश्रयिकपचिक्रियाभाव इति बोधः, अत्यन्ताभावबोधकनञर्थे क्रियाया एव प्रतियोगितासम्बन्धेनान्वयस्याव्युत्पन्नत्वात्। नन्वेमभावस्य विशेष्यत्वे क्रियत्वे क्रियाप्रधानमाख्यातमिति वचनविरोध इति चेन्न, आख्यातार्थं प्रति क्रियायाः प्राधान्यमिति तदर्थत्वात्। किं च तव मते घटो नास्तीत्यादौ घटप्रतियोगिकोऽभावोऽस्तीति बोधः।[28] तत्र चाभावप्रतियोगिनि संख्यान्वयः स्वीकार्यः। अभावप्रतियोगी घटोऽस्तीति बोधे तु 'क्व'[29] इत्यधिकरणाकाङ्क्षा मन्मते नञर्थस्य विशेष्यत्वे विशेषणत्वे च न कोऽपि दोषः। यत्पदोपस्थापितस्य प्रतियोगिनोऽनुयोगिन्याधाराधेयभावसम्बन्धेनान्वय बोधस्तत्र तत्संसर्गाभावस्यापि तथात्वात्। क्रियाश्रयस्यैवाभावाश्रयत्वान्न 'क्व'[30] इत्यधिकरणाङ्क्षेति लाघवम्। ननु शशशृङ्गं नास्तीत्यादौ उभयमतेऽपि कथं बोधः, शृङ्गे शशसम्बन्धस्याप्रसिद्धत्वादिति चेत् , न, अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हीत्यभियुक्तोक्त्या बाधितोऽपि संसर्गो भासत एवेति स्वीकारात्। अन्यथार्थप्रतीतिजनकरूपार्थत्त्वाभावात् प्रातिपदिकत्वं न स्यात्। न च समासग्रहणात् तत्सिद्धिः, तस्य नियमार्थत्वात्। अन्यथा मूलकेनोपदंशमित्यादिवाक्यस्यापि संज्ञापत्त्या बहूपप्लवः स्यात्। न च शाब्दबोधे योग्यतानिश्चयस्य प्रतिबन्धकत्वात् कथमेतदिति वाच्यम् , वैयाकरणैः अयोग्यतानिश्चयस्य योग्यताऽज्ञानस्य वा प्रतिबन्धकारणत्वास्वीकारात्। अत एव 'यस्य क्षोणिपतेः परार्द्धपरया लक्षीकृताः संख्यया' इत्यादौ, 'एष वन्ध्यासुतो याति खपुष्पकृतशेखरः' इत्यादौ चायोग्यतानिश्चये सत्यपि योग्यताज्ञानाभावेऽपि च शाब्दबोधः। न च केवलं पदार्थोपस्थितिमात्रं, न शाब्दबोध इति वाच्यम् , चमत्कारानापत्तेः प्रातिपदिकत्वानापत्तेश्च। न चैवं 'वह्निना सिञ्चेद्' इत्यतोऽपि बोधः स्यादिति वाच्यम्, इष्टापत्तेः। न च प्रवृत्तिरपि स्यात्, तत्र योग्यताऽनिश्चयस्य प्रतिबन्धकत्वात्। अत एव 'शम्भुर्विश्वमवत्यद्य स्वीकृत्य समदृष्टिताम्' इत्यादौ तथा 'रण्डपुत्रः' इत्यादौ वाऽयोग्यतानिश्चये सत्यपि बोधः। एतेन शशशृङ्गजन्यमिदं कार्मुकमित्यादौ शृङ्गे शशसम्बन्धाभावदशायां शाब्दबोधस्य ब्रह्मणाऽप्यापादयितुमशक्यत्वादिति नैयायिकोक्तमपास्तम्।

लटो वर्तमानत्वं प्रारब्धापरिसमाप्तत्वरूपमर्थः। ननु वर्तमानेऽपि पाके आश्रयकृतिध्वंसमादायापाक्षीदित्यस्य भाविकृतिमादाय पक्ष्यतीत्यापत्तेरिति चेन्न, चरमकृतिध्वंसस्य

भूतप्रत्ययेन आद्यकृतिध्वंसस्य भविष्यत्प्रत्ययेनाभिधानात्। 'यजति स्म युधिष्ठिरः', 'एवं स्म पिता ब्रवीति' इत्यादौ स्म-समभिव्याहृतलटः परोक्षापरोक्षभूतानद्यतनत्वमर्थः। एवमन्यत्रापि यथायथमूह्यम्। यत्तु भावनायाश्च विशेष्यत्वेनान्वययोग्यः कर्मत्वाद्यनवरुद्ध इतराविशेषण इति वा प्रथमान्तपदोपस्थाप्यः, तथैवाकाङ्क्षितत्वात्। तत्र कर्मत्वादिविशेषणं तु चन्द्र इव मुखमस्तीत्यादौ चन्द्रे भावनाविशेष्यत्ववारणायेत्यूचुर्नैयायिकनव्याः, तन्न, चैत्रेण घट एव दृश्यते इत्यत्रैवकारार्थेऽन्यस्मिन्नपि घटस्य विशेषणतया इतरविशेषणत्वेन तात्पर्यज्ञानाभावस्यासत्त्वात्। घटस्य भावनाविशेष्यत्वं न स्यात्। न च निपातातिरिक्तेति वाच्यम्, नारद इत्यबोधि स इत्यादौ नारदादीनामपि क्रियाविशेष्यत्वापत्तेः। भाष्यकारादिग्रन्थकारैः क्रियाविशेष्यकबोधस्य स्वीकृतत्वेन ग्रन्थकाराणां प्रथमान्तविशेष्यकबोधे आकाङ्क्षाविरहाच्च।

इति श्रीमन्मौनिकुलातिलकायमानगोवर्धनभट्टात्मजरघुनाथभट्ट सुतश्रीकृष्णभट्टविरचित आख्यातविवेकः[31] समाप्तिमगमत्।

**टिप्पण्यः**

1. क- 'वाग्विजयाय नमः'
2. ख - 'पदोपात्तत्वं'
3. ख- 'मत्वा'
4. ख- 'अनिघात'
5. ख- 'समवायं' इति नास्ति
6. क- 'करणरूपेणाप्यन्वयोऽस्त्विति'
7., 7.1 क- 'करणेतररूपेणेत्यपि वाच्यम् इत्याहुर्वैयाकरणनव्याः, तन्मन्दम्। तत्र हि फलस्य क्रियायामन्वयो न तु क्रियायाः। न च 'कृष्णं नमेच्चेत् सुखं यायत्' इत्यादौ नमनक्रियायाः करणरूपेणान्वयोऽस्तु इति वाच्यम्' एतावान् पाठः नास्ति।
8. क- 'वाच्यभिन्ना'
9. क,ख- 'शब्दयोः'
10. क- 'भान'
11. क- 'रूपद्वयार्थं'
12. क- 'तथापि'
13. क- 'कर्त्रादिवत्'
14. ख- 'कृति'
15. क- 'उच्चारणीये'

16. ग– 'कृति' इति नास्ति

17. क– 'चैत्रेण'

18. क– 'चैत्र'

19. क– 'चैत्रे'

20. ख– 'किं च कृति' इत्यधिकः पाठः

21. क– 'इति च' इति नास्ति

22.-22.1 ग– 'ननु मैत्रादन्य इत्यादौ ' इत्यारभ्य 'साधुतापत्तेः' इति यावत् पाठः नोपलभ्यते।

23. क– 'अभिहितत्वे'

24. क, ख– 'अभिधाने'

25. ख– 'द्वितीयोपपत्तेः'

26. क– 'सङ्गी'

27. ख– 'अदृष्टमाजीति'

28. ख– 'अभावोऽर्थबोधः'

29. ख– 'का'

30. ख– 'का'

31. क– 'आख्यातवादः'



**Under the Auspices of The Ministry of Human Resource Development Government of India**






# राष्ट्रियसंस्कृतसंस्थानम्

## गङ्गानाथझापरिसरः

चन्द्रशेखर-आजादोद्यानम्

प्रयागः - 211002